१"कर्तृकर्मणोः कृति" इति विशेषविधानात्। यद्यपि सम्बन्धसामान्यपरिग्रहेऽपि जिज्ञासायाः कर्मापेक्षत्वेन कर्मार्थत्वसिद्धिः, तथाऽप्याक्षेपतः प्राप्तादभिधानिकस्यैव ग्राह्यत्वात् कर्मणि षष्ठी गृह्यते। न च २ "प्रतिपदविधाना षष्ठी न समस्यते" इति कर्मणि षष्ठ्याऽस्समासनिषेधश्शङ्कनीयः," ३ "कृद्योगा च षष्ठी समस्यते" इति प्रतिप्रसवसम्भवात् ब्रह्मशब्देन च स्वभावतो*निरस्तनिखिलदोषोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते। सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः। बृहत्त्वं च स्वरूपेण गुणैश्च यत्रानवधिकातिशयं सोऽस्य मुख्योऽर्थः; स च सर्वेश्वर एव। अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः। तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः, अनेकार्थकल्पनायोगात्, भगवच्छब्दवत्। तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः। अतस्सर्वेश्वर एव जिज्ञासाकर्मभूतं ब्रह्म॥

ज्ञातुमिच्छा जिज्ञासा। इच्छाया इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिह विधीयते॥

मीमांसापूर्वभागज्ञातस्य कर्मणोऽल्पास्थिरफलत्वादुपरितनभागावसेयस्य ब्रह्मज्ञानस्यानन्ताक्षयफलत्वाच्च पूर्ववृत्तात्कर्मज्ञानादनन्तरं तत एव हेतोर्ब्रह्म ज्ञातव्यमित्युक्तं भवति। तदाह वृत्तिकारः—४ "वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषा" इति। वक्ष्यन्ति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यं—५ "संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः"! इति अतः प्रतिपिपादयिषितार्थभेदेन षट्कभेदवदध्यायभेदवच्च पूर्वोत्तरमीमांसयोर्भेदः। मीमांसा-

*निरस्त कतिपय दोषत्वं, निरस्त निखिल दोषत्वं च केषांचिद् बद्धानां मुक्तानां नित्यानामप्यस्तीति, तद्व्यावृत्त्यर्थं स्वभावतो निरस्त निखिल दोष इत्युक्तम्; नित्य सिद्धानामपि भगवन्नित्य संकल्पाधीनं हि नित्य निर्दोषत्वम्। स्वभावत इत्युत्तरत्रानुषङ्गः; तेन गुणानामप्यविद्या कल्पितत्व पक्ष व्यावृत्तिः।

! मोक्ष रूपैक प्रयोजनक प्रतिपत्ति विषयार्थकत्वमैक शास्त्र्यम्। मोक्षस्य साक्षात्कर्म फलत्वाभावेऽपि परम्परया तत्फलत्वमस्त्येव।

१ अष्टा० २ अ० ३ पा० ६५ सू०। २ अष्टा० २ अ० २ पा० १० सू० वा०।
३ अष्टा० २ अ० २ पा० ८ सू० वा०। ४ बोधायनवृत्तिः। ५ बोधायनवृत्तिः।

शास्त्रम्—१"अथातो धर्मजिज्ञासा" इत्यारभ्य २"अनावृत्तिश्शब्दाद्-नावृत्तिश्शब्दात्" इत्येवमन्तं सङ्गतिविशेषेण १ विशिष्टक्रमम्। तथाहि-प्रथमं तावत् ३"स्वाध्यायोऽध्येतव्यः" इत्यध्ययनेनैव स्वाध्यायशब्द-वाच्यवेदाख्याक्षरराशेर्ग्रहणं विधीयते ॥

तच्चाध्ययनं किंरूपं कथं च कर्तव्यमित्यपेक्षायाम् ४"अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेत्"इत्यनेन,

५"श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान् ॥"

इत्यादिव्रतनियमविशेषोपदेशैश्चापेक्षितानि विधीयन्ते ॥

एवं सत्सन्तानप्रसूतसदाचारनिष्ठात्मगुणोपेतवेदविदाचार्यो-पनीतस्य व्रतनियमविशेषयुक्तस्याऽऽचार्योच्चारणानूच्चारणरूपमक्षर-राशिग्रहणफलमध्ययनमित्यवगम्यते ॥

अध्ययनं च स्वाध्यायसंस्कारः, ६" स्वाध्यायोऽध्येतव्यः" इति स्वाध्यायस्य कर्मत्वावगमात्। संस्कारो हि नाम कार्यान्तरयो-ग्यताकरणम्। संस्कार्यत्वं च स्वाध्यायस्य युक्तम्, धर्मार्थकाममोक्ष-रूपपुरुषार्थचतुष्टयतत्साधनावबोधित्वात्, जपादिना स्वरूपेणापि तत्साधनत्वाच्च ॥

एवमध्ययनविधिर्मन्त्रवत् नियमवदक्षरराशिग्रहणमात्रे पर्य-वस्यति। अध्ययनगृहीतस्य स्वाध्यायस्य स्वभावत एव प्रयोजनवद्-

१ अत्रामी संगति विशेषा अभिप्रेताः पाठ क्रमः; चेतनानां त्रिवर्गे प्रथम प्रावण्य संभव रूपोऽर्थस्वभावः; औपनिषदेष्वङ्गाङ्गि भाव प्रति पादक वाक्येषु यज्ञादि कर्मणां पदार्थत्वेन संबन्धः; कासुचिद् विद्यासु यज्ञ तदुपकरणादीनां दृष्टि विशेषणत्वोक्तिः; कर्म ब्रह्म विषयो र्दृष्टान्त दार्ष्टान्तिक भावः, विद्या कर्म-णोरुत्पाद्योत्पादक भावात् तच्छेष भूत विचारयोस्तु तत्क्रम भावत्वोपपत्तिः, व्याख्यान भूत मीमांसायां चोत्तर भागस्य पूर्व भागोक्त न्यायसापेक्षत्वञ्चेति ॥

१ कर्ममी० १ अ० १ पा० १ सू०। २ शारीरकम० ४ अ० ४ पा० २२ सू०। ३ यजुरारण्यके २ प्र० १५ अनु०। ४ शतपथब्राह्मणम्। ५ मनुस्मृ० ४ अ० ९५ श्लोक। ६ यजुरारण्यके० २ प्र० १५ अनु०।

र्थावबोधित्वदर्शनात् । गृहीतात्स्वाध्यायादवगम्यमानात् प्रयोजनवतोऽर्थानापाततो दृष्ट्वा तत्स्वरूपप्रकारविशेषनिर्णयफलवेदवाक्यविचाररूपमीमांसाश्रवणेऽधीतवेदः पुरुषस्स्वयमेव प्रवर्तते । तत्र कर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलत्वं दृष्ट्वाऽध्ययनगृहीतस्वाध्यैकदेशोपनिषद्वाक्येषु चामृतत्वरूपानन्तस्थिरफलापातप्रतीतेस्तन्निर्णयफलवेदान्तवाक्यविचाररूपशारीरकमीमांसायामधिकरोति । तथा च वेदान्तवाक्यानि केवलकर्मफलस्य क्षयित्वं ब्रह्मज्ञानस्य चाक्षयफलत्वं दर्शयन्ति—१ " तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते " २ "अन्तवदेवास्य तद्भवति" ३ "न ह्यध्रुवैः प्राप्यते " ४ " प्लवा ह्येते अदृढा यज्ञरूपाः " ५ "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिश्श्रोत्रियं ब्रह्मनिष्ठं ॥ तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय। येनाक्षरं पुरुषं वेद सत्यं प्रोवाच ( क ) तां तत्त्वतो ब्रह्मविद्याम् " ६ "ब्रह्मविदाप्नोति परम् " ७ " न पुनर्मृत्यवे तदेकं पश्यति " ८ " न पश्यो मृत्युं पश्यति " ९ " स स्वराड्भवति " १० "तमेवं विद्वानमृत इह भवति " ११ " पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति "—इत्यादीनि ॥

ननु च साङ्गवेदाध्ययनादेव कर्मणां स्वर्गादिफलत्वम्, स्वर्गादीनां च क्षयित्वं, ब्रह्मोपासनस्यामृतत्वफलत्वं च ज्ञायत एव। अनन्तरं मुमुक्षुर्ब्रह्मजिज्ञासायामेव प्रवर्तताम्; किमर्था धर्मविचारापेक्षा ? । एवं तर्हि शारीरकमीमांसायामपि न प्रवर्तताम्, साङ्गाध्ययनादेव कृत्स्नस्य ज्ञातत्वात्। सत्यम्; आपातप्रतीतिर्विद्यत एव, तथापि न्यायानुगृहीतस्य वाक्यस्यार्थनिश्चायकत्वादापातप्रतीतो-

१ छान्दोग्ये० ८ प्रपाठके० १ खण्डे० ६ वा० । २ बृहदारण्यके० ५ अध्याये० ८ ब्राह्मणे० १० वा० । ३ कठे० २ वल्ल्यां० १० वा० । ४ मुण्डकोपनिषदि० १ मुण्डके० २ ख० ७ वा० । ५ मुण्ड-उ० १ मुण्ड० २ ख० १२-१३ वा० । ६ तैत्तिरीये आनन्द० २ अ० १ अनु० १ वा० । ७ । ८ छा-उ० ७ प्र० २६ ख० वा० । ९ छा-उ० ७ प्र० २५ ख० २ वा० । १० पुरुषसूक्ते० २० वा० । ११ श्वेताश्वतरे० १ अ० ६ वा० । ( क ) प्रब्रूयादित्यर्थः ॥

ऽप्यर्थस्संशयविपर्ययौ नातिवर्तते; अतस्तन्निर्णयाय वेदान्तवाक्यविचारः कर्तव्यः—इति चेत्; तथैव धर्मविचारोऽपि कर्तव्य इति पश्यतु भवान् ॥

## ( लघुपूर्वपक्षः )

ननु च—ब्रह्मजिज्ञासा यदेव नियमेनापेक्षते, तदेव पूर्ववृत्तं वक्तव्यम्। न धर्मविचारापेक्षा ब्रह्मजिज्ञासायाः, अधीतवेदान्तस्यानधिगतकर्मणोऽपि वेदान्तवाक्यार्थविचारोपपत्तेः। कर्माङ्गाश्रयाण्युद्गीथाद्युपासनान्यत्रैव चिन्त्यन्ते; *तदनधिगतकर्मणो न शक्यं कर्तुम्—इति चेत्; अनभिज्ञो भवान् शारीरकशास्त्रविज्ञानस्य। अस्मिन् शास्त्रे अनाद्यविद्याकृतविविधभेददर्शननिमित्तजन्मजरामरणादिसांसारिकदुःखसागरनिमग्नस्याखिलदुःखमूलमिथ्याज्ञाननिबर्हणायाऽऽत्मैकत्वविज्ञानं प्रतिपिपादयिषितम्। अस्य हि भेदावलम्बि कर्मज्ञानं क्वोपयुज्यते? प्रत्युत विरुद्धमेव। उद्गीथादिविचारस्तु कर्मशेषभूत एव ज्ञानरूपत्वाविशेषादिहैव क्रियते। स तु न साक्षात्सङ्गतः। अतो यत्प्रधानं शास्त्रं, तदपेक्षितमेव पूर्ववृत्तं किमपि वक्तव्यम् ॥

बाढम्; तदपेक्षितं च कर्मविज्ञानमेव, कर्मसमुच्चितात् ज्ञानादपवर्गश्रुतेः। वक्ष्यति च—१ "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति।

*: एकस्यसाम्नः पञ्च भागाः सन्ति, ते प्रस्तावोद्गीथ प्रतिहारो प ञ्च निधनाख्याः। एते भागा भक्ति शब्दाभिधेयाः, तासु पञ्च सुभक्तिषु प्रस्तावो-हिङ्कारपूर्वङ्गीयते। उद्गीथः प्रणवपूर्वङ्गीयते, तत्र पञ्च विध सामोपासनं कचि द्विधीयते, लोकेषु पञ्चविधं सामोपासीतेति ॥ कचित्सा मावयवेषु पञ्चस्वेकैकावय वोपासनं विधीयते। तत्रोद्गीथा वयवभूत प्रणवोपासनं विधीयते। ओमित्येतदक्षर मु उद्गीथ मुपासीतेति। माङ्गाश्रयाणि कर्माङ्गभूतोद्गीथादि विषयाणि। अनधिगत कर्मण उद्गीथाद्युपासन चिन्तनं न शक्यं कर्तुमिति ॥

१ शारीरकमी० ३ अ० ४ पा० २६ सू०।

अपेक्षिते च कर्मण्यज्ञाते केन समुच्चयः केन नेति विभागो न शक्यते ज्ञातुम्। अतस्तदेव पूर्ववृत्तम्॥

नैतद्युक्तं, सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेवाविद्यानिवृत्तेः; अविद्यानिवृत्तिरेव हि मोक्षः। वर्णाश्रमविशेषसाध्यसाधनेतिकर्तव्यताद्यनन्तविकल्पास्पदं कर्म सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्तेः कथमिव साधनं भवेत्?। श्रुतयश्च कर्मणामनित्यफलत्वेन मोक्षविरोधित्वं, ज्ञानस्यैव मोक्षसाधनत्वं च दर्शयन्ति—१ "अन्तवदेवास्य तद्भवति" २ "तद्यथेह कर्मचितो लोकः क्षीयते। एवमेवामुत्र पुण्यचितो लोकः क्षीयते" ३ "ब्रह्मविदाप्नोति परम्" ४ "ब्रह्म वेद ब्रह्मैव भवति" ५ "तमेव विदित्वाऽतिमृत्युमेति"—इत्याद्याः॥

यदपि चेदमुक्तं—यज्ञादिकर्मापेक्षा विद्येति। तद्वस्तुविरोधात् श्रुत्यक्षरपर्यालोचनया चान्तःकरणनैर्मल्यद्वारेण विविदिषोत्पत्तावुपपद्यते; न फलोत्पत्तौ, "विविदिषन्ति" इति श्रवणात्। विविदिषायां जातायां ज्ञानोत्पत्तौ शमादीनामेवान्तरङ्गोपायतां श्रुतिरेवाऽऽह—६ "शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत्"—इति॥

तदेवं जन्मान्तरशतानुष्ठितानभिसंहितफलविशेषकर्ममृदितकषायस्य विविदिषोत्पत्तौ सत्यां ७ "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" ८ "सत्यं ज्ञानमनन्तं ब्रह्म" ९ "निष्कलं निष्क्रियं शान्तम्" १० "अयमात्मा ब्रह्म" ११ "तत्त्वमसि" इत्यादिवाक्य-

---

१ बृ-उ० ५ अ० ८ ब्रा० १० वा०। २ छा-उ० ८ प्र० १ ख० ६ वा०। ३ तै-उ० आन० २ अ० १ अनु० १ वा०। ४ मुण्ड-उ० ३ मुण्ड० २ ख० ९ वा०। ५ श्वे-उ० ३ अ० ८ वा०। ६ बृ-उ० ६ अ० ४ ब्रा० २३ वा०। ७ छा-उ० ६ प्र० २ ख० १ वा०। ८ तै-उ० आन० २ अ० १ अनु० १ वा०। ९ श्वे-उ० ६ अ० १९ वा०। १० बृ-उ० ६ अ० ४ ब्रा० ५ वा०। ११ छा-उ० ६ प्र० ८ ख० ७ वा०।

जन्यज्ञानादविद्या निवर्तते। वाक्यार्थज्ञानोपयोगीनि च श्रवणमनननिदिध्यासनानि। श्रवणं नाम वेदान्तवाक्यानि आत्मैकत्वविद्या प्रतिपादकानीति तत्त्वदर्शिनआचार्यान्न्याययुक्तार्थग्रहणम्। एवमाचार्योपदिष्टस्यार्थस्य स्वात्मन्येवमेव युक्तमिति हेतुतः प्रतिष्ठापनं मननम्। एतद्विरोध्यनादिभेदवासनानिरसनायास्यैवार्थस्यानवरतभावना निदिध्यासनम्। श्रवणादिभिर्निरस्तसमस्तभेदवासनस्य वाक्यार्थज्ञानमविद्यां निवर्तयतीत्येवंरूपस्य श्रवणस्यावश्यापेक्षितमेव पूर्ववृत्तं १ वक्तव्यम्। तच्च नित्यानित्यवस्तुविवेकः, शमदमादिसाधनसम्पत्, इहामुत्रफलभोगविरागः, मुमुक्षुत्वं चेत्येतत्साधनचतुष्टयम्। अनेन विना जिज्ञासानुपपत्तेः, अर्थस्वभावादेवेदमेव पूर्ववृत्तमिति ज्ञायते॥

एतदुक्तं भवति—ब्रह्मस्वरूपाच्छादिकाविद्यामूलमपारमार्थिकं भेददर्शनमेव बन्धमूलम्। बन्धश्चापारमार्थिकः। स च समूलोऽपारमार्थिकत्वादेव ज्ञानेनैव निवर्त्यते। निवर्तकं च ज्ञानं तत्त्वमस्यादिवाक्यजन्यम्। तस्यैतस्य वाक्यजन्यस्य ज्ञानस्य स्वरूपोत्पत्तौ कार्ये वा कर्मणो नोपयोगः। विविदिषायामेव तु कर्मणामुपयोगः। स च पापमूलरजस्तमोनिबर्हणद्वारेण सत्त्वविवृद्ध्या भवतीतीममुपयोगमभिप्रेत्य "ब्राह्मणा विविदिषन्ति" इत्युक्तमिति॥

अतः कर्मज्ञानस्यानुपयोगात् उक्तमेव साधनचतुष्टयं पूर्ववृत्तमिति वक्तव्यम्॥

## ( लघुसिद्धान्तः )

अत्रोच्यते यदुक्तमविद्यानिवृत्तिरेव मोक्षः सा च ब्रह्मविज्ञानादेव भवति॥ इति। तदभ्युपगम्यते। अविद्यानिवृत्तये वेदान्तवाक्यैर्विधित्सितं ज्ञानं किंरूपमिति विवेचनीयम्—किं वाक्याद्वाक्यार्थज्ञानमात्रम्, उत तन्मूलमुपासनात्मकं ज्ञानम्?—इति। न तावद्वाक्यजन्यं ज्ञानं, तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः; वाक्यमात्रे-

१ किमपि॥ इत्यधिकं क्वचित्पुस्तके दृश्यते॥

णाविद्यानिवृत्त्यनुपलब्धेश्च ×। न च वाच्यं–भेदवासनायामनिरस्तायां वाक्यमविद्यानिवर्तकं ज्ञानं न जनयति, जातेऽपि सर्वस्य सहसैव भेदज्ञानानिवृत्तिर्न दोषाय; चन्द्रैकत्वे ज्ञातेऽपि द्विचन्द्रज्ञानानिवृत्तिवत्। अनिवृत्तमपि छिन्नमूलत्वेन न बन्धाय भवति॥—इति, सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्तेः; सत्यामपि विपरीतवासनायामाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनात् +। सत्यपि वाक्यार्थज्ञाने अनादिवासनया मात्रया भेदज्ञानमनुवर्तत इति भवता न शक्यते वक्तुम्; भेदज्ञानसामग्र्या अपि वासनाया मिथ्यारूपत्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात् ज्ञानोत्पत्तावपि मिथ्यारूपायास्तस्या अनिवृत्तौ निवर्तकान्तराभावात् कदाचिदपि नास्या वासनाया निवृत्तिः। वासनाकार्यं भेदज्ञानं छिन्नमूलमथ चानुवर्तत इति बालिशभाषितम् ÷। द्विचन्द्रज्ञानादौ तु बाधकसन्निधावपि मिथ्याज्ञानहेतोः परमार्थतिमिरादिदोषस्य ज्ञानबाध्यत्वाभावेनाविनष्टत्वात् मिथ्याज्ञानानिवृत्तिरविरुद्धा। प्रबलप्रमाणबाधितत्वेन भयादिकार्यं तु निवर्तते। अपि च भेदवासनानिरसनद्वारेण ज्ञानोत्पत्तिमभ्युपगच्छतां कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति; भेदवासनाया अनादिकालोपचितत्वेनापरिमित-

× बहु शास्त्र विरोध–प्रत्यक्षविरोधरूपमिदं दूषण द्वयं वदता भगवताचापस्तम्बेनाऽपि वाक्यार्थ ज्ञानमात्रस्य मोक्ष साधनत्वं निरस्तम्। यथा— बुद्धे क्षेम प्रापणं तच्छास्त्रै र्विप्रतिषिद्धम्, बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत, एतेन परं व्याख्यातमिति।

+ यथा क्वचिद्देशे सर्प इति वाक्यात् चिरं भ्रमितः पुरुषो न तत्र सर्प इति आप्तोपदेशाज्जानाति। यथा च वनं न दग्धमिति श्रुत्वा चिरं भ्रान्तस्य पश्चात् तत्र गत्वाङ्गारादि लिङ्ग दर्शनेन दग्धमिति ज्ञानं जायते, यथा चिरं सर्पत्वेन वासिते वस्तुनि समीप गमनानन्तरमिन्द्रिय व्यापारेण रज्जु ज्ञानं सहैव जायते, तद्वदित्यभिप्रायेणाप्तोदेश लिङ्गादिभिर्बाधक ज्ञानोत्पत्ति दर्शनादित्युक्तम्।

÷ मृग तृष्णाम्भसि स्नातः शश शृङ्गधनुर्धरः।
एष वन्ध्या सुतो याति ख–पुष्प कृत शेखरः॥

त्वात्, तद्विरोधिभावनायाश्चाल्पत्वादनया तन्निरसनानुपपत्तेः। अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सितम्। तथा च श्रुतयः—१ "विज्ञाय प्रज्ञां कुर्वीत" २ "अनुविद्य विजानाति" ३ "ओमित्येवाऽऽत्मानं ध्यायथ" ४ "निचाय्य तं मृत्युमुखात्प्रमुच्यते" ५ "आत्मानमेव लोकमुपासीत" ६ "आत्मा वा अरे ‡ द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" ७ "सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः"—इत्येव माद्याः॥

अत्र "निदिध्यासितव्यः" इत्यादिनैकार्थ्यात् "अनुविद्य विजानाति" "विज्ञाय प्रज्ञाङ्कुर्वीत" इत्येवमादिभिर्वाक्यार्थज्ञानस्य ध्यानोपकारकत्वात् "अनुविद्य" "विज्ञाय" इत्यनूद्य "प्रज्ञाङ्कुर्वीत" "विजानाति" इति ध्यानं विधीयते। 'श्रोतव्यः" इति चानुवादः—स्वाध्यायस्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात्तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तते—इति श्रवणस्य प्राप्तत्वात्। श्रवणप्रतिष्ठार्थत्वान्मननस्य "मन्तव्यः" इति चानुवादः। तस्माद्ध्यानमेव विधीयते। वक्ष्यति च ८"आवृत्तिरसकृदुपदेशात्" इति। तदिदमपवर्गोपायतया विधित्सितं वेदनमुपासनमित्यवगम्यते, विद्युपास्योर्व्यतिकरेणोपक्रमोपसंहारदर्शनात्—९ "मनो ब्रह्मेत्युपासीत" इत्यत्र—"भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद," १० "न स वेद अकृत्स्नो ह्येषः—आत्मेत्येवोपासीत", ११—"यस्तद्वेद यत्स वेद स मयैतदुक्तः" इत्यत्र—१२ "अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से" इति॥

‡ अत्र पाठ क्रमादर्थ क्रमो बलीयानिति न्यायेन श्रवण-मनन-निदिध्यासनान्तरं द्रष्टव्य इति योजनीयम्, अन्यथा श्रवणादि विधिनामानर्थक्यात्।

१ बृ-उ० ६ अ० ४ ब्रा० २१ वा० । २ छा-उ० ८ प्र० १२ ख० ६ वा०।
३ मुण्ड-उ० २ मुण्ड० २ मु० ६ वा०। ४ कठ-उ० १ अ० ३ वल्ली० १५वा०
५ बृ-उ० ३ अ० ४ ब्रा० १५ वा०। ६ बृ-उ० ६ अ० ५ ब्रा० ६ वा०।
७ छा-उ० ८ प्र० ७ ख० १ वा०। ८ शारीर० ४ अ० १ पा० १ सू०।
९ छा-उ० ३ प्र० १८ ख० १ वा०। १० बृ-उ० ३ अ० ४ ब्रा० ७ वा०।
११ छा-उ० ४ प्र० १ ख० ४ वा०। १२ छा-उ० ४ प्र० २ ख० २ वा०।

ध्यानं च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपम्  १ "ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः"—इतिध्रुवायास्स्मृतेरपवर्गोपायत्वश्रवणात् । सा च स्मृतिर्दर्शनसमानाकारा—

२ "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥"

इत्यनेनैकार्थ्यात् । एवं च सति ३ "आत्मा वा अरे द्रष्टव्यः" इत्यनेन निदिध्यासनस्य दर्शनसमानाकारता विधीयते । भवति च स्मृतेर्भावनाप्रकर्षाद्दर्शनरूपता । वाक्यकारेणैतत्सर्वं प्रपञ्चितम्—४ "वेदनमुपासनं स्यात्तद्विषये श्रवणात्"—इति । सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनमित्युक्तम् । ५ "सकृत्प्रत्ययं कुर्याच्छब्दार्थस्यकृतत्वात्प्रयाजादिवत्" इति पूर्वं पक्षं कृत्वा—६ "सिद्धं तूपासनशब्दात्" इति वेदनमसकृदावृत्तं मोक्षसाधनमिति निर्णीतम् । ७ "उपासनं स्याद्ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च" इति तस्यैव वेदनस्योपासनरूपस्यासकृदावृत्तस्यध्रुवानुस्मृतित्वमुपवर्णितम् ॥

सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता । दर्शनरूपता च प्रत्यक्षतापत्तिः । एवं प्रत्यक्षतापन्नामपवर्गसाधनभूतां स्मृतिं विशिनष्टि—८ "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति । अनेन केवलश्रवणमनननिदिध्यासनानामात्मप्राप्त्यनुपायत्वमुक्त्वा यमेवैष आत्मा वृणुते तेनैव लभ्य इत्युक्तम् । प्रियतम एव हि वरणीयो भवति । यस्यायं निरतिशयप्रियस्स एवास्य प्रियतमो भवति । यथायं प्रियतम आत्मानं प्राप्नोति, तथा स्वयमेव भगवान् प्रयतत इति भगवतैवोक्तम्—

---

१ छा-उ० ७ प्र० २६ ख० २ वा० ।  २ मुण्ड-उ० २ मु० २ ख० ८वा ।
३ बृ-उ० ६ अ० ५ ब्रा० ६ वा० । ४ ५, ६, ७, बोधायनवृत्तिः ।
८ मुण्ड-उ० ३ मु० २ ख० ३ वा० ।

१"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥"

इति,

२"प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥"—

इति च ॥

अतस्साक्षात्काररूपा स्मृतिस्स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया यस्य, स एव परेणाऽऽत्मना वरणीयो भवतीति तेनैव लभ्यते पर आत्मेत्युक्तं भवति । एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते, उपासनपर्यायत्वाद्भक्तिशब्दस्य अतएव श्रुतिस्मृतिभिरेवमभिधीयते—३"तमेव विदित्वाऽतिमृत्युमेति" ४"तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते",

५"नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ! ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ! ॥"

६"पुरुषस्स परः पार्थ ! भक्त्या लभ्यस्त्वनन्यया ॥" इति ॥

एवंरूपाया ध्रुवानुस्मृतेस्साधनानि यज्ञादीनि कर्माणीति—७"यज्ञादिश्रुतेरश्ववत्"—इत्यभिधास्यते । यद्यपि विविदिषन्तीति यज्ञादयो विविदिषोत्पत्तौ विनियुज्यन्ते, तथाऽपि तस्यैव वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्याभ्यासाधेयातिशयस्याऽऽप्रयाणादनुवर्तमानस्य ब्रह्मप्राप्तिसाधनत्वात्तदुत्पत्तये सर्वाण्याश्रमकर्माणि यावज्जीवमनुष्ठेयानि । वक्ष्यति च—८"आप्रयाणात्तत्रापि हि दृष्टम्"

१ गीता १० अ० १० श्लोक । २ गीता ७ अ० १७ श्लोक । ३ श्वे-उ० ३ अ० ८ वा० । ४ पुरुषसूक्तम् १७ वा० । ५ गीता ११ अ० ५३, ५४ श्लोक । ६ गीता ८ अ० २२ श्लोक । ७ शारीरक मी० ३ अ० ४ पा० २६ सू० । ८ शा० ४ अ० १ पा० १२ सू० ।

१"अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्" "२सहकारित्वेन च"—इत्यादिषु । वाक्यकारश्च ध्रुवानुस्मृतेर्विवेकादिभ्य एव निष्पत्तिमाह—३"तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यस्संभवान्निर्वचनाच्च"—इति । विवेकादीनां स्वरूपं चाऽऽह—४"जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिर्विवेकः"—इति । अत्र निर्वचनम्—५"आहारशुद्धौ सत्त्वशुद्धिस्सत्त्वशुद्धौ ध्रुवा स्मृतिः"—इति ६"विमोकः कामानभिष्वङ्गः" इति । ७"शान्त उपासीत" इति निर्वचनम् । ८"आरम्भणसंशीलनं पुनःपुनरभ्यासः" इति । निर्वचनं च स्मार्तमुदाहृतं भाष्यकारेण—९ "सदा तद्भावभावितः"—इति । १०"पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया" इति । निर्वचनं—११"क्रियावानेष ब्रह्मविदां वरिष्ठः"१२"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन"—इति च ।१३"सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि" इति । निर्वचनं - १४"सत्येन लभ्यः" १५"तेषामेवैषः—विरजो ब्रह्मलोकः"-इत्यादि । "१६देशकालवैगुण्याच्छोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसोऽवसादः"इति । तद्विपर्ययोऽनवसादः । निर्वचनं—१७"नायमात्मा बलहीनेन लभ्यः"—इति । १८"तद्विपर्ययजा तुष्टिरुद्धर्षः" इति ।तद्विपर्ययोऽनुद्धर्षः । अतिसन्तोषश्च विरोधीत्यर्थः । निर्वचनमपि—१९"शान्तो दान्तः"—इति । एवंनियमयुक्तस्याऽऽश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति ॥ तथा च श्रुत्यन्तरम्—

*२०"विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥"—इति ॥

---

१ शा० ४ अ० १पा० १६ सू० । २ शा० ३ अ० ४ पा० ३३ सू० ३ बोधायनवृत्तिः । ४ वृत्तिः । ५ छा-उ० ७ प्र० २६ ख० २ वा० । ६ वृत्तिः । ७ छा-उ० ३ प्र० १४ ख० १ वा० । ८ वृत्तिः । ९ गीता ८ अ० ६ श्लो० १० वृत्तिः । ११ मु०-उ० ३ मु० १ ख० ४ वा० । १२बृ उ० ६ अ० ४ ब्रा० २२ वा० । १३वृत्तिः। १४ मु -उ० ३ मु० १ ख ५ वा० । १५ प्रश्न-उ १प्रश्ने १५ १६ वा । १६ वृत्तिः । १७ मु-उ०३ मु० २ ख० ४ वा० । १८ वृत्तिः । १९ बृ उ० ६ अ० ४ ब्रा० २३ वा० २० ईशा-उ० ११ वा० ।

* २० विद्यां - ब्रह्मोपासन रूपाम् अविद्या- तदङ्गभूत कर्मात्मिकां च एतदुभयं सह वेद अङ्गाङ्गिभावेन सहानुष्ठेयं वेदेत्यर्थः ।

अत्राविद्याशब्दाभिहितंवर्णाश्रमविहितं कर्म। अविद्यया—कर्मणा। मृत्युं ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म। तीर्त्वा—अपोह्य। विद्यया ज्ञानेन। अमृतं ब्रह्म। अश्नुते प्राप्नोतीत्यर्थः। मृत्युतरणोपायतया प्रतीता अविद्या विद्येतरद्विहितं कर्मैव, यथोक्तम् -

१ " इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥" इति ॥

ज्ञानविरोधि च कर्म पुण्यपापरूपम्। ब्रह्मज्ञानोत्पत्तिविरोधित्वेनानिष्टफलतयोभयोरपि पापशब्दाभिधेयत्वम्। अस्य च ज्ञानविरोधित्वं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिद्वारेण पापस्य च ज्ञानोदयविरोधित्वम्—२ "एष एवासाधु ॐ कर्मकारयति तं यमधो निनीषति"—इति श्रुत्याऽवगम्यते। रजस्तमसोर्यथार्थज्ञानावरणत्वं, सत्त्वस्य च यथार्थज्ञान हेतुत्वं भगवतैव प्रतिपादितं—३ "सत्त्वात्सञ्जायते ज्ञानम्" इत्यादिना। अतश्च ज्ञानोत्पत्तये पापं कर्म निरसनीयम्। तन्निरसनं च अनभिसंहितफलेनानुष्ठितेन धर्मेण। तथा च श्रुतिः—४ "धर्मेण पापमपनुदति"—इति। तदेवं ब्रह्मप्राप्ति साधनं ज्ञानं सर्वाश्रमकर्मापेक्षम्। अतोऽपेक्षितकर्मस्वरूपज्ञानं, केवल कर्मणामल्पास्थिरफलत्वज्ञानं च कर्ममीमांसावसेयमिति, सैवापेक्षिता ब्रह्मजिज्ञासायाः पूर्ववृत्ता वक्तव्या ॥

ॐ यद्यप्युन्नयनाधोनयने स्वर्ग नरक प्रापण रूपे, तथाप्यसाधु कर्मणां ज्ञान विरोधित्वं सिद्ध्यति, तथाहि—उन्निनीषाऽधोनिनीषयो र्निर्हेतुकत्वे परमात्मनो वैषम्य नैर्घृण्य प्रसंगात्, नेयच्य चेतन गोचरं यद्वृत्त द्वयं गति द्वय निनीषा निमित्ताद्धि प्रभूतपुण्यपाप कर्तृविषयं विज्ञायते, तत्र गति द्वय पर्यासोत्तरोत्तर साध्वसाधु कर्म कारयितृत्वमीश्वरस्य न भूतावेशाद्धि वज्जीव वु द्ध्यनपेक्षितं भवति, तथा सति ज्ञान चिकीर्षाद्यभावाद्वायूदकाद्यु ह्यीन तृणादेरिव संसारिणां शास्त्र वश्यत्वाभावेन कर्मफल भोगानुपपत्तेः

१ विष्णुपुराणे ६ अंश ६ अध्याये १२ श्लोक। २ कौषीतक्यां ३ अ० ८ वा०। ३ गीता १४ अ० १७ श्लोक। ४ तैत्ति० ६ प्रश्न नारायणे ५० अनु०

अपि च नित्यानित्यवस्तुविवेकादयश्च, मीमांसाश्रवणमन्तरेण न संपत्स्यन्ते, फलकरणेतिकर्तव्यताधिकारिविशेषनिश्चयादृते, कर्मस्वरूपतत्फलतत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनां दुरवबोधत्वात्, एषां साधनत्वं च विनियोगावसेयम्। विनियोगश्च + श्रुतिलिङ्गादिभ्यः। स च तार्तीयः। उद्गीथाद्युपासनानि कर्मसमृद्ध्यर्थान्यपि ब्रह्मदृष्टिरूपाणि, ब्रह्मज्ञानापेक्षाणीति, इहैव चिन्तनीयानि। तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पादकानीति तत्साद्गुण्यापादनान्येतानि सुतरामिहैव सङ्गतानि। तेषां च कर्मस्वरूपाधिगमापेक्षा ÷ सर्वसम्मता ॥

## ❀ महापूर्वपक्षः ❀

यदप्याहुः—अशेषविशेषप्रत्यनीकचिन्मात्रं ब्रह्मैव परमार्थः, तदतिरेकिनानाविधज्ञातृज्ञेयतत्कृतज्ञानभेदादिसर्वं तस्मिन्नेव—

---

+ इदं प्रदर्शनार्थमुक्तं कर्मविचारोक्त कृत्स्न न्याय सापेक्षत्वाद् ब्रह्म विचारस्य। एतानि हि कर्म मीमांसाध्यायानां प्रमेयाणि—प्रथमेऽध्याये प्रमाण लक्षणं वृत्तम्। द्वितीयेऽध्याये शाख्र भेदः, कर्मभेदोवाभेदहेतुश्च शब्दान्तराभ्यास संख्या गुण प्रक्रिया नामधेयानि। तृतीयेऽङ्गनिरूपणम्—अङ्गत्व ज्ञापकानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानि। चतुर्थे—क्रत्वर्थ पुरुषार्थ भेद निरूपणेन पुरुषार्थैः क्रत्वर्थानां प्रयुक्तिर्निरूपिता। पञ्चमे क्रमः—क्रम प्रमाणानि श्रुत्यर्थपाठप्रवृत्तिमुख्यकाण्डानि। षष्ठेधिकारिनिरूपणम्। सप्तमे सामान्यातिदेशो निरूपितः। अष्टमे विशेषातिदेशः। नवमे ऊहः। दशमे बाधः। एकादश द्वादशयोस्तन्त्र प्रसङ्गौ।

÷ यत्त्वधीत वेदान्तस्य कर्माधिगमापेक्षा नास्तीत्युक्तं तदसङ्गतम्, वेदान्तेष्वप्युपाय पर मुक्ति पर वाक्य मात्राध्यायिनः पुरुषस्य ब्रह्मविचारेऽपि तृतीय चतुर्थाध्याय मात्र श्रवण प्रसङ्गात्। तृतीय चतुर्थयोः प्रथम द्वितीयोक्त न्याय सापेक्षत्वमस्तीति चेत्तर्हि, कृत्स्नस्य ब्रह्मविचारस्य कर्मविचार न्याय सापेक्षत्वात्तस्यैव पूर्वं वृत्तत्वम्। "यश्च ययोः समोदोषः परिहारस्तयो स्समः" इति न्यायात् ॥

परिकल्पितं मिथ्याभूतं—१ "सदेव * सोम्येदमग्र आसीदेकमेवाद्वितीयम्" २ "अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" ३ "सत्यं ज्ञानमनन्तं ब्रह्म" ४ "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" ५ "यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्" ६ "न दृष्टेर्द्रष्टारं पश्येः न मतेर्मन्तारं मन्वीथाः" ७ "आनन्दो ब्रह्म" ८ "इदं सर्वं यदयमात्मा" ९ "नेह नानाऽस्ति किञ्चन। मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति" १० "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्तत्केन कं विजानीयात्" ११ "वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" १२ "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति" १३ "न स्थानतोपि परस्योभयलिंगं सर्वत्र हि" १४ "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्"

१५ "प्रत्यस्तमित भेदं यत्सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानंब्रह्म संज्ञितम्॥"
१६ "ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥"

* मायावादि मते षड्विध तात्पर्य लिंगेन तथा स्वगोष्ठीनिष्ठ स्वानुभव सहायेन च सर्व वेदान्तानां निर्धर्मके ब्रह्मणि तात्पर्यम्। अतः सदेवेति विजातीय भेदो व्यावर्त्यते। एकमेवेति सजातीयभेदः। अद्वितीयमिति स्वगत भावाभावरूपभेदः। एवं समस्ताद्वैत सिद्धान्ते यावानर्थः, तत् सर्वं स्थाली पुलाक न्यायेनास्मिन्महा पूर्वपक्षे द्रष्टव्यम्।

१ छा-उ० ६ प्र० २ ख० १ वा० । २ मु-उ० १ मु० १ ख० ६ वा० । ३ तै-उ० आन० १ अनु० १ वा० । ४ श्वे उ० ६ अ० १९ वा ७ । ५ के-उ० २ ख० ३ वा० । ६ बृ-उ० ५ अ० ४ ब्रा० २ वा० । ७ तै-उ० भृगु ३ अनु० । ८ बृ-उ० ४ अ० ४ ब्रा० ६ वा० । ९ बृ उ० ६ अ० ४ ब्रा० १९ वा० । १० बृ उ० ४ अ० ४ ब्रा० १४ वा० । ११ छा० ६ प्र० १ ख० ४ वा० । १२ तै उ० आन० ७ अनु २ वा० । १३ शारी० ३ अ० २ पाद ११ सू० । १४ शा० ३ अ० २ पाद ३ सू० । १५ वि० पु० ६ अंश ७ अ० ५३ श्लो० । १६ वि० पु० १, २, ६ ।

१ "परमार्थस्त्वमेवैको नान्योस्ति जगतः पते! ॥"

२ "यदेतद्दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव ।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः॥
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥
ये तु ज्ञानविदश्शुद्धचेतसस्तेऽखिलं जगत् ।
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ! ॥"

३ "तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत् ।
विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः ॥"

४ "यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम! ।
तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते ॥"

५ "वेणुरन्ध्रविभेदेन भेदष्षड्जादिसंज्ञितः ।
अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः ॥"

६ "सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ।
इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः ॥"

७ "विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥"

८ "अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः ॥"

९ "क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ! ॥"

१० "न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥"

इत्यादिभिर्वस्तुस्वरूपोपदेशपरैश्शास्त्रैः— निर्विशेषचिन्मात्रं ब्रह्मैव सत्यमन्यत्सर्वं मिथ्या—इत्यभिधानात् ॥

---

१ वि० पु० १.४. ३८। २ वि० पु० १. ४. ३९. ४०.४१। ३ वि० पु० २.१४.३१। ४ वि० पु० २.१३. ९०। ५ वि० पु० २.१४.३२। ६ वि० पु० २.१६.२३। ७ वि० पु० ६. ७.९६। ८ गी० १०.२० श्लो०। ९ गी०१३, ३। १० गी० १०. ३९।

मिथ्यात्वं + नाम प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञान-निवर्त्यत्वम्, यथा रज्ज्वाद्यधिष्ठानसर्पादेः। दोषवशाद्धि तत्र तत्कल्पनम्। एवं चिन्मात्रवपुषि परे ब्रह्मणि दोषपरिकल्पितमिदं देवतिर्यङ्मनुष्यस्थावरादिभेदं सर्वं जगद्यथावस्थितब्रह्मस्वरूपावबोध-बाध्यं मिथ्यारूपम्। दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसदनिर्वचनीयाऽनाद्यविद्या। १ "अनृतेन हि प्रत्यूढाः" २ "तेषां सत्यानां सतामनृतमपिधानम्" ३ "नासदासीन्नो सदासीत्तदानीं तम आसीत्तमसा गूढमग्रे प्रकेतम्" ४ "मायां तु प्रकृतिं विद्यान्मा-

+ निवर्त्यत्वमित्युक्ते मुद्गरादि निवर्त्य घटादावति व्याप्तिः, तत्परिहाराय ज्ञान शब्दः। तावतापि शक्तिमदीश्वरादि सङ्कल्प रूप ज्ञान निवर्त्यै वस्तुन्यति व्याप्तिः, सापि यथावस्थित वस्तु ज्ञान मात्र निवर्त्यत्वस्य विवक्षित-त्वात् परिहृता भवति। प्रबल भ्रान्ति ज्ञाननिवर्त्ये सत्य रजतादिष्वति व्याप्ति परिहाराय यथावस्थित शब्दः। यथावस्थित ज्ञाननिवर्त्यत्वमित्युक्ते सामानाधि-करण्य धीर्जायेत तदा भ्रान्ति ज्ञान निवर्त्ये व्यभिचारस्तदवस्थः, तत्र ज्ञान स्वरूपं हि यथावस्थितम्, विषयस्यैव ह्ययथार्थत्वम्, अतो यथावस्थित ज्ञानमिति सामानाधिकरण्य शंका व्यावृत्यर्थं यथावस्थित वस्तु ज्ञान निवर्त्यत्वमित्युक्तम्। ज्ञान प्रागभावे व्यभिचार इति तद्व्युदासार्थं प्रतीयमानत्व पूर्वक पदम्। ज्ञान प्रागभावोऽपि कदाचित् प्रतीयमानत्व पूर्वको निवर्त्यत इति चेन्न, नियमस्य विवक्षितत्वात्। यथा सिद्धे शब्दार्थ सम्बन्धः, इत्यत्र सिद्ध एवेत्यवधारणस्य विवक्षितत्वान्नित्यत्वसिद्धिः, यथा—'अब्भक्षो वायुभक्षः' इत्यादावप एव भक्षयतीत्यव धारणा सिद्धिस्तद्वत्। भूदलन ज्ञान निवर्त्यस्य रज्जुसर्पस्य यथा-वस्थित वस्तु ज्ञान निवर्त्यत्वाभावादव्याप्तिरितिचेन्न, तस्यापि यथावस्थित वस्तु ज्ञानेन निवर्तयितुं योग्यत्वात्, अतएव हि निवर्त्यत्व मित्युक्तं न तु निव-र्त्तत्वमिति॥

१ छा-उ० ८ प्र० ३ ख० २ वा०। २ छा० उ० ८ प्र० ३ ख० १वा०। ३ यजु० २ अष्ट० ८ प्र० ६ अनु०। ४ श्वे-उ० ४ अ० १० वा०।

यिनं तु महेश्वरम्" १ "इन्द्रो मायाभिः पुरुरूप ईयते" २ "मम माया दुरत्यया" ३ "अनादिमायया सुप्तो यदा जीवः प्रबुध्यते" —इत्यादिभिः निर्विशेषचिन्मात्रं ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वरूपं स्वगतनानात्वं पश्यतीत्यवगम्यते। यथोक्तम्—

४ "ज्ञानस्वरूपो भगवान्यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः।
ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि॥
यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम्।
तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः॥"

५ "तस्मान्न विज्ञानमृतेऽस्ति किञ्चित्क्वचित्कदाचिद्द्विज वस्तुजातम्
विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाऽभ्युपेतम्॥
ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम्।
एकं सदैकं परमः परेशस्स वासुदेवो न यतोऽन्यदस्ति॥

६ सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत्।
एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते॥"—इति

अस्याश्चाविद्याया निर्विशेषचिन्मात्रब्रह्मात्मैकत्वविज्ञानेन निवृत्तिं वदन्ति—"न पुनर्मृत्यवे तदेकं पश्यति" "न पश्यो मृत्युं पश्यति" "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति" ७ "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" ८ "ब्रह्म वेद ब्रह्मैव भवति" ९ "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाः"—इत्याद्याश्श्रुतयः। अत्र मृत्युशब्देनाविद्याऽभिधीयते। यथा सनत्सुजातवचनम्—१० "प्रमादं वै मृत्युमहं ब्रवीमि सदाऽप्रमादममृतत्वं ब्रवीमि"—इति। ११ "सत्यं ज्ञानमनन्तं ब्रह्म" १२ "विज्ञानमानन्दं ब्रह्म" इत्यादिशोधकवाक्यावसेयनिर्वि-

---

१ बृ उ० ४ अ० ५ ब्रा० १९वा.। २ गी ७.१४। ३ मा०-उ० २ ख० २१ वा०। ४ वि० पु० २, १२, ३९, ४०। ५ वि० पु० २. १२.४३. ४४। ६ वि-पु० २.१२. ४५ श्लो०। ७ मु २ मु० २ ख० ८ वा०। ८ मु-३ मु० २ ख० ९ वा०। ९ श्वे-३ अ० ८ वा०। १० भारत० उद्योगपर्व० ४१ अ० ४ श्लो०। ११ तै-आनं० १ अनु० १ वा०। १२ बृ-५ अ० ९ ब्रा० २८ वा०।

शेषस्वरूपब्रह्मात्मैकत्वविज्ञानं च १ "अथ योऽन्यां देवतामुपास्ते-ऽन्योऽसावन्योऽहमस्मीति न स वेद" २ "अकृत्स्नो ह्येषः" ३ "आत्मेत्येवोपासीत" ४ "तत्त्वमसि" ५ "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते तद्योऽहं सोऽसौ योऽसौ सोऽहमस्मि" इत्यादिवाक्यसिद्धम्। वक्ष्यति चैतदेव—६ "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति। तथा च वाक्यकारः—७ "आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः" इति॥ अनेन च ब्रह्मात्मैकत्वविज्ञानेन मिथ्यारूपस्य सकारणस्य बन्धस्य निवृत्तिर्युक्ता॥

ननु च—सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा कथमिव शास्त्रजन्यविज्ञानेन क्रियते?। कथं वा 'रज्जुरेषा न सर्पः' इति ज्ञानेन प्रत्यक्षविरुद्धा सर्पनिवृत्तिः क्रियते?। तत्र द्वयोः प्रत्यक्षयोर्विरोधः; इह तु प्रत्यक्षमूलस्य शास्त्रस्य प्रत्यक्षस्य च—इति चेत्; तुल्ययोर्विरोधे वा कथं बाध्यबाधकभावः?। पूर्वोत्तरयोर्दुष्टकारणजन्यत्वतदभावाभ्याम्—इति चेत्; शास्त्रप्रत्यक्षयोरपि समानमेतत्॥

एतदुक्तं भवति—बाध्यबाधकभावे तुल्यत्वसापेक्षत्वनिरपेक्षत्वादि न कारणम्, ज्वालाभेदानुमानेन प्रत्यक्षोपमर्द्दायोगात्। तत्र हि ज्वालैक्यं प्रत्यक्षेणावगम्यते। एवं च सति द्वयोःप्रमाणयोर्विरोधे यत्संभाव्यमानान्यथासिद्धि, तद्बाध्यम्; अनन्यथासिद्धमनवकाशमितरद्बाधकम्—इति सर्वत्र बाध्यबाधकभावनिर्णयः—इति॥

तस्मादनादिनिधनाविच्छिन्नसम्प्रदायासम्भाव्यमानदोषगन्धानवकाशशास्त्रजन्यनिर्विशेषनित्यशुद्धमुक्तबुद्धस्वप्रकाशचिन्मात्रब्रह्मात्मभावावबोधेन सम्भाव्यमानदोषसावकाशप्रत्यक्षादिसिद्धविविधविकल्परूपबन्धनिवृत्तिर्युक्तैव। सम्भाव्यते च विविधविकल्पभेदप्रपञ्चग्राहिप्रत्यक्षस्यानादिभेदवासनादिरूपाविद्याख्यो दोषः। ननु—

१ बृ-३ अ० ४ ब्रा० १० वा०। २ बृ-३ अ० ४ ब्रा० ७ वा०। ३ बृ-३ अ० ४ ब्रा० ७ वा०। ४ छा० ६ प्र० ८ ख० ७ वा०। ५। ६ शारी० ४ अ० १ पा० ३ सू०। ७ वाक्यम्।

अनादिनिधनाविच्छिन्नसम्प्रदायतया निर्दोषस्यापि शास्त्रस्य—"ज्योतिष्टोमेन स्वर्गकामो यजेत"—इत्येवमादेर्भेदावलम्बिनो बाध्यत्वं प्रसज्येत । सत्यम्; पूर्वापरापच्छेदे ‡पूर्वशास्त्रवन्मोक्षशास्त्रस्य निरवकाशत्वात्तेन बाध्यत एव । वेदान्तवाक्येष्वपि सगुणब्रह्मोपासनपराणां शास्त्राणामयमेव न्यायः, निर्गुणत्वात्परस्य ब्रह्मणः । ननु च—२"यस्सर्वज्ञस्सर्ववित्" ३"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" ४"सत्यकामस्सत्यसङ्कल्पः" इत्यादिब्रह्मस्वरूपप्रतिपादनपराणां शास्त्राणां कथं बाध्यत्वम्? निर्गुणवाक्यसामर्थ्यात्—इति ब्रूमः ॥ एतदुक्तं ‡भवति-५"अस्थूलमनण्वह्रस्वमदीर्घम्"६"सत्यं ज्ञानमनन्तं ब्रह्म" ७"निर्गुणम्" ८"निरञ्जनम्"—इत्यादिवाक्यानि—निरस्तसमस्तविशेषकूटस्थनित्यचैतन्यम् ब्रह्म—इति प्रतिपादयन्ति; इतराणि च सगुणम् । उभयविधवाक्यानां विरोधे तेनैवापच्छेदन्यायेन निर्गुणवाक्यानां गुणापेक्षत्वेन परत्वाद्बलीयस्त्वमिति न किंचिदपहीनम् ॥

‡ अपच्छेदे पूर्वापर शास्त्रयोः पौर्वापर्यं परमित्युत्पत्ति क्रमात्, न पाठ क्रमात् । "पञ्चर्त्विजः समन्वारब्धाः प्रसर्पन्ति—अध्वर्युं प्रस्तोताऽन्वारभते, प्रस्तोतारं प्रतिहर्त्ता, प्रतिहर्त्तारमुद्गाता, उद्गातारं ब्रह्मा, ब्रह्माणं यजमानः" इति विहितस्यान्वारम्भणस्य विच्छेदे प्रायश्चित्तमुच्यते । बहिष्पवमानं प्रसर्पतां यद्युद्गाताऽपच्छिद्येत, अदक्षिणः सयज्ञः संस्थाप्यस्तेन पुनर्यजेत तत्र तद्दद्याद् यत्पूर्वस्मिन्दास्यन्स्यात्, अथ प्रतिहर्त्ताऽपच्छिद्येत सर्वं वेदसं दद्यादिति"—तदिदं शास्त्रद्वयं विषयः । अत्रोद्गातृ प्रतिहर्त्रोः प्रयोग भेदेनापच्छेदे स्वं स्वं प्रायश्चित्तशास्त्रं प्रवर्तते, एकस्मिन्प्रयोगे यौगपद्येनापच्छेदे सति, उद्गातुः प्रायश्चित्तं प्रवर्तते, तस्य वर्गप्रधानत्वात्, प्रधानापच्छेदस्यैव समाधेयत्वात्, विकल्पेनानुष्ठानं वा । एकस्मिन्नेव पौर्वापर्येणापच्छेदे पूर्वस्य प्रायश्चित्त शास्त्रस्य दौर्बल्यं परस्य प्राबल्यं च कर्ममीमांसायामुक्तम्—पौर्वापर्ये पूर्वं दौर्बल्यं प्रकृति वत् ।" इति । ‡'संक्षिप्तस्य च विस्तारः संक्षेपो विस्तृतस्य च । एतदुक्तं भवतिना समाधिर्व्याकुलस्य च' इति; 'एतदुक्तं भवति शब्दार्थः ।

२ मु० २ ख० ७ वा । ३ श्वे० ६ अ० ८ वा० । ४ छा० ८ प्र० १ ख० ५ वा । ५ बृ० ५ अ० ८ ब्रा ८ ब्रा० । ६ तै० आनु० १ वा । ७ आत्मोपनिषत् । ८ श्वे० ६ अ० १९ वा० ।

ननु च—"सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्र सत्यज्ञानादयो गुणाः प्रतीयन्ते ॥

नेत्युच्यते, सामानाधिकरण्येनैकार्थत्वप्रतीतेः। अनेकगुणविशिष्टाभिधानेऽप्येकार्थत्वमविरुद्धम्—इति चेत्; अनभिधानज्ञो देवानां प्रियः। एकार्थत्वं नाम सर्वपदानामर्थैक्यम्; विशिष्टपदार्थाभिधाने विशेषणभेदेन पदानामर्थभेदोऽवर्जनीयः; ततश्चैकार्थत्वं न सिध्यति। एवं तर्हि सर्वपदानां पर्यायता स्यात्, अविशिष्टार्थाभिधायित्वात्। एकार्थाभिधायित्वेऽप्यपर्यायत्वमवहितमनाश्शृणु; एकत्वतात्पर्यनिश्चयादेकस्यैवार्थस्य तत्तत्पदार्थविरोधिप्रत्यनीकत्वपरत्वेन सर्वपदानामर्थवत्त्वमेकार्थत्वमपर्यायता च ॥

एतदुक्तं भवति—लक्षणतः प्रतिपत्तव्यं ब्रह्म सकलेतरपदार्थविरोधिरूपम्। तद्विरोधिरूपं सर्वमनेन पदत्रयेण फलतो व्युदस्यते। तत्र सत्यपदं विकारास्पदत्वेनासत्याद्वस्तुनो व्यावृत्तब्रह्मपरम्। ज्ञानपदं चान्याधीनप्रकाशजडरूपाद्वस्तुनो व्यावृत्तपरम्। अनन्तपदं च देशतः कालतो वस्तुतश्च परिच्छिन्नव्यावृत्तपरम्। न च व्यावृत्तिर्भाव रूपोऽभावरूपो वा धर्मः। अपि तु सकलेतरविरोधिब्रह्मैव। यथा शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिस्तत्पदार्थस्वरूपमेव, न धर्मान्तरम्। एवमेकस्यैव वस्तुनस्सकलेतरविरोध्याकारतामवगमयदर्थवत्तरमेकार्थमपर्यायं च पदत्रयम् ॥

तस्मादेकमेवब्रह्म। स्वयंज्योतिर्निर्धूतनिखिलविशेषमित्युक्तं भवति। एवं वाक्यार्थप्रतिपादने सत्येव—१"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"—इत्यादिभिरैकार्थ्यम्। २"यतो वा इमानि भूतानि जायन्ते" ३"सदेव सोम्येदमग्र आसीत्"। ४"आत्मा वा इदमेक एवाग्र आसीत्"—इत्यादिभिर्जगत्कारणतयोपलक्षितस्य ब्रह्मणः स्वरूपमिदमुच्यते—५"सत्यं ज्ञानमनन्तं ब्रह्म"—इति। तत्र सर्वशाखाप्रत्ययन्यायेन कारणवाक्येषु सर्वेषु सजातीयविजातीयव्यावृत्तमद्वितीयं ब्रह्मावगतम्। जगत्कारणतयोपलक्षितस्य ब्रह्मणोऽद्वितीयस्य प्रतिपि-

१ छा० ६ प्र० २ ख० १ वा०। २ तै० भृगु० १ अनु०। ३ छा० ६ प्र० २ख० १ वा०। ४ ऐतरेयोपनिषत्० १ अ० १ ख० १ वा०। ५ तै० आनन्द० १ अनु० १ वा०।

पादयिषितं स्वरूपं तदविरोधेन वक्तव्यम्। अद्वितीयत्वश्रुतिर्गुणतोऽपि सद्वितीयतां न सहते,। अन्यथा- १"निरञ्जनम्" २ "निर्गुणम्" इत्यादिभिश्च विरोधः। अतश्चैतल्लक्षणवाक्यमखण्डैकरसमेव प्रतिपादयति। ननु च सत्यज्ञानादिपदानां स्वार्थप्रहाणेन स्वार्थविरोधिव्यावृत्तवस्तुस्वरूपोपस्थापनपरत्वे लक्षणा स्यात्। नैष दोषः, अभिधानवृत्तेरपि तात्पर्यवृत्तेर्बलीयस्त्वात्। सामानाधिकरण्यस्य ह्यैक्य एव तात्पर्यमिति सर्वसम्मतम्। ननु च—सर्वपदानां लक्षणा न दृष्टचरी। ततः किम्? वाक्यतात्पर्याविरोधे सत्येकस्यापि न दृष्टा; समभिव्याहृतपदसमुदायस्यैतत्तात्पर्यमिति निश्चिते सति द्वयोस्त्रयाणां सर्वेषां वा तदविरोधाय एकस्येव लक्षणा न दोषाय। तथा च शास्त्रस्थैरभ्युपगम्यते। कार्यवाक्यार्थवादिभिर्लौकिकवाक्येषु सर्वेषां पदानां लक्षणा समाश्रीयते। अपूर्वकार्य एव लिङादेर्मुख्यवृत्तत्वात् लिङादिभिः क्रियाकार्यं लक्षणया प्रतिपाद्यते। कार्यान्वितस्वार्थाभिधायिनां चेतरेषां पदानामपूर्वकार्यान्वित एव मुख्यार्थ इति क्रियाकार्यान्वितप्रतिपादनं लाक्षणिकमेव अतो वाक्यतात्पर्याविरोधाय सर्वपदानां लक्षणाऽपि न दोषः। अत इदमेवार्थजातं प्रतिपादयन्तो वेदान्ताः प्रमाणम्॥

प्रत्यक्षादिविरोधे च शास्त्रस्य बलीयस्त्वमुक्तम्। सति च विरोध बलीयस्त्वं वक्तव्यम्। विरोध एव न दृश्यते, निर्विशेषसन्मात्रब्रह्मग्राहित्वात्प्रत्यक्षस्य। ननु च—'घटोऽस्ति' 'पटोऽस्ति' इति नानाकारवस्तुविषयं प्रत्यक्षं कथमिव सन्मात्रग्राहीत्युच्यते। विलक्षणग्रहणाभावे सति सर्वेषां ज्ञानानामेकविषयत्वेन धारावाहिकविज्ञानवदेकव्यवहारहेतुतैव स्यात्। सत्यम्; तथैवात्र विविच्यते। कथं? घटोऽस्तीत्यत्रास्तित्वं तद्भेदश्च व्यवह्रियते; न च द्वयोरपि व्यवहारयोः प्रत्यक्षमूलत्वं संभवति, तयोर्भिन्नकालज्ञानफलत्वात्, प्रत्यक्षज्ञानस्य चैकक्षणवर्तित्वात्। तत्र स्वरूपं वा भेदो वा प्रत्यक्षस्य विषय इति विवेचनीयम्। भेदग्रहणस्य स्वरूपग्रहणतत्प्रतियोगिस्मरणसव्यपेक्षत्वादेव स्वरूपविषयत्वमवश्याश्रयणीयमिति न भेदः प्रत्यक्षेण गृह्यते। अतो भ्रान्तिमूल एव भेदव्यवहारः॥

१ श्वे० ६ अ० १९ वा०। २ आत्मोपनिषत्।

किंच भेदो नाम कश्चित्पदार्थो न्यायविद्भिर्निरूपयितुं न शक्यते। भेदस्तावन्न वस्तुस्वरूपम्, वस्तुस्वरूपे गृहीते स्वरूपव्यवहारवत्सर्वस्माद्भेदव्यवहारप्रसक्तेः। न च वाच्यं - स्वरूपे गृहीतेऽपि भिन्न इति व्यवहारस्य प्रतियोगिस्मरणसव्यपेक्षत्वात्, तत्स्मरणाभावेन तदानीमेव न भेदव्यवहारः—इति। स्वरूपमात्रभेदवादिनो हि प्रतियोग्यपेक्षा च नोत्प्रेक्षितुं क्षमा, स्वरूपभेदयोस्स्वरूपत्वाविशेषात्। यथा स्वरूपव्यवहारो न प्रतियोग्यपेक्षः, भेदव्यवहारोऽपि तथैव स्यात्। 'हस्तः कर' इतिवत् 'घटो भिन्न' इति पर्यायत्वं च स्यात्। नापि धर्मः; धर्मत्वे सति तस्य स्वरूपाद्भेदोऽवश्याश्रयणीयः, अन्यथा स्वरूपमेव स्यात्। भेदे च तस्यापि भेदस्तद्धर्मस्तस्यापीत्यनवस्था। किंच जात्यादिविशिष्टवस्तुग्रहणे सति भेदग्रहणम्, भेदग्रहणे सति जात्यादिविशिष्टवस्तुग्रहणमित्यन्योन्याश्रयणम्। अतो भेदस्य दुर्निरूपत्वात्सन्मात्रस्यैव प्रकाशकं प्रत्यक्षम् ॥

किंच 'घटोऽस्ति' 'पटोऽस्ति' 'घटोऽनुभूयते' 'पटोऽनुभूयते' इति सर्वे पदार्थास्सत्तानुभूतिघटिता एव दृश्यन्ते। अत्र सर्वासु प्रतिपत्तिषु सन्मात्रमनुवर्तमानं दृश्यत इति तदेव परमार्थः। विशेषास्तु व्यावर्तमानतया अपरमार्थाः, रज्जुसर्पादिवत्। यथा रज्जुरधिष्ठानतयाऽनुवर्तमाना परमार्था सती; व्यावर्तमानास्सर्पभूदलनाम्बुधारादयोऽपरमार्थाः। ननु च—रज्जुसर्पादौ 'रज्जुरियं न सर्पः' इत्यादिरज्ज्वाद्यधिष्ठानयाथार्थ्यज्ञानेन बाधितत्वात्सर्पादेरपारमार्थ्यम्, न व्यावर्तमानत्वात्। रज्ज्वादेरपि पारमार्थ्यं नानुवर्तमानतया, किन्त्वबाधितत्वात्। अत्र तु घटादीनामबाधितानां कथमपारमार्थ्यम्? उच्यते, घटादौ दृष्टा व्यावृत्तिस्सा किंरूपेति विवेचनीयम्। किं घटोऽस्तीत्यत्र पटाद्यभावः? सिद्धं तर्हि घटोऽस्तीत्यनेन पटादीनां बाधितत्वम्। अतो बाधफलभूता विषयनिवृत्तिर्व्यावृत्तिः। सा व्यावर्तमानानामपारमार्थ्यं साधयति। रज्जुवत् सन्मात्रमबाधितमनुवर्तते। तस्मात्सन्मात्रातिरेकि सर्वमपरमार्थः। प्रयोगश्च भवति—सत्परमार्थः, अनुवर्तमानत्वात्, रज्जुसर्पादौ रज्ज्वादिवत्। घटादयोऽपरमार्थाः, व्यावर्तमानत्वात्, रज्ज्वाद्यधिष्ठानसर्पादिवत्—इति। एवं सत्यनुवर्तमानाऽनुभूतिरेव परमार्था; सैव सती ॥

ननु च—सन्मात्रमनुभूतेर्विषयतया ततो भिन्नम्। नैवम्; भेदो हि प्रत्यक्षाविषयत्वाद्दुर्निरूपत्वाच्च पुरस्तादेव निरस्तः। अत एव सतोऽनुभूतिविषयभावोऽपि न प्रमाणपदवीमनुसरति। तस्मात्सदनुभूतिरेव ॥

सा च स्वतस्सिद्धा, अनुभूतित्वात्। अन्यतस्सिद्धौ घटादिवदननुभूतित्वप्रसङ्गः। किञ्च अनुभवापेक्षा चानुभूतेर्न शक्या कल्पयितुम्, सत्तयैव प्रकाशमानत्वात्। न ह्यनुभूतिर्वर्तमाना घटादिवदप्रकाशा दृश्यते, येन परायत्तप्रकाशाऽभ्युपगम्येत ॥

अथैवं मनुषे उत्पन्नायामप्यनुभूतौ विषयमात्रमवभासते 'घटोऽनुभूयते' इति। न हि कश्चित् 'घटोऽयम्' इति जानन् तदानीमेवाविषयभूतामनिदंभावामनुभूतिमप्यनुभवति। तस्माद्घटादिप्रकाशनिष्पत्तौ चक्षुरादिकरणसन्निकर्षवदनुभूतेस्सद्भाव एव हेतुः। तदनन्तरमर्थगतकादाचित्कप्रकाशातिशयलिङ्गेनानुभूतिरनुमीयते। एवं तर्ह्यनुभूतेरजडाया अर्थवजडत्वमापद्यत इति चेत्; किमिदमजडत्वं नाम? न तावत्स्वसत्तायाः प्रकाशाव्यभिचारः, सुखादिष्वपि तत्सम्भवात्; नहि कदाचिदपि सुखादयस्सन्तो नोपलभ्यन्ते; अतोऽनुभूतिस्स्वयमेव नानुभूयते, अर्थान्तरं स्पृशतोऽङ्गुल्यग्रस्य स्वात्मस्पर्शवदशक्यत्वादिति ॥

तदिदमनाकलितानुभवविभवस्य स्वमतिविजृम्भितम्, अनुभूतिव्यतिरेकिणो विषयधर्मस्य प्रकाशस्य रूपादिवदनुपलब्धेः; उभयाभ्युपेतानुभूत्यवाशेषव्यवहारोपपत्तौ प्रकाशाख्यधर्मकल्पनानुपपत्तेश्च। अतो नानुभूतिरनुमीयते। नापि ज्ञानान्तरसिद्धा। अपि तु सर्वं साधयन्त्यनुभूतिस्स्वयमेव सिध्यति। प्रयोगश्च—*अनुभूतिरनन्या-

* अनुभूतिरित्यादिनानुमान द्वयमविभागेनोक्तम्। अनुभूतिरनन्याधीन स्वधर्मा; स्वसम्बन्धादर्थान्तरे तद्धर्म हेतुत्वात्। अनुभूतिरनन्याधीन स्वव्यवहारा, स्वसम्बन्धादर्थान्तरे तद् व्यवहार हेतुत्वात्—इत्येवं विभागः। अतएव हि परत्र व्यवहार विशेष हेतोः स्वस्मिन्नपि तद् व्यवहार हेतुत्वमित्युत्तरत्र वक्ष्यते।

धीनस्वधर्मव्यवहारा, स्वसम्बन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वात् ; यस्स्वसम्बन्धादर्थान्तरे यद्धर्मव्यवहारहेतुस्स तयोस्स्वस्मिन्ननन्याधीनो दृष्टः, यथा रूपादिश्चाक्षुषत्वादौ । रूपादिर्हि पृथिव्यादौ स्वसम्बन्धाच्चाक्षुषत्वादि जनयन् स्वस्मिन्न रूपादिसम्बन्धाधीनश्चाक्षुषत्वादौ । अतोऽनुभूतिरात्मनः प्रकाशमानत्वे प्रकाशत इति व्यवहारे च स्वयमेव हेतुः ॥

सेयं स्वयंप्रकाशाऽनुभूतिर्नित्या च, प्रागभावाद्यभावात् । तदभावश्च स्वतस्सिद्धत्वादेव । न ह्यनुभूतेस्स्वतस्सिद्धायाः प्रागभावस्स्वतोऽन्यतो वाऽवगन्तुं शक्यते । अनुभूतिस्स्वाभावमवगमयन्ती, सती तावन्नावगमयति । तस्यास्सत्त्वे विरोधादेव तदभावो नास्तीति कथं सा स्वाभावमवगमयति ? एवमसत्यपि नावगमयति ; अनुभूतिस्स्वयमसती स्वाभावे कथं प्रमाणं भवेत् ? । नाप्यन्यतोऽवगन्तुं शक्यते, अनुभूतेरनन्यगोचरत्वात् । अस्याः प्रागभावं साधयत् प्रमाणम् 'अनुभूतिरियम्' इति विषयीकृत्य तदभावं साधयेत् ; स्वतस्सिद्धत्वेन इयमिति विषयीकारानर्हत्वात् , न तत्प्रागभावोऽन्यतश्शक्यावगमः । अतोऽस्याः प्रागभावाभावादुत्पत्तिर्न शक्यते वक्तुमित्युत्पत्तिप्रतिसम्बद्धाश्चान्येऽपि भावविकारास्तस्या न सन्ति ॥

अनुत्पन्नेयमनुभूतिरात्मनि नानात्वमपि न सहते, व्यापकविरुद्धोपलब्धेः÷ । न ह्यनुत्पन्नं नानाभूतं दृष्टम् । भेदादीनामनुभाव्यत्वेन च रूपादेरिवानुभूतिधर्मत्वं न सम्भवति । अतोऽनुभूतेरनुभव-

---

÷ नानात्व व्यापकोत्पत्ति विरुद्धानुत्पत्त्युपलब्धेः । व्याप्तिं दर्शयति—न ह्यनुत्पन्नं नानाभूतं दृष्टमिति । अस्य ग्रन्थस्य यदनुत्पन्नं तदनानाभूतं दृष्टमित्यर्थो वक्तुं न युज्यते, ब्रह्मव्यतिरेकेणानुत्पन्नस्यानाना भूतस्य कस्यचिन्मायावेदान्तिभिरनभ्युपगमात् , यदनानाभूतं, तदनुत्पन्नमियुक्ते व्यापकजन्मनिवृत्त्या व्याप्यनानात्वनिवृत्तिरुक्ता न स्यात् । तस्मादयमर्थः यन्नानाभूतं तदनुत्पन्नं न दृष्टम् , अपि तूत्पत्तिमदेव दृष्टमिति जन्मनो नानात्वव्यापकत्वं दर्शितम् , अनेनोत्पत्तिनिवृत्त्या नानात्वनिवृत्तिरित्यर्थ सिद्धम् । यथा—न ह्यनग्निधूमवद् दृष्टमित्युक्ते, अग्निमदेव धूमवदित्युक्तं स्यात् , तद्वदिहापि ।

स्वरूपत्वादेवान्योऽपि कश्चिदनुभाव्यो नास्याः धर्मः; यतो निर्धूतानिखिलभेदा संवित्। अत एव नास्यास्स्वरूपातिरिक्त आश्रयो ज्ञाता नाम कश्चिदस्तीति स्वप्रकाशरूपा सैवाऽऽत्मा, अजडत्वाच्च। अनात्मत्वव्याप्तं जडत्वं संविदि व्यावर्तमानमनात्मत्वमपि हि संविदो व्यावर्तयति॥

ननु च—अहं जानामीति ज्ञातृता प्रतीतिसिद्धा। नैवम्; सा भ्रान्तिसिद्धा, रजततेव शुक्तिशकलस्य, अनुभूतेस्स्वात्मनि कर्तृत्वायोगात्। अतो मनुष्योऽहमित्यत्यन्तबहिर्भूतमनुष्यत्वादिविशिष्टपिण्डात्माभिमानवज्ज्ञातृत्वमप्यध्यस्तम्। ज्ञातृत्वं हि ज्ञानक्रियाकर्तृत्वम्। तच्च विक्रियात्मकं जडं विकारिद्रव्याहंकारग्रन्थिस्थमविक्रिये साक्षिणि चिन्मात्रात्मनि कथमिव संभवति। दृश्यधीनसिद्धित्वादेव रूपादेरिव कर्तृत्वादेर्नात्मधर्मत्वम्। सुषुप्तिमूर्च्छादावहंप्रत्ययापायेऽप्यात्मानुभवदर्शनेन नाऽऽत्मनोऽहंप्रत्ययगोचरत्वम्। कर्तृत्वेऽहंप्रत्ययगोचरत्वे चाऽऽत्मनोऽभ्युपगम्यमाने देहस्येव जडत्वपराक्त्वानात्मत्वादिप्रसङ्गो दुष्परिहरः। अहंप्रत्ययगोचरात् कर्तृतया प्रसिद्धाद्देहात्तत्क्रियाफलस्वर्गादेर्भोक्तुरात्मनोऽन्यत्वं प्रामाणिकानां प्रसिद्धमेव। तथाऽहमर्थाज्ज्ञातुरपि विलक्षणस्साक्षी प्रत्यगात्मेति प्रतिपत्तव्यम्। एवमविक्रियानुभवस्वरूपस्यैवाभिव्यञ्जको जडोऽप्यहंकारस्स्वाश्रयतया तमभिव्यनक्ति। आत्मस्थतयाऽभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः। दर्पणजलखण्डादिर्हि १ मुखचन्द्रबिम्बगोत्वादिकमात्मस्थतयाऽभिव्यनक्ति। तत्कृतोऽयं 'जानाम्यहम्' इति भ्रमः। स्वप्रकाशाय अनुभूतेः कथमिव तदभिव्यङ्ग्यजडरूपाहङ्कारेणाभिव्यङ्ग्यत्वमिति मावोचः, रविकरनिकराभिव्यङ्ग्यकरतलस्य तदभिव्यञ्जकत्वदर्शनात्; जालकरन्ध्रनिष्क्रान्तद्युमणिकिरणानां यदभिव्यङ्ग्येनापि करतलेन स्फुटतरप्रकाशो हि दृष्टचरः; यतोऽहं जानामीति ज्ञाताऽयमहमर्थश्चिन्मात्रात्मनो न पारमार्थिको धर्मः; अत एव सुषुप्तिमुक्त्योर्नान्वेति। तत्र ह्यहमर्थोल्लेखविगमेन स्वाभाविकानुभवमात्ररूपेणाऽऽत्माऽवभासते। अत एव सुप्तोत्थितः कदाचिन्मामप्यहं न

१ मुखचन्द्रेति० पा०।

ज्ञातृत्वानिति परामृशति। तस्मात्परमार्थतो निरस्तसमस्तभेदविकल्प-निर्विशेषचिन्मात्रैकरसकूटस्थनित्यसंविदेव भ्रान्त्या ज्ञातृज्ञेयज्ञानरूप-विविधविचित्रभेदा विवर्तत इति तन्मूलभूताविद्यानिबर्हणाय नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते—इति॥

## ( महासिद्धान्तः )

तदिदमौपनिषद × परमपुरुषवरणीयताहेतुगुणविशेषविर-हिणामनादिपापवासनादूषिताशेषशेमुषीकाणामनधिगतपदवाक्यस्वरू-पतदर्थयाथात्म्यप्रत्यक्षादिसकलप्रमाणवृत्ततदितिकर्तव्यतारूपसमीची-नन्यायमार्गाणां विकल्पासहविविधकुतर्ककल्ककल्पितमिति, न्याया-नुगृहीतप्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यविद्भिरनादरणीयम्॥

× अथ कर्मविचारपूर्वभूत्तत्त्वविरोधिवस्तुसामर्थ्यं निरासार्थं परोक्तानामुपायोपेयनिवर्त्यानां प्रमाणतर्काभासमूलत्वं प्रतिजानीते—तदिदमिति। औपनिषदपरमपुरुषशब्देन 'तं त्वौपनिषदं पुरुषं विद्धि" इति श्रुतिं स्मारयति एतेनास्मदभिमतप्रमाणप्रमेयविशेषसम्बन्धः श्रुत्यैव व्यक्त इति सूचयति, परम शब्देनेश्वरातिरिक्त व्यावृत्तिः। वरणीयता हेतु गुण विशेषविरहिणामित्यनेन " यमेवैष वृणुते तेन लभ्यः " इत्यभिमतोपायविशेष कथनं फलितम्, अनेन पदेन बहुशास्त्रज्ञ बहुग्रन्थकाराणां भ्रमानुपपत्तिशङ्का च परिहृता भवति, सम्यक् शास्त्रार्थज्ञानोत्पत्तौ भगवद्भक्तेरपि सामग्र्यन्तरभावेन केवलशास्त्रपरिश्रमस्य विफलहेतुत्वात्। यथा—"यस्य देवे परा भक्तिः" इत्यादिका श्रुतिः। स्मृतिश्च—"विद्याराजन् न ते विद्या ममविद्या न हीयते। विद्याहीनस्तमोध्वस्तो नाभिजानासि केशवम्॥ धृतराष्ट्रः—गावद्गणे ते का विद्या या ते विद्या जनार्दने। यया त्वमभिजानासि त्रियुगं मधुसूदनम्॥ सञ्जयः—मायां न सेवे भद्रं ते न वृथा धर्मं मा चरे। शुद्धभावंगतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्।" इति। अत्र भक्त्या शुद्धभावं गतः शास्त्राज्जनार्दनं वेद्मीत्यनेन यथावच्छास्त्रार्थज्ञानोदयस्य भक्तिसापेक्षत्वं सिद्धम्। 'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः। सात्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः॥ पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः। रजसा तमसा चास्य मानसं सम-भिप्लुतम्। इति वचनाच्च तत्त्वार्थज्ञानस्य भक्तिप्रीतभगवत्कटाक्षसापेक्षत्वं ज्ञायते॥

तथाहि—निर्विशेषवस्तुवादिभिर्निर्विशेषे वस्तुनीदं प्रमाणमिति न शक्यते वक्तुम्, सविशेषवस्तुविषयत्वात्सर्वप्रमाणानाम् । यस्तु स्वानुभवसिद्ध इति स्वगोष्ठीनिष्ठस्समयः, सोऽप्यात्मसाक्षिकसविशेषानुभवादेव निरस्तः, 'इदमहमदर्शम्' इति केनचिद्विशेषेण विशिष्टविषयत्वात्सर्वेषामनुभवानाम् । सविशेषोऽप्यनुभूयमानोऽनुभवः केन चिद्युक्त्याभासेन निर्विशेष इति निष्कृष्यमाणस्सत्तातिरेकिभिस्स्वासाधरणैस्स्वभावविशेषैर्निष्कृष्टव्य इति । निष्कर्षहेतुभूतैस्सत्तातिरेकिभिस्स्वासाधारणैस्स्वभावविशेषैस्सविशेष एवावतिष्ठते । अतःकैश्चिद्विशेषैः विशिष्टस्यैव वस्तुनोऽन्ये विशेषा निरस्यन्त इति, न क्वचिन्निर्विशेषवस्तुसिद्धिः । धियो हि धीत्वं स्वप्रकाशता च ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेः । स्वापमदमूर्च्छासु च सविशेष एवानुभव इति स्वावसरे निपुणतरमुपपादयिष्यामः । स्वाभ्युपगताश्च नित्यत्वादयो ह्यनेके विशेषास्सन्त्येव । ते च न वस्तुमात्रमिति शक्योपपादनाः, वस्तुमात्राभ्युपगमे सत्यपि विधाभेदविवाददर्शनात् स्वाभिमततद्विधाभेदैश्च स्वमतोपपादनात् । अतः प्रामाणिकविशेषैर्विशिष्टमेव वस्त्विति वक्तव्यम् ॥

शब्दस्य तु विशेषेण सविशेष एव वस्तुन्यभिधानसामर्थ्यम्, पदवाक्यरूपेण प्रवृत्तेः । प्रकृतिप्रत्यययोगेन हि पदत्वम् । प्रकृतिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्जनीयम् । पदभेदश्चार्थभेदनिबन्धनः । पदसंघातरूपस्य वाक्यस्यानेकपदार्थसंसर्गविशेषाभिधायित्वेन निर्विशेषवस्तुप्रतिपादनासामर्थ्यात्, न निर्विशेषवस्तुनि शब्दः प्रमाणम् ।

प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदभिन्नस्य न निर्विशेषवस्तुनि प्रमाणभावः । सविकल्पकं जात्याद्यनेकपदार्थविशिष्टविषयत्वादेव सविशेषविषयम् । निर्विकल्पकमपि सविशेषविषयमेव, सविकल्पके स्वस्मिन्ननुभूतपदार्थविशिष्टप्रतिसंधानहेतुत्वात् । निर्विकल्पकं नामकेनचिद्विशेषेणवियुक्तस्यग्रहणम् , न सर्वविशेषरहितस्य, तथा भूतस्य कदाचिदपि ग्रहणादर्शनादनुपपत्तेश्च । केनचिद्विशेषेणेदमित्थमिति हि सर्वा प्रतीतिरुपजायते, त्रिकोणसास्नादिसंस्थानविशेषेण विना कस्यचिदपि पदार्थस्य ग्रहणायोगात् । अतो निर्विकल्पकमेकजातीयद्रव्येषु प्रथमपिण्डग्रहणम् । द्वितीयादिपिण्डग्रहणं

सविकल्पकमित्युच्यते। तत्र प्रथमपिण्डग्रहणे गोत्वादेरनुवृत्ताकारता न प्रतीयते। द्वितीयादिपिण्डग्रहणेष्वेवानुवृत्तिप्रतीतिः। प्रथमप्रतीत्य नुसंहितवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिधर्मविशिष्टत्वं द्वितीयादि-पिण्डग्रहणावसेयमिति,द्वितीयादि ग्रहणस्य सविकल्पकत्वम्। सास्नादिवस्तुसंस्थान रूपगोत्वादेरनुवृत्तिर्न प्रथमपिण्डग्रहणे गृह्यत इति, प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वम्,न पुनस्संस्थानरूपजात्यादेरग्रहणात्। संस्थानरूपजात्यादेरप्यैन्द्रियकत्वाविशेषात् , संस्थानेन विना संस्थानिनः प्रतीत्यनुपपत्तेश्च प्रथमपिण्डग्रहणेऽपि ससंस्थानमेव वस्त्वित्थमिति गृह्यते।

अतो द्वितीयादिपिण्डग्रहणेषु गोत्वादेरनुवृत्तिधर्मविशिष्टता संस्थानिवत्संस्थानवच्च सर्वदैव गृह्यत इति तेषु सविकल्पकत्वमेव। अतः प्रत्यक्षस्य कदाचिदपि न निर्विशेषविषयत्वम्॥

अतएव सर्वत्र भिन्नाभिन्नत्वमपि निरस्तम् । इदमित्थमिति प्रतीताविदमित्थंभावयोरैक्यं कथमिव प्रत्येतुं शक्यते। तत्रेत्थंभाव स्सास्नादिसंस्थानविशेषः; तद्विशेष्यं द्रव्यमिदमंश इत्यनयोरैक्यं प्रतीतिपराहतमेव। तथाहि—* प्रथममेव वस्तु प्रतीयमानं सकलेतरव्यावृत्तमेव प्रतीयते। व्यावृत्तिश्च गोत्वादिसंस्थानविशेषविशिष्टतयेत्थमिति प्रतीतेः। सर्वत्र विशेषणविशेष्यभावप्रतिपत्तौ तयोरत्यन्तभेदः प्रतीत्यैव सुव्यक्तः। तत्र दण्डकुण्डलादयः पृथक्संस्थान-संस्थिताः स्वनिष्ठाश्च कदाचित्क्वचिद्द्रव्यान्तरविशेषणतयाऽवतिष्ठन्ते। गोत्वादयस्तु द्रव्यसंस्थानतयैव 'पदार्थभूतास्सन्तो द्रव्यविशेषणतया अवस्थिताः। उभयत्र विशेषणविशेष्यभावस्समानः। तत एव तयोर्भेदप्रतिपत्तिश्च । इयांस्तु विशेषः— पृथक्स्थितिप्रतिपत्ति-योग्या दण्डादयः , गोत्वादयस्तु नियमेन तदनर्हाः—इति

* अत्र जातिव्यक्त्योर्भेदाभेदे चत्वारो हेतवः परोक्ताः प्रथमपिण्ड ग्रहणे, अभेदेन ग्रहणम् , एकशब्दानुविद्धप्रत्ययो मत्वर्थीयप्रत्ययनिरपेक्ष समानाधि करण पद प्रयोगः, सहोपलम्भनियमश्चेति। अत्र सहोपलम्भ नियम समानाधिकरणप्रत्ययौ भेदाभेदसाधकौ,अन्यौ द्वावभेदसाधकौ। इदं हेतुचतुष्टयमाशंक्याह तथाहीति । अत्र महासिद्धान्ते समस्तटिप्पणीयविषयाःशत दूषण्यां दशमवादादारभ्य त्रिंशद्वादपर्यन्तंविशदमनुसन्धेयाः।

अतो वस्तुविरोधः प्रतीतिपराहत इति प्रतीतिप्रकारनिह्नवादेवोच्यते। प्रतीतिप्रकारो हि, इदमित्थमित्येव सर्वसम्मतः। तदेतत्सूत्रकारेण १"नैकस्मिन्नसम्भवात्" इति सुव्यक्तमुपपादितम्॥

अतः प्रत्यक्षस्य सविशेषविषयत्वेन प्रत्यक्षादिदृष्टसम्बन्धविशिष्टविषयत्वादनुमानमपि सविशेषविषयमेव। प्रमाणसङ्ख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानामयमेव विषय इति न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः। वस्तुगतस्वभावविशेषैस्तदेव वस्तु निर्विशेषमिति वदन् जननीवन्ध्यात्वप्रतिज्ञायामिव स्ववाग्विरोधमपि न जानाति।

यत्तु—प्रत्यक्षं सन्मात्रग्राहित्वेन न भेदविषयम्, भेदश्च विकल्पासहत्वाद्दुर्निरूपः—इत्युक्तम्, तदपि जात्यादिविशिष्टस्यैव वस्तुनः प्रत्यक्षविषयत्वाज्जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनस्स्वस्य च भेदव्यवहारहेतुत्वाच्च दूरोत्सारितम्। सम्वेदनवद्रूपादिवच्च परत्र व्यवहारविशेषहेतोस्स्वस्मिन्नपि तद्व्यवहारहेतुत्वं युष्माभिरभ्युपेतं भेदस्यापि सम्भवत्येव। अत एव च नानवस्थाऽन्योन्याश्रयणं च। एकक्षणवर्तित्वेऽपि प्रत्यक्षज्ञानस्य तस्मिन्नेव क्षणे वस्तुभेदरूपतत्संस्थानरूपगोत्वादेर्गृहीतत्वात् क्षणान्तरग्राह्यं न किञ्चिदिह तिष्ठति॥

अपि च सन्मात्रग्राहित्वे 'घटोऽस्ति' 'पटोऽस्ति' इति विशिष्टविषया प्रतीतिर्विरुध्यते। यदि च सन्मात्रातिरेकिवस्तुसंस्थानरूपजात्यादिलक्षणो भेदः प्रत्यक्षेण न गृहीतः, किमित्यश्वार्थी २ महिषदर्शने निवर्तते। सर्वासु प्रतिपत्तिषु सन्मात्रमेव विषयश्चेत्; तत्तत्प्रतिपत्तिविषयसहचारिणस्सर्वे शब्दा एकैकप्रतिपत्तिषु किमिति न स्मर्यन्ते किञ्च, अश्वे हस्तिनि च सम्वेदनयोरेकविषयत्वेन उपरितनस्य गृहीतग्राहित्वाद्विशेषाभावाच्च स्मृतिवैलक्षण्यं न स्यात्। प्रतिसम्वेदनं विशेषाभ्युपगमे प्रत्यक्षस्य विशिष्टार्थविषयत्वमेवाभ्युपगतं भवति। सर्वेषां संवेदनानामेकविषयतायामेकेनैव संवेदनेनाशेषग्रहणादन्धबधि-

१ शारीरकमी० २ अ० पा० ३१ सू०।
२ महिषदर्शनेनेति पा०।

## –:( श्रीशारीरिकमीमांसाभाष्ये समन्वयाधिकरणम् ॥४॥ ):–



यद्यपि प्रमाणान्तरागोचरं ब्रह्म । तथापि प्रवृत्तिनिवृत्तिपरत्वाभावेन सिद्धरूपं ब्रह्म न शास्त्रं प्रतिपादयतीत्याशङ्क्याह—

## तत्तु समन्वयात् । १ । १ । ४ ॥

प्रसक्ताशङ्कानिवृत्त्यर्थस्तु शब्दः । तत् शास्त्रप्रमाणकत्वं ब्रह्मणस्सम्भवत्येव । कुतः ? समन्वयात्–परमपुरुषार्थतयाऽन्वयस्समन्वयः; परम[1]पुरुषार्थभूतस्यैव ब्रह्मणोऽभिधेयतयाऽन्वयात् ॥

[2]एवमिव समन्वितो ह्यौपनिषदः पदसमुदायः— [3]"यतो वा इमानि भूतानि जायन्ते" [4]"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" [5]"ब्रह्म वा इदमेकमेवाग्र आसीत्" [6]"आत्मा वा इदमेक एवाग्र आसीत्" [7]"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" [8]"एको ह वै नारायण आसीत्" [9]"सत्यं ज्ञानमनन्तं ब्रह्म" [10]"आनन्दो ब्रह्म" इत्येवमादिः ॥

न च व्युत्पत्तिसिद्धपरिनिष्पन्नवस्तुप्रतिपादनसमर्थानां पदसमुदायानामखिलजगदुत्पत्तिस्थितिविनाशहेतुभूताशेषदोषप्रत्यनीकापरिमितोदारगुणसागरानवधिकातिशयानन्दस्वरूपे ब्रह्मणि समन्वितानां प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहादन्यपरत्वम् . स्वविषयावबोधपर्यवसायित्वात्सर्वप्रमाणानाम् । नच प्रयोजनानुगुणा प्रमाणप्रवृत्तिः ।

---

१ पुरुषार्थस्यै० पा ॥
२ एवमेव० पा ॥
३ तै० भृ० १ अनु ॥
४ छा० ६ प्र० २ ख० १; ३ ॥
५ बृ० ३ अ० २ ब्रा० ११ ॥
६ ऐतरेय० १ अ० १ ख० १ ॥
७ तै० आन० १ अनु ॥
८ महोपनिषद्० १ अ० १ वा ॥
९ तै आन० १ अनु ॥
१० तै भृ० ६ अन ॥

प्रयोजनं हि प्रमाणानुगुणम् । न च प्रवृत्तिनिवृत्त्यन्वयविरहिणः प्रयोजनशून्यत्वम्, पुरुषार्थान्वयप्रतीतेः । तथा स्वरूपपरेष्वपि 'पुत्रस्ते जातः, नायं सर्पः' इत्यादिषु हर्षभयनिवृत्तिरूपप्रयोजनवत्त्वं दृष्टम् ॥

( एवं सूत्राक्षर योजनार्थं संक्षेपेणार्थउक्तः, अथ तात्पर्यं वक्तुं पूर्वपक्षं विस्तारेणावतारयति )

अत्राह—न वेदान्तवाक्यानि ब्रह्म प्रतिपादयन्ति प्रवृत्तिनिवृत्त्यन्वयविरहिणः शास्त्रस्यानर्थक्यात् । यद्यपि प्रत्यक्षादीनि वस्तुयाथात्म्यावबोधे पर्यवस्यन्ति; तथाऽपि शास्त्रं प्रयोजनपर्यवसाय्येव । न हि लोकवेदयोः प्रयोजनरहितस्य कस्यचिदपि वाक्यस्य प्रयोग उपलब्धचरः। न च किञ्चित् प्रयोजनमनुद्दिश्य वाक्यप्रयोगः श्रवणं वा सम्भवति। तच्च प्रयोजनं प्रवृत्तिनिवृत्तिसाध्येष्टानिष्टप्राप्तिपरिहारात्मकमुपलब्धम्—'अर्थार्थी राजकुलं गच्छेत्' 'मन्दाग्निर्नाम्बु पिबेत्' १'स्वर्गकामो यजेत' 'न कलञ्जं भक्षयेत्' २इत्येवमादिषु यत्पुनस्सिद्धवस्तुपरेष्वपि 'पुत्रस्ते जातः, नायं सर्पो रज्जुरेषा' इत्यादिषु हर्षभयनिवृत्तिरूपपुरुषार्थान्वयो दृष्ट इत्युक्तम्। तत्र किं पुत्रजन्माद्यर्थात्पुरुषार्थावाप्तिः ? । उत तज्ज्ञानादिति विवेचनीयम्। ३सतोऽप्यज्ञातस्यार्थस्यापुरुषार्थत्वेन तज्ज्ञानादिति चेत्—तर्ह्यसत्यप्यर्थे ज्ञानादेव पुरुषार्थस्सिध्यतीत्यर्थपरत्वाभावेन प्रयोजनपर्यवसायिनोऽपि शास्त्रस्य नार्थसद्भावे प्रामाण्यम्। तस्मात्सर्वत्र प्रवृत्तिनिवृत्तिपरत्वेन ज्ञानपरत्वेन वा प्रयोजनपर्यवसानमिति कस्यापि वाक्यस्य परिनिष्पन्ने वस्तुनि तात्पर्यासम्भवान्न वेदान्ताः परिनिष्पन्नं ब्रह्म प्रतिपादयन्ति ॥

अत्र कश्चिदाह—*वेदान्तवाक्यान्यपि कार्यपरतयैव ब्रह्माणि

*जरन्मायावादिपक्षौ द्वौ विद्येते—तत्रैको निष्प्रपञ्चीकरण नियोग वादः, अन्योध्यान नियोगवादः । एतन्मतद्वयं, ध्यान नियोगवादि मुखेन शाङ्करादिमतं च दूषितवन्तमधिकरण पूर्वं पक्षिणं प्रति सिद्धान्तं वक्ष्यन्, इदानीं निष्प्र पञ्ची करण नियोग वादं प्रस्तौतिअत्र कश्चिदाहेति ॥

१ यजुषि, २ । कां ०५ । प्रश्न. ४—यनु ॥ २ इत्यादिषु० पा ॥
३ सतोऽप्यर्थस्याज्ञातस्य० पा ।

प्रमाणभावमनुभवन्ति–कथं निष्प्रपञ्चमद्वितीयं ज्ञानैकरसं ब्रह्म अनया विद्यया सप्रपञ्चतया प्रतीयमानं निष्प्रपञ्चं कुर्यादिति ब्रह्मणः प्रपञ्च-प्रविलयद्वारेण विधिविषयत्वम्–इति । कोऽसौ द्रष्टृदृश्यरूपप्रपञ्च[1]प्रविलयद्वारेण साध्यज्ञानैकरसब्रह्मविषयो विधिः ? । [2]"न दृष्टेर्द्रष्टारं पश्येः । न मतेर्मन्तारं मन्वीथाः" [3]इत्यादिः । द्रष्टृदृश्यरूपभेद-शून्यं दृशिमात्रं ब्रह्म कुर्यादित्यर्थः । स्वतस्सिद्धस्यापि ब्रह्मणो निष्प्रपञ्चतारूपेण [4]कार्यत्वमविरुद्धम्–इति ॥

( अधिकरणपूर्वपक्षी मीमांसकस्तद्दूषयति )

तदयुक्तम्– नियोगवाक्यार्थवादिना हि नियोगः, नियोज्यविशेषणम् , विषयः, करणम् , इतिकर्तव्यता, प्रयोक्ता च वक्तव्याः* । तत्र हि नियोज्यविशेषणमनुपादेयम् । तच्च निमित्तं फल मिति द्विधा । अत्रकिं नियोज्य विशेषणम् तच्च किं निमित्तं फलं वेति विवेचनीयम् । ब्रह्मस्वरूपयाथात्म्यानुभवश्चेन्नियोज्यविशेषणम् ; तर्हि न तन्निमित्तम् , जीवनादिवत्तस्यासिद्धत्वात् । निमित्तत्वे च तस्य नित्यत्वेनापवर्गोत्तरकालमपि जीवननिमित्ताग्निहोत्रादिवत् नित्यतद्विषयानुष्ठानप्रसङ्गः । नापि फलं, नैयोगिकफलत्वेन स्वर्गादिवदनित्यत्वप्रसङ्गात् ॥

* नियोगः अदृष्टम् । नियोज्य विशेषणं द्विविधम् निमित्तं फलञ्चेति । तत्र निमित्तम् " यावज्जीवमग्नि होत्रं जुहोति; " फलम् स्वर्गम् । विषयः यागादिः । करणम् प्रयत्नत्वं, कर्मत्वं, कृतित्वं वा । इति कर्तव्यता यथा करणीयंस्यात । प्रयोक्ता यजमानः ।

१ प्रपञ्चविलय० पा ॥ २ बृ० ५ अ० ब्रा० २ वा ॥
३इत्येवमादिः पा ॥ ४ साध्यत्वमवि० पा ॥

कथमत्र नियोगविषयः ? । ब्रह्मैवेति चेत्-न, तस्य १नित्यत्वेनाभव्यरूपत्वात्, + अभावार्थत्वाच्च । निष्प्रपञ्चं २ब्रह्म साध्यमिति चेत्-साध्यत्वेऽपि फलत्वमेव । अभावार्थत्वान्न विधिविषयत्वम् । साध्यत्वञ्च कस्य ? किं ब्रह्मणः ?, उत प्रपञ्चनिवृत्तेः न तावद्ब्रह्मणः सिद्धत्वात्, अनित्यत्वप्रसक्तेश्च । अथ प्रपञ्चनिवृत्तेः । न तर्हि ब्रह्मणस्साध्यत्वम् । प्रपञ्चनिवृत्तिरेव विधिविषय इति चेत्—न, तस्याः फलत्वेन विधिविषयत्वायोगात् । प्रपञ्चनिवृत्तिरेव हि मोक्षः । स च फलम् । अस्य च नियोगविषयत्वे नियोगात्प्रपञ्चनिवृत्तिः, प्रपञ्चनिवृत्त्या नियोगः इतीतरेतराश्रयत्वम् ॥

अपि च—किं निवर्तनीयः प्रपञ्चो मिथ्यारूपः सत्यो वा । मिथ्यारूपत्वे ज्ञाननिवर्त्यत्वादेव नियोगेन न किंचित्प्रयोजनम् । नियोगस्तु निवर्तकज्ञानमुत्पाद्य यद्द्वारेण प्रपञ्चस्य निवर्तक इति चेत्-तत् *स्ववाक्यादेव ज्ञातमिति नियोगेन न प्रयोजनम् । वाक्यार्थज्ञानादेव ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्याभूतस्य प्रपञ्चस्य बाधितत्वात् सपरिकरस्य नियोगस्यासिद्धिश्च । प्रपञ्चस्य निवर्त्यत्वे प्रपञ्चनिवर्तको नियोगः किं ब्रह्मस्वरूपमेव, उत तद्व्यतिरिक्तः यदि ब्रह्मस्वरूपमेव ३निवर्तकस्य नित्यतया निवर्त्यप्रपञ्चसद्भाव एव न सम्भवति । नित्यत्वेन नियोगस्य विषयानुष्ठानसाध्यत्वं च न घटते । अथ ब्रह्मस्वरूपव्यतिरिक्तः । तस्य कृत्स्नप्रपञ्चनिवृत्तिरूपविषयानुष्ठानसाध्यत्वेन प्रयोक्ता च नष्ट इत्याश्रयाभावादसिद्धिः । प्रपञ्चनिवृत्तिरूपविषयानु-

---

+ अभव्य रूपत्वात् असाध्यत्वात् । अभावार्थत्वाच्च भावार्थाः कर्म शब्दाः, क्रियारूपत्वाभावादित्यर्थः ।

* स्ववाक्यात् प्रपञ्चमिथ्यात्व ब्रह्मनिर्विशेषत्वरूपाद् वाक्यादित्यर्थः ।

---

१ निवर्तकं० पा० ॥　　　　२ नित्यत्वेनाभाव्यरूप० पा० ॥

३ ब्रह्मैव० पा० ॥

ध्यानेनैव ब्रह्मस्वरूपव्यतिरिक्तस्य कृत्स्नस्य निवृत्तत्वात् । न नियोगनिष्पाद्यं मोक्षाख्यं फलम् । किंच-प्रपञ्चनिवृत्तेर्योगकरणस्य इति कर्तव्यताऽभावात्, अनुपकृतस्य च करणत्वायोगान्न करणत्वम् । कथम् इतिकर्तव्यताऽभाव इति चेत्-इत्थम्-अस्येतिकर्तव्यता भावरूपा ? अभावरूपा ? वा । भावरूपा च करणशरीरनिष्पत्तितदनुग्रहकार्यभेदभिन्ना । उभयविधा च न सम्भवति । नहि मुद्गराभिघातादिवत् कृत्स्नस्य प्रपञ्चस्य निवर्तकः कोऽपि दृश्यत इति दृष्टार्था न सम्भवति नापि निष्पन्नस्य कारणस्य कार्योत्पत्तावनुग्रहस्सम्भवति, अनुग्राहकांशसद्भावेन कृत्स्नप्रपञ्चनिवृत्तिरूपकरणस्वरूपासिद्धेः । ब्रह्मणोऽद्वितीयत्वज्ञानं प्रपञ्चनिवृत्तिरूपकरणशरीरं निष्पादयतीति चेत्-तेनैव प्रपञ्च निवृत्तिरूपो मोक्षस्सिद्ध इति न करणादिनिष्पाद्यम् अवशिष्यत इति पूर्वमेवोक्तम् । अभावरूपत्वे [1]चाभावादेव न करणशरीरं निष्पादयति । नाप्यनुग्राहकः । अतो निष्प्रपञ्चब्रह्मविषयो विधिर्न सम्भवति ॥

( अथ ध्याननियोगवादिपक्षमुपक्षिपति )

अन्योऽप्याह—यद्यपि वेदान्तवाक्यानां न परिनिष्पन्नब्रह्मस्वरूपपरता प्रामाण्यम् । तथाऽपि ब्रह्मस्वरूपं सिध्यत्येव । कुतः ? ध्यानविधिसामर्थ्यात् । एवमेव हि समामनन्ति–[2]"आत्मा वा अरे द्रष्टव्यः निदिध्यासितव्यः" [3]"य आत्मा अपहतपाप्मा सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः" [4]"आत्मेत्येवोपासीत" "आत्मानमेव लोकमुपासीत" इति । अत्र ध्यानविषयो हि नियोगस्वविषयभूतध्यानं ध्येयैकनिरूपणीयम्- इति ध्येयमाक्षिपत्ति । स च ध्येयस्ववाक्यनिर्दिष्ट आत्मा । स किंरूप इत्यपेक्षायां तत्स्वरूपविशेषसर्पणद्वारेण [5]"सत्यं ज्ञानमनन्तं ब्रह्म" [6]"सदेव सोम्येदमग्र आसीत्" इत्ये-

---

१. अभावत्वादेव. पा० ॥ २. बृ० ४अ. ४ ब्रा ५ ॥
३. छा. ८ प्र. ७. ख. १ ॥ ४. बृ. ३. अ. ४ ब्रा. ७ १५ ॥
५. तै० आन. १ अनु ॥ ६. छा. ६. प्र. २ ख. १ ॥

यमादीनां वाक्यानां ध्यानविधिशेषतया प्रामाण्यम्—इति। विधिवि-षयभूतध्यानशरीरानुप्रविष्टब्रह्मस्वरूपेऽपि तात्पर्यमस्त्येव। अतः "एकमेवाद्वितीयम्" १"तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" २"नेह नानाऽस्ति किञ्चन" इत्यादिभिर्ब्रह्मस्वरूपमेकमेव सत्यं तद्व्य-तिरिक्तं सर्वं मिथ्येत्यवगम्यते। प्रत्यक्षादिभिर्भेदावलम्बि च कर्मशा-स्त्रेण भेदः प्रतीयते। भेदाभेदयोः परस्परविरोधे सत्यनाद्यविद्यामू-लत्वेनापि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इति निश्चीयते। तत्र ब्रह्मध्याननियोगेन तत्साक्षात्कारफलेन निरस्तसमस्ताविद्याकृतवि-विधभेदाद्वितीयज्ञानैकरसब्रह्मरूपमोक्षः प्राप्यते॥

न च वाक्याद्वाक्यार्थज्ञानमात्रेण ब्रह्मभावसिद्धिः, अनुप-लब्धेः, विविधभेददर्शनानुवृत्तेश्च। तथा च सति श्रवणादिविधान-मनर्थकं स्यात्॥

(अथसाक्षान्मायावादिना स्वमतं पश्चाद्विवक्षता प्रथमं ध्याननियोगवादिपक्षस्यप्रतिक्षेपमाशङ्कते)

अथोच्येत—'रज्जुरेषा न सर्पः' इत्युपदेशेन सर्पभयनिवृत्ति-दर्शनात् रज्जुसर्पवत् बन्धस्य च मिथ्यारूपत्वेन ज्ञानबाध्यतया तस्य वाक्यजन्यज्ञानेनैव निवृत्तिर्युक्ता; न नियोगेन। नियोगसाध्यत्वे मोक्षस्यानित्यत्वं स्यात्, स्वर्गादिवत् मोक्षस्य नित्यत्वं हि सर्ववादि-सम्प्रतिपन्नम्। किञ्च धर्माधर्मयोः फलहेतुत्वं स्वफलानुभवानुगुणश-रीरोत्पादनद्वारेणेति ब्रह्मादिस्थावरान्तचतुर्विधशरीरसम्बन्धरूपसं-सारफलत्वमवर्जनीयम्। तस्मान्न धर्मसाध्यो मोक्षः। तथा च श्रुतिः ३"न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशतः" इति। अशरीरत्वरूपे मोक्षे धर्माधर्मसा-

---

१ छा० ६ प्र० ८ ख० ७। २ कठ० ४ वल्ली० ११।
३ छा० ८ प्र० १२ ख० १।

ध्यप्रियाप्रियविरहश्रवणात्, न धर्मसाध्यमशरीरत्वमिति विज्ञायते। न च नियोगविशेषसाध्यफलविशेषवत् ध्याननियोगसाध्यमशरीरत्वम्, अशरीरत्वस्य स्वरूपत्वेनासाध्यत्वात्। यथाऽऽहुः श्रुतयः—१"अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति" २"अप्राणो ह्यमनाश्शुभ्रः" ३"असङ्गो ह्ययं पुरुषः" इत्याद्याः। अतोऽशरीरत्वरूपो मोक्षो नित्य इति न धर्मसाध्यः। तथा च श्रुतिः— "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताद्भव्याच्च यत्तत्पश्यसि तद्वद" इति ॥

अपिच—उत्पत्तिप्राप्तिविकृतिसंस्कृतिरूपेण चतुर्विधं हि साध्यत्वं मोक्षस्य न सम्भवति। न तावदुत्पाद्यः, मोक्षस्य ब्रह्मस्वरूपत्वेन नित्यत्वात्। नापि प्राप्यः, आत्मस्वरूपत्वेन ब्रह्मणो नित्यप्राप्तत्वात्। नापि विकार्यः, दध्यादिवदनित्यत्वप्रसङ्गादेव। नापि संस्कार्यः; संस्कारो हि ४दोषापनयनेन वा गुणाधानेन वा साधयति। न तावद्दोषापनयनेन, नित्यशुद्धत्वाद्ब्रह्मणः। नाप्यतिशयाधानेन, अनाधेयातिशयरूपत्वात्। नित्यनिर्विकारत्वेन स्वाश्रयायाः पराश्रयायाश्च क्रियाया अविषयतया न निर्घर्षणेनाऽऽदर्शादिवदपि संस्कार्यत्वम्। न च देहस्थया स्नानादिक्रियया आत्मा संस्क्रियते ; किं त्वविद्यागृहीतस्तत्सङ्गतोऽहङ्कर्ता। तत्फलानुभवोऽपि तस्यैव। न चाहङ्कर्ताऽऽत्मा, तत्साक्षित्वात्। तथा च मन्त्रवर्णः—५"तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति" इति ; ६"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" ७"एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षस्सर्वभूताधिवासस्साक्षी चेता केवलो निर्गुणश्च"

१ * २ कठ० २ वल्ली० २२० १४ ॥ ३ मुण्ड० २ मु० १ ख० २ ॥
१ उ० बृ० अ० ३ ब्रा० ४ प० ॥ ४ दोषापनयनेन गुणाधानेन वा० ॥
५ मुण्ड ३ मु १ ख. १ ॥ ६ कठ. ३ वल्ली ४ ॥ ७ श्वेत. ६ अ ११ ।

८*"सपर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्" इति च। अविद्यागृहीतादहङ्कर्तुरात्मस्वरूपमनाधेयातिशयं नित्यशुद्धं निर्विकारं निष्कृष्यते। तस्मादात्मस्वरूपत्वेन न साध्यो मोक्षः॥

यद्येवं किं वाक्यार्थज्ञानेन क्रियत इति चेत्—मोक्षप्रतिबन्धनिवृत्तिमात्रमिति ब्रूमः। तथा च श्रुतयः—६"त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि" इति, ७"श्रुतं ह्येवमेव भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवश्शोचामि तं मा भगवान् शोकस्य पारं तारयतु" ८"तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः" इत्याद्याः। तस्मान्नित्यस्यैव मोक्षस्य प्रतिबन्धनिवृत्तिर्वाक्यार्थज्ञानेन क्रियते। निवृत्तिस्तु साध्याऽपि

---

* शुक्रम् अविद्या रहितम्, वासना रहितं वा। शुद्धम्-अपाप विद्धम् कर्म फल रहितं च। पर्यगात् गत्यर्था बुद्ध्यर्थाः, अमन्यतेत्यर्थः।

"अमन्यतेत्यर्थ इति"—आत्मानमिति शेषः। यद्यपि "सपर्यगात्, स आत्मा, यस्तु सर्वाणि भूतानि" इत्यादौ प्रकृत आत्मा पर्यगात् परितस्समन्तादगात् सर्वगत इत्यर्थः। शुक्रमित्याद्यशब्दाः पुल्लिङ्गत्वेन परिणेयाः सदुत्युपक्रमानुसारात्। अकायः लिङ्ग शरीर रहितः। अव्रणः अक्षतः। अस्नाविरः सिरा रहितः। अव्रणास्नाविराभ्यां स्थूल देह राहित्यमुक्तम्। शुक्रमिति बाह्याशुद्धि विरह उक्तः। शुद्ध इत्यान्तर रागाद्यभावः॥ अपाप विद्धः धर्माधर्मादि रहित इति शङ्करादिभि र्व्याख्यातम्।

---

१ मुण्ड. ३ मु. १ ख. १।　　२ कठ. ३ वल्ली. ४।
३ श्वे. ६ अ. ११।　　४ ईशा. ८।
५ पस्थाविरं. पा।　　६ प्रश्न. ६ प्रश्न ८॥
७ छा. ७ प्र. १ ख ३॥　　८ छा. ७ प्र. २६ ख. २॥

प्रध्वंसाभावरूपा न विनश्यति । १ "ब्रह्म वेद ब्रह्मैव भवति" २ "तमेव विदित्वाऽतिमृत्युमेति" इत्यादिवचनं मोक्षस्य वेदनानन्तरभावितां प्रतिपादयन्नियोगव्यवधानं प्रतिरुणद्धि । नच विदिक्रिया*३कर्मत्वेन वा ध्यानक्रियाकर्मत्वेन वा कार्यानुप्रवेशः, ४ उभयविधकर्मत्वप्रतिषेधात् । ५"अन्यदेव तद्विदितादथो + ६अविदितादधि" ७"येनेदं सर्वं विजानाति तत्केन विजानीयात्" इति । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति च ॥

नचैतावता शास्त्रस्य निर्विषयत्वम्, अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य । न हीदन्तया ब्रह्म विषयीकरोति शास्त्रम् ' अपि तु अविषयं प्रत्यगात्मस्वरूपं प्रतिपादयदविद्याकल्पितज्ञानज्ञातृज्ञेय८विभागं निवर्तयति । तथा च शास्त्रं—९"न दृष्टेर्द्रष्टारं पश्येः" इत्येवमादि। नच ज्ञानादेव बन्धनिवृत्तिरिति श्रवणादिविध्यानर्थक्यम्, स्वभावप्रवृत्तसकलेतरविकल्पविमुखीकरणद्वारेण वाक्यार्थावगतिहेतुत्वात्तेषाम् । न च ज्ञानमात्रात् बन्धनिवृत्तिर्न दृष्टेति वाच्यम्, बन्धस्य मिथ्यारूपत्वेन ज्ञानोत्तरकालं स्थित्यनुपपत्तेः । अत एव न शरीरपातादूर्ध्वमेव बन्धनिवृत्तिरिति वक्तुं युक्तम् । नहि मिथ्यारूपसर्पभयनिवृत्तिः रज्जुयाथात्म्यज्ञानातिरेकेण सर्पविनाशमपेक्षते। यदि शरीरसम्बन्धः पारमार्थिकः तदा हि तद्विनाशापेक्षा । स तु ब्रह्मव्यतिरिक्ततया न पारमार्थिकः । यस्य तु बन्धो न निवृत्तः, तस्य ज्ञानमेव न १ जातमित्यवगम्यते, ज्ञानकार्यादर्शनात् । तस्मात् शरीरस्थितिर्भवतु वा मा वा , वाक्यार्थज्ञानसमनन्तरं मुक्त एवासौ । अतो न ध्याननियोगसाध्यो मोक्ष इति न

* वेदनं ज्ञानम्, उपासनम्—ज्ञान विशेषः । अत्र वेदन शब्दो निष्प्रपञ्ची करण ज्ञान विशेषे विश्राम्यति, विवक्षा वशात्. अतो निष्प्रपञ्ची करण नियोग वादस्यापि दूषणं फलितम् । विद्युपासि कर्मत्वाभावे श्रुतिमाह 'अन्यदेव' इति ।

+ विदितात्—ज्ञेयात्, अविदितात् -ज्ञातुरित्यर्थः ।अन्यदेवेति विदि कर्मत्व निषेधः, तदेवेति ध्यान कर्मत्व निषेधः ।

१. मुण्ड० ३-मु० २-ख० ९ ।
२. श्वे० ०-अ० ८ ।
३. कर्मत्वेन ध्यानक्रियाकर्मत्वेन वा० पा ।
४. मभयकर्मत्वप्रति० पा ।
५. केन० १ ख०३ ।
६. अविदितादधि पा ।
७. बृ० ४-अ० ४ब्रा. १४ । भेदंपा
८. बृ.१-अ.४.ब्रा. २ ।१०ज्ञातपा ।

ध्यानविधिशेषतया ब्रह्मणस्सिद्धिः। अपि तु १"सत्यंज्ञानमनन्तं ब्रह्म" २ "तत्त्वमसि"३ "अयमात्मा ब्रह्म" इति तत्परेणैव पदसमुदायेन सिध्यतीति ॥

तदयुक्तं, वाक्यार्थज्ञानमात्राद्बन्धनिवृत्त्यनुपपत्तेः। यद्यपि मिथ्यारूपो बन्धो ज्ञानबाध्यः। तथाऽपि बन्धस्यापरोक्षत्वात् न परोक्षरूपेणवाक्यार्थज्ञानेन स बाध्यते, रज्ज्वादावपरोक्षसर्पप्रतीतौ वर्तमानायां 'नायं सर्पो रज्जुरेषा' इत्याप्तोपदेशजनितपरोक्षसर्पविपरीतज्ञानमात्रेण भयानिवृत्तिदर्शनात्। आप्तोपदेशस्य तु भयनिवृत्तिहेतुत्वं वस्तुयाथात्म्यापरोक्षनिमित्तप्रवृत्तिहेतुत्वेन। तथा हि–रज्जुसर्पदर्शनभयात् परावृत्तः पुरुषो 'नायं सर्पो रज्जुरेषा' इत्याप्तोपदेशेन तद्वस्तुयाथात्म्यदर्शने प्रवृत्तस्तदेव प्रत्यक्षेण दृष्ट्वा भयान्निवर्तते। न च शब्दएव प्रत्यक्षज्ञानं जनयतीति वक्तुं युक्तम्, तस्यानिन्द्रियत्वात्। ज्ञानसामग्रीष्विन्द्रियाण्येव ह्यपरोक्षसाधनानि। न चास्यानभिसंहितफलकर्मानुष्ठानमृदितकषायस्य श्रवणमननिदिध्यासनविमुखीकृतबाह्यविषयस्य पुरुषस्य वाक्यमेवापरोक्षज्ञानं जनयति, निवृत्तप्रतिबन्धे तत्परेऽपि पुरुषे ज्ञानसामग्रीविशेषाणामिन्द्रियादीनां ४ स्वविषयनियमातिक्रमादर्शनेन तदयोगात् ॥

न च ध्यानस्य वाक्यर्थज्ञानोपायता, इतरेतराश्रयत्वात् वाक्यार्थज्ञाने जाते तद्विषयध्यानम्, ध्याने निवृत्ते वाक्यार्थज्ञानम्–इति न च ध्यानवाक्यार्थज्ञानयोर्भिन्नविषयत्वम्, तथा सति ध्यानस्य वाक्यार्थज्ञानोपायता न स्यात्। न ह्यन्यध्यानमन्योन्मुख्यमुत्पादयति। ज्ञातार्थस्मृतिसन्तीतरूपस्य ध्यानस्य वाक्यार्थज्ञानपूर्वकत्वमवर्जनीयम्

१. तै० आन० १-अनु। ३. माण्डूक्य० १-ख० २।
२ छा० ६-प्र० ८ ख० ७। ४. स्व स्व श्च विषय०, पा।

ध्येयब्रह्मविषयज्ञानस्य हेत्वन्तरासंभवात् ×न च ध्यानमूलं ज्ञानं वाक्यान्तरजन्यम् . निवर्तकज्ञानं तत्त्वमस्यादिवाक्यजन्यमिति युक्तम्। ध्यानमूलमिदं वाक्यान्तरजन्यं ज्ञानं तत्त्वमस्यादिवाक्यजज्ञानेनैक विषयम्, भिन्नविषयं वा एक विषयत्वेतदेवेनरेतराश्रयत्वम्। भिन्नविषयत्वे ध्यानेन तदौन्मुख्यापादनासंभवः। किञ्च ध्यानस्य ध्येयध्यात्राद्यनेकप्रपञ्चापेक्षत्वान्निष्प्रपञ्चब्रह्मात्मैकत्वविषयवाक्यार्थज्ञानोत्पत्तौ दृष्टद्वारेण नोपयोग इति वाक्यार्थज्ञानमात्रादविद्यानिवृत्तिं वदतः श्रवण मननदिध्यासनविधीनामानर्थक्यमेव॥

यतो वाक्यादापरोक्ष्यज्ञानासम्भवाद्वाक्यार्थज्ञानेनाविद्या न निवर्तते, तत एव जीवनमुक्तिरपिदूरोत्सारिता। का चेयं जीवन्मुक्तिः? । स शरीरस्यैव मोक्ष इति चेत्—'माता मे वन्ध्या' इतिवदसङ्गतार्थं वचः, यतस्सशरीरत्वंबन्धः, अशरीरत्वमेव मोक्ष इतित्वयैव श्रुतिभिरुपपादितम्। अथ सशरीरत्वप्रतिभासे वर्तमानेयस्यायंप्रतिभासो मिथ्येति प्रत्ययः, तस्य सशरीरत्वनिवृत्तिरिति। न, मिथ्येति प्रत्ययेनसशरीरत्वं निवृत्तं चेत - कथं सशरीरस्य मुक्तिः ? । अर्जावतोऽपि मुक्तिस्सशरीरत्वमिथ्याप्रतिभासनिवृत्तिरेवेति कोऽयं जीवन्मुक्तिरिति विशेषः। अथ सशरीरत्वप्रतिभासो बाधितोऽपि यस्य द्विचन्द्रज्ञानवदनुवर्तते, स जीवन्मुक्त इति चेत् न, ब्रह्मव्यतिरिक्तसकलवस्तुविषयत्वाद्बाधकज्ञानस्य। कारणभूताविद्याकर्मादिदोषस्सशरीरत्वप्रतिभासेन सह तेनैव बाधित इति बाधितानुवृत्तिर्न शक्यते वक्तुम्। १द्विचन्द्रादौ तु तत्प्रतिभासहेतुभूतदोषस्य बाधकज्ञानभूतचन्द्रैकत्वज्ञानाविषयत्वेनाबाधितत्वात् द्विचन्द्रप्रतिभासानुवृत्तियुक्ता। किञ्च २"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति सद्विद्यानिष्ठस्य शरीरपातमात्रमपेक्षते मोक्ष इतिवदन्तीयं श्रुतिः जीवन्मुक्तिं

---

× हेत्वन्तरासम्भवात्—ब्रह्मणः प्रत्यक्षाद्यगोचरत्वादिति भावः।

१ द्विचन्द्र ज्ञानादौ, पा॥ २. छा। ६ प्र १४ खं. २॥

वारयति ।·सैषा जीवन्मुक्तिरापस्तम्बेनापि निरस्ता—[1]"वेदानिमं * लोकममुं च परित्यज्यात्मानमन्विच्छेत् । बुद्धे क्षेमप्रापणं तच्छास्त्रै-र्विप्रतिषिद्धम् । बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत । एतेन परं व्याख्यातम् [2]" इति । अनेन ज्ञानमात्रान्मोक्षश्च निरस्तः।अतस्सकलभेद-निवृत्तिरूपा मुक्तिर्जीवतो न संभवात ॥

तस्माद्ध्याननियोगेन ब्रह्मापरोक्षज्ञानफलेनैव बन्धनिवृत्तिः । न च नियोगसाध्यत्वे मोक्षस्यानित्यत्वप्रसक्तिः, प्रतिबन्धनिवृत्तिमात्रस्यैव साध्यत्वात् । किंच—न नियोगेन साक्षात् बन्धनिवृत्तिः क्रियते; किन्तु निष्प्रपञ्चज्ञानैकरसब्रह्मापरोक्ष्यज्ञानेन । नियोगस्तु तदापरोक्ष्यज्ञानं-जनयति ॥

कथं नियोगस्य ज्ञानोत्पत्तिहेतुत्वमिति चेत्—कथं वा भव-तोऽनभिसंहितफलानां कर्मणां वेदनोत्पत्तिहेतुत्वम् ? । मनोनैर्मल्यद्वारे-णेति चेत्— ममापि तथैव । मम तु निर्मले मनसि शास्त्रेण ज्ञानमु-त्पाद्यते । तव तु नियोगेन मनसि निर्मले ज्ञानसामग्री वक्तव्येति चेत्-ध्याननियोगनिर्मलं मन एव साधनमिति ब्रूमः । केनावगम्यते इति चेत्— भवतो वा कर्मभिर्मनो निर्मलं भवति, निर्मले मनसि श्रवणम-नननिदिध्यासनैस्सकलेतरविषयविमुखस्यैव शास्त्रं निवर्तकज्ञानमुत्पा

*वेद शब्देन त्रिवर्ग साधन कर्माण्युच्यन्ते, तत्फलमुच्यते इमं लोकममुं चेति । बुद्धे—वाक्यार्थ ज्ञाने जाते सति क्षेम प्रापणम् मोक्षः । तच्छास्त्रै र्विप्रतिषिद्धम्—शास्त्रैरिति बहु वचनस्यायमभावः वाक्यार्थ ज्ञानोत्तरभाव्यु-पासन विधि परैः 'एवं वर्तयन् यावदायुषम्' इत्याप्रयाणादनु वृत्ति परैर्मोक्षस्य शरीर पात मात्र सापेक्षत्व परैस्तयोर्ध्वमायन्न मृतत्वमेति" इति नाडी विशेष निष्क्रमण परैरर्चिरादि मार्गेण देश विशेष प्राप्ति परैश्चानेकैः शास्त्रैं विरोध इति "विप्रतिषिद्धमिति" विशेषेण प्रतिषिद्धम् ।

1. अपस्तम्बधर्मे.　　　　2 प्र ९-पटल

दयतीति केनावगम्यते ? । १" विविदिषन्ति यज्ञेन दानेन तपसाना. शकेन " २ " श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" ३" ब्रह्म वेद ब्रह्मैव भवति " इत्यादिभिश्शास्त्रैरिति चेत्...ममापि ॐ" श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" ४ "ब्रह्मविदाप्नोति परम्" ५" न चक्षुषा गृह्यते नापि वाचा " ६"मनसा तु विशुद्धेन" ७ "हृदा मनीषा मन साभिक्लृप्तः" ८ इत्यादिभिश्शास्त्रैर्ध्याननियोगेन मनो निर्मलं भवति निर्मलं च मनो ब्रह्मापरोक्षज्ञानं जनयतीत्यवगम्यते— इति ९निरवद्यम् ॥

१०"नेदं यदिदमुपासते"इत्युपास्यत्वं प्रतिषिद्धमिति चेत् नैवम्, नात्र ब्रह्मण उपास्यत्वं प्रतिषिध्यते; अपि तु ब्रह्मणो जगद्वैरूप्यं प्रति पाद्यते । यदिदं जगदुपासते प्राणिनः, नेदं ब्रह्म; तदेव ब्रह्म त्वं विद्धि; यद्वाचाऽनभ्युदितं येन वागभ्युद्यते" इति वाक्यार्थः । अन्यथा 'तदेव ब्रह्म त्वं विद्धि' इति विरुध्यते। ध्यानविधिवैयर्थ्यं च स्यात् । अतो ब्रह्मसाक्षात्कारफलेन ध्याननियोगेनैवापरमार्थभूतस्य कृत्स्नस्य द्रष्टृदृश्यादिप्रपञ्चरूपबन्धस्य निवृत्तिः ॥

( अथायमेवध्याननियोगवादी भास्करमतं दूषयितुं तदभिमतं भेदाभेदविरोधमनुवदति ) ।

यदपि कैश्चिदुक्तम्...भेदाभेदयोर्विरोधो न विद्यते– इति,तद युक्तम्' नहि शीतोष्णतमःप्रकाशादिवद्भेदाभेदावेकस्मिन्वस्तुनि संङ्गच्छेते। अथोच्येत–सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यम् । सर्वंच भिन्ना

१. बृ.६.अ.४.ब्रा.२२॥ २.बृ.६.अ.५.ब्रा.६॥ ३. मुण्ड. ३. मु.२.ख.९ ॥ ४. तै.आ. १.अनु॥ ५. मुंड.३.मु.१.ख.८॥ ६॥ ७.कठ.६. वल्ली.९ ॥

८. इत्यादिशास्त्रैः पा ॥

९. इतिशब्दो नानन्तरवाक्यशेषः, इति श्रुतप्रकाशिकापर्यालोचनया भाष्ये'निरवद्यम्' इति पाठऽधिक इति प्रतिभाति।

१० केन १ ख ५ ॥

भिन्नं प्रतीयते। कारणात्मना जात्यात्मना चाभिन्नम्। कार्यात्मना व्यक्त्यात्मना च भिन्नम्। छायातपादिषु विरोधस्सहानवस्थानलक्षणो भिन्नाधारत्वरूपश्च। कार्यकारणयोर्जातिव्यक्त्योश्च तदुभयमपि नोपलभ्यते। प्रत्युत एकमेव वस्तु द्विरूपं प्रतीयते; यथा 'मृदयंघटः' 'खण्डो गौः' 'मुण्डो गौः' इति। न चैकरूपं किंचिदपि वस्तु १लोकेदृष्टचरम्। न च तृणादेर्ज्वलनादिवदभेदो भेदोपमर्दी दृश्यत इति। न वस्तुविरोधः; मृत्सुवर्णगवाश्वाद्यात्मनाऽवस्थितस्यैव घटमुकुटखण्डवडवाद्यात्मना चावस्थानात्। न चाभिन्नस्य भिन्नस्य च वस्तुनोऽभेदो भेदश्च एक एवाकार इतीश्वराज्ञा। प्रतीतत्वादैकरूप्यं चेत्-प्रतीतत्वादेव भिन्नाभिन्नत्वमिति द्वैरूप्यमप्यभ्युपगम्यताम। न हि विस्फारिताक्षः पुरुषो घटशरावखण्डमुण्डादिषु वस्तुषूपलभ्यमानेषु 'इयं मृत्, अयं घटः, इदं गोत्वम्, इयं व्यक्तिः' इति विवेक्तुं शक्नोति। अपि तु 'मृदयं घटः, खण्डोगौः' इत्येव प्रत्येति। अनुवृत्तिबुद्धिबोध्यं कारणमाकृतिश्च, व्यावृत्तिबुद्धिबोध्यं कार्यं व्यक्तिश्चेति विविनक्तीति चेत्—नैवम्, विविक्ताकारानुपलब्धेः। न हि २सुसूक्ष्ममपि निरीक्षमाणैः 'इदमनुवर्तमानम्, इदं च व्यावर्तमानम्' इति पुरोऽवस्थिते वस्तुन्याकारभेद उपलभ्यते। यथा संप्रतिपन्नैक्ये कार्ये विशेषे चैकत्वबुद्धिरुपजायते; तथैव सकारणे ससामान्ये चैकत्वबुद्धिरविशिष्टोपजायते। एवमेव देशतः कालतश्चाकारतश्चात्यन्तविलक्षणेष्वपि वस्तुषु तदेवेदमिति प्रत्यभिज्ञा जायते। अतो ग्रात्मकमेव वस्तुप्रतीयते इति कार्यकारणयोर्जातिव्यक्त्योश्चात्यन्तभेदोपपादनं प्रतीतिपराहतम्। अथोच्येत...'मृदयं घटः खण्डो गौः' इतिवत् 'देवोऽहं मनुष्योऽहम' इति सामानाधिकरण्येनैक्यप्रतीतेरात्मशरीरयोरपि भिन्नाभिन्नत्वं स्यात्; अत इदं भेदाभेदोपपादनं निजसदननिहितहुतवहज्वालायत इति. तदिदमनाकलित भेदाभेदसाधन-

१. लौकिकं दृ. पा ॥ २. सूक्ष्म. पा ॥

सामानाधिकरण्यतदर्थयाथात्म्यावबोधविलसितम् । तथा हि— अबाधित एव प्रत्ययः सर्वत्रार्थं व्यवस्थापयति । देहाद्यात्माभिमानस्तु आत्मयाथात्म्यगोचरैस्सर्वैः प्रमाणैर्बाध्यमानो रज्जुसर्पादिबुद्धिवन्नात्मशरीरयोरभेदं साधयति । 'खण्डो गौः' मुण्डो गौः' इति सामानाधिकरण्यस्य न केनचित्कचिद्बाधो दृश्यते । तस्माभ्रातिप्रसङ्गः । अत एव जीवोऽपि ब्रह्मणो नात्यन्तभिन्नः । अपि तु ब्रह्मांशत्वेन भिन्नाभिन्नः । तत्राभेद एव स्वाभाविकः, भेदस्त्वौपाधिकः कथमवगम्यत इति चेत् ?- १"तत्त्वमसि" २ "नान्योऽतोऽस्ति द्रष्टा" ३"अयमात्मा ब्रह्म" इत्यादिभिश्श्रुतिभिः ४ "ब्रह्मेमे द्यावापृथिवी" इति प्रकृत्य "ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवा उत । स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्मोत वा पुमान्" इत्याथर्वणिकानां संहितोपनिषदि ब्रह्मसूक्ते अभेदश्रवणाच्च । ५ "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" ६"ज्ञाज्ञौ द्वावजावीशनीशौ" ७ "क्रियागुणैरात्मगुणैश्च *तेषां संयोगहेतुरपरोऽपि दृष्टः" ८ "प्रधानक्षेत्रज्ञपतिर्गुणेशःसंसारमोक्षस्थितिबन्धहेतुः" ९"स कारणं करणाधिपाधिपः" १० "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" ११ "य आत्मनि तिष्ठन्" १२ "प्राज्ञेनाऽत्मना

* क्रिया गुणाः—संसार हेतु गुणाः, आत्म गुणाः मोक्ष हेतु गुणाः, तैस्संयोग हेतुरित्यर्थः ।

१ छां ६ । प्र ८ । ख ७॥ २ बृ ५ । अ ७ । ब्रा २३॥
३ बृ ६ । अ ४ ब्रा ५॥ ४॥
५ श्वे ६ । अ १३॥ ६ श्वे १ । अ ९॥
७ श्वे ५ । अ १२॥ ८ श्वे ६ । अ १६॥
९ श्वे ६ अ । ९॥ १० श्वे ४ । अ ६॥
११ बृ ५ । अ ७ ब्रा २२ । माध्यन्दिनपाठः ॥ १२ बृ ६ अ । ३ ब्रा । ११, २१

संपरिष्वक्तो न बाह्यं किञ्चन वेद'..."प्राज्ञेनाऽत्मनाऽन्वारूढः उत्सर्जन्याति" १ "तमेव विदित्वाऽतिमृत्युमेति इत्यादिभिर्भेद श्रवणाच्च, जीवपरयोर्भेदाभेदाववश्याश्रयणीयौ. तत्र २ "ब्रह्म वेद ब्रह्मैव भवति इत्यादिभिर्मोक्षदशायां जीवस्य ब्रह्मस्वरूपापत्तिव्यपदेशात्। ३ "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् इति तदानीं भेदेनेश्वरदर्शननिषेधाच्चाभेदस्स्वाभाविक इत्यवगम्यते । ननु च ४" सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता इति सहश्रुत्या तदानीमपि भेदः प्रतीयते। वक्ष्यति च ५ 'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ६ भोगमात्रसाम्यलिङ्गाच्च इति। नैतदेवम् ७" नान्योऽतोऽस्ति द्रष्टा" इत्यादिश्रुतिशतैरात्मभेदप्रतिषेधात्। "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता इति सर्वैः कामैस्सह ब्रह्माश्नुते-सर्वगुणान्वितं ब्रह्माश्नुत इत्युक्तं भवति। अन्यथा ब्रह्मणा सहेत्यप्राधान्यं ब्रह्मणः प्रसज्येत। "जगद्व्यापारवर्जम् इत्यत्र मुक्तस्य भेदेनावस्थाने सत्यैश्वर्यस्य न्यूनताप्रसङ्गो वक्ष्यते, अन्यथा ८ "संपद्याविर्भावस्स्वेनशब्दात् इत्यादिभिर्विरोधात्। तस्मादभेद एव स्वाभाविकः। भेदस्तु जीवानां परस्मात् ब्रह्मणः, परस्परं च बुद्धीन्द्रियदेहोपाधिकृतः। यद्यपि ब्रह्म निरवयवं सर्वगतं च; तथाऽप्याकाश इव घटादिना बुद्ध्याद्युपाधिना ब्रह्मण्यपि भेदस्संभवत्येव। न च भिन्ने ब्रह्मणि बुद्ध्याद्युपाधिसंयोगः, बुद्ध्याद्युपाधिसंयोगाद्ब्रह्मणि भेद इतीतरेतराश्रयत्वम्; उपाधेस्तत्संयोगस्य च कर्मकृतत्वात् तत्प्रवाहस्य चानादित्वात्। एतदुक्तं भवति—पूर्वकर्मसंबद्धाज्जीवात् स्वसंबद्ध एवोपाधिरुत्पद्यते तद्युक्तात्कर्म। एवं बीजाङ्कुरन्यायेन कर्मोपाधिसंबन्धस्यानादित्वान्न दोषः—इति। अतो जीवानां परस्परं ब्रह्मणा

१ श्व। ३ ख। ८॥ २ मुण्ड। ३ मु। २ ख। ९॥
३ बृ। ४ ब्र। ४ बा १४॥ ४ तै। आ १। अनु॥
५ प्रतीयते—इति पा॥ ६ शारी। ४ अ पा १७
७ बृ। ५ अ। ७ ब्रा। २३॥ ८ शारी ४ ४। ४। १

चाभेदवत् भेदोऽपि स्वाभाविकः, उपाधीनामुपाध्यन्तराभावात्, तदभ्युप १ गमेऽनवस्थानाच्च । अतो जीवकर्मानुरूपं ब्रह्मणो भिन्नाभिन्नस्वभावा एवोपाधयउत्पद्यन्ते-इति ॥

( अथ भेदाभेदपक्षं ध्याननियोगवादी दूषयति )

अत्रोच्यते — अद्वितीयसच्चिदानन्दब्रह्मध्यानविपर्यविधिपरं वेदान्तवाक्यजातमिति वेदान्तवाक्यैरभेदः प्रतीयते । भेदावलम्बिभिः कर्मशास्त्रैः प्रत्यक्षादिभिश्च भेदः प्रतीयते । भेदाभेदयोः परस्परविरोधात् अनाद्यविद्यामूलतयाऽपि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इत्युक्तम् । तत्र यदुक्तं—भेदाभेदयोरुभयोरपि प्रतीतिसिद्धत्वान्न विरोधः--इति । तदयुक्तम्, कस्माच्चित्कस्यचिद्विलक्षणत्वं हि तस्मात्तस्य भेदः । तद्विपरीतत्वं चाभेदः । तयोस्तथाभावातथाभावरूपयोरेकत्र सम्भवमनुन्मत्तः को ब्रवीति ?। कारणात्मना जात्यात्मना चाभेदः, कार्यात्मना व्यक्त्यात्मना च भेदः--इत्याकारभेदादविरोध इति चेत्—न; विकल्पासहत्वात् । आकारभेदादविरोधं वदतः किमेकस्मिन्नाकारे भेदः, आकारान्तरे चाभेदः—इत्यभिप्रायः ?; उताकारद्वययोगिवस्तुगतावुभावपीति ?। पूर्वस्मिन् कल्पे - व्यक्तिगतो भेदः, जातिगतश्चाभेद इति नैकस्य द्व्यात्मकता । जातिर्व्यक्तिरिति चैकमेव वस्त्विति चेत्—तर्ह्याकारभेदादविरोधः परित्यक्तः स्यात् । एकस्मिंश्च विलक्षणत्वतद्विपर्ययौ विरुद्धावित्युक्तम् । द्वितीये तु कल्पे अन्योन्यविलक्षणमाकारद्वयमप्रतिपन्नं च तदाश्रयभूतं वस्त्विति । तृतीयाभ्युपगमेऽपि त्रयाणामन्योन्यवैलक्षण्यमेवोपपादितं स्यात्; न पुनरभेदः । आकारद्वयनिरूप्यमाणाविरोधं तदाश्रयभूते वस्तुनि भिन्नाभिन्नत्वमिति चेत् --स्वस्माद्विलक्षणं स्वाश्रयमाकारद्वयं स्वस्मिन्विरुद्धधर्मद्वयसमावेशनिर्वाहकं कथं भवेत् ?। अविलक्षणं तु कथंतराम् ?। आकारद्वयतद्वतोश्च द्व्यात्मकत्वाभ्युपगमे निर्वाहकान्तरापेक्षयाऽनवस्था स्यात् । न च सम्प्रतिपन्नैक्यव्यक्तिप्रतीतिवत् ससामान्येऽपि वस्तुन्येकरूपा प्रतीतिरुपजायते । यतः 'इदमित्थम्'

१ गमे चानवस्थानात् पा ॥

इति सर्वत्र प्रकार प्रकारित्वैव सर्वा प्रतीतिः । नत्र प्रकारांशो जातिः प्रकार्यंशो व्यक्तिरिति नैकाकारा प्रतीतिः । अत एव जीवस्यापि ब्रह्मणो भिन्नाभिन्नत्वं न सम्भवति । तस्मादभेदस्यानन्यथासिद्ध-शास्त्रमूलत्वादनाद्यविद्यामूल एव भेदप्रत्ययः । नन्वेवं ब्रह्मण एवाज्ञत्वं १तन्मूलाश्च जन्मजरामरणादयो दोषाः प्रादुःष्युः । ततश्च २"यस्स-र्वज्ञस्सर्ववित्" ३"एष आत्माऽपहतपाप्मा" इत्यादीनि शास्त्राणि बाध्येरन् । नैवम्—अज्ञानादिदोषाणामपरमार्थत्वात् । भवतस्तूपाधि-ब्रह्मव्यतिरिक्तं वस्त्वन्तरमनभ्युपगच्छतो ब्रह्मण्येवोपाधिसंसर्ग-स्तत्कृताश्च ४जीवत्वाज्ञत्वादयो दोषाः परमार्थत एव भवेयुः न हि ब्रह्मणि निरवयवे अच्छेद्ये सम्बद्ध्यमाना उपाधयस्तच्छित्वा भित्वा वा सम्बद्ध्यन्ते । अपि तु ब्रह्मस्वरूपे संयुज्य तस्मिन्नेव स्वकार्याणि कुर्वन्ति । यदि ५मन्वीत – उपाध्युपहितं ब्रह्म जीवः । स चाणुपरिमाणः । अणुत्वं चावच्छेदकस्य मनसोऽणुत्वात् । स चावच्छेदोऽनादिः एवमुपाध्युपहितांशे सम्बध्यमाना दोषाः अनु-पहिते परे ब्रह्मणि न सम्बध्यन्ते—इति । अयं प्रष्टव्यः-किमुपाधिना छिन्नो ब्रह्मखण्डोऽणुरूपो जीवः ? उताच्छिन्न एवाणुरूपोपाधिसंयुक्तो ब्रह्मप्रदेशविशेषः ? । उतोपाधिसंयुक्तं ब्रह्मस्वरूपम् ? । अथोपाधि-संयुक्तं चेतनान्तरं ? । अथोपाधिरेव ? इति । अच्छेद्यत्वाद्ब्रह्मणः प्रथमः कल्पोन कल्पते । आदिमत्त्वं च जीवस्य स्यात् । एकस्य सतो द्वैधीकरणं हि च्छेदनम् । द्वितीये तु कल्पे ब्रह्मण एव प्रदेशविशेषे उपाधिसम्बन्धादौपाधिकास्सर्वे दोषास्तस्यैव स्युः । उपाधौ गच्छ-त्युपाधिना स्वसंयुक्तब्रह्मप्रदेशाकर्षणायोगादनुक्षणमुपाधिसंयुक्तब्रह्म-प्रदेशभेदात् क्षणेक्षणे बन्धमोक्षौ च स्याताम् । आकर्षणे चाच्छि-न्नत्वात् कृत्स्नस्य ब्रह्मणः आकर्षणं स्यात् । निरंशस्य व्यापिनः आक-र्षणं न सम्भवतीति चेत्—तर्हि उपाधिरेव गच्छतीति पूर्वोक्त एव दोषः स्यात् । अच्छिन्नब्रह्मप्रदेशेषु सर्वोपाधिसंसर्गे सर्वेषां च

---

१ तन्मूला जन्ममरणा पा० ॥  २ मुण्ड । १ मु । १ ख
३ छा । ८ प्र० १ ख० ५  ४ जीवत्वादयो पा० ।
५ मन्वीथा पा० ।

जीवानां ब्रह्मण एव १ प्रदेशत्वेनैकत्वेन प्रतिसन्धानं न स्यात्। प्रदेशभेदादप्रतिसन्धाने चैकस्यापि स्वोपाधौ २ गच्छति प्रतिसन्धानं न स्यात्। तृतीये तु कल्पे ब्रह्मस्वरूपस्यैवोपाधिसम्बन्धेन जीवत्वापातात् तदतिरिक्तानुपहितब्रह्मासिद्धिः स्यात्। सर्वेषु च देहेष्वेक एव जीवः स्यात्। तुरीये तु कल्पे ब्रह्मणोऽन्य एव जीव इति जीवभेदस्यौपाधिकत्वं परित्यक्तं स्यात्। चरमे चार्वाकपक्ष एव परिगृहीतः स्यात्। तस्मादभेदशास्त्रबलेन कृत्स्नस्य भेदस्याविद्यामूलत्वमेवाभ्युपगन्तव्यम्। अतः प्रवृत्तिनिवृत्तिप्रयोजनपरतयैव शास्त्रस्य प्रामाण्येऽपि ध्यानविधिशेषतया वेदान्तवाक्यानां ब्रह्मस्वरूपे प्रामाण्य ३ मुपपन्नम्--इति॥

## ( ध्याननियोगवादिपक्षं दूषयति )

तदप्ययुक्तम्--ध्यानविधिशेषत्वेऽपि वेदान्तवाक्यानामर्थसत्यत्वे प्रामाण्यायोगात्। एतदुक्तं भवति--ब्रह्मस्वरूपगोचराणि वाक्यानि किं ध्यानविधिनैकवाक्यतामापन्नानि ब्रह्मस्वरूपे प्रामाण्यं प्रतिपद्यन्ते; उत स्वतन्त्राण्येव ?। एकवाक्यत्वे ध्यानविधिपरत्वेन ब्रह्मस्वरूपे तात्पर्यं न सम्भवति। भिन्नवाक्यत्वे प्रवृत्तिनिवृत्तिप्रयोजनविरहादनवबोधकत्वमेव। न च वाच्यम्--ध्यानं नाम स्मृतिसन्ततिरूपम्, तच्च स्मर्तव्यैकनिरूपणीयमिति ध्यानविधेस्स्मर्तव्यविशेषाकाङ्क्षायाम् ४"इदं सर्वं यदयमात्मा" ५"ब्रह्म सर्वानुभूः" ६"सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादीनि स्वरूपतद्विशेषादीनि समर्पयन्ति। तेनैकवाक्यतामापन्नान्यर्थसद्भावे प्रमाणम्--इति; ध्यानविधेस्स्मर्तव्यविशेषापेक्षत्वेऽपि ७"नाम ब्रह्म" इत्यादिदृष्टिविधिवदसत्येनाप्यर्थविशेषेण ध्याननिर्वृत्त्युपपत्तेः ध्येयसत्यत्वानपेक्षणात्।

१ प्रदेशत्वेनैकत्वप्रतिसं। २ गच्छति सति।
३ उपपन्नतरम्। ४ बृ० ४ अ० ४ ब्रा० ६।
५ बृ० ४ अ० ५ ब्रा० १६। ६ तै० आनं० १ अनु०।
७ छां० ७ प्र० १ ख० ५। *मनो ब्रह्म० पा० छा०। ३ प्र० ३ ख० २।

अतो वेदान्तवाक्यानां प्रवृत्तिनिवृत्तप्रयोजनविधुरत्वाद्धयानविधि-शेषत्वेऽपि ध्येयविशेषस्वरूपसमर्पणमात्रपर्यवसानात्, स्वातन्त्र्येऽपि बालानुराद्युपच्छन्दनवाक्यवत् ज्ञानमात्रेणैव पुरुषार्थपर्यन्ततासिद्धेश्च परिनिष्पन्नवस्तुसत्यतागोचरत्वाभावात् ब्रह्मणश्शास्त्रप्रमाणकत्वं न सम्भवतीति प्राप्तम्।

( सिद्धान्तः )

तत्र प्रतिपाद्यते—तत्तु समन्वयात् इति। समन्वयः— सम्यगन्वयः पुरुषार्थतयाऽन्वय इत्यर्थः। परम पुरुषार्थभूतस्यानवधिकातिशयानन्दस्वरूपस्य ब्रह्मणोऽभिधेयतयाऽन्वयात् तत् शास्त्रप्रमाणकत्वं सिध्यत्येवेत्यर्थः। निरस्तनिखिलदोषनिरतिशयानन्दस्वरूपतया परमप्राप्यं ब्रह्म बोधयन्वेदान्तवाक्यगणः प्रवृत्तिनिवृत्तिपरताविरहान्न प्रयोजनपर्यवसायीति ब्रुवाणो राजकुलवासिनः पुरुषस्य कौलेयककुलाननुप्रवेशेन प्रयोजनशून्यतां ब्रूते। एतदुक्तं भवति-अनादिकर्मरूपाविद्यावेष्टनतिरोहितपरावरतत्त्वयाथात्म्यस्वरूपावबोधानां देवासुरगन्धर्वसिद्धविद्याधरकिन्नरकिम्पुरुष१यक्षराक्षसपिशाचमनुजपशुशकुनिसरीसृपवृक्षगुल्मलतादूर्वादीनां स्त्रीपुन्नपुंसकभेदभिन्नानां क्षेत्रज्ञानां व्यवस्थितधारकपोषकभोग्यविशेषाणां मुक्तानां स्वस्य चाविशेषेणानुभवसम्भवे स्वरूपगुणविभवचेष्टितैरनवधिकातिशयानन्दजननपरंब्रह्मास्तीति बोधयदेव वाक्यं प्रयोजनपर्यवसायि। प्रवृत्तिनिवृत्तिनिष्ठं तु यावत्पुरुषार्थान्वयबोधं न प्रयोजनपर्यवसायि। एवं भूतं परं ब्रह्म कथं प्राप्यत इत्यपेक्षायां २"ब्रह्मविदाप्नोति परम्" ३"आत्मानमेव लोकमुपासीत" इति वेदनादिशब्दैरुपासनं ब्रह्मप्राप्त्युपायतया विधीयते। यथा ४स्ववेश्मनि 'निधिरस्ति' इति वाक्येन निधिसद्भावं ज्ञात्वा तृप्तस्सन् पश्चात्तदुपादाने च प्रयतते।

---

१यक्षरक्षःपि। २ तै० आनं १ अनु

३ बृ० ३ ब्रा० ४ ब्रा० १२। ४ तव वेश्मनि।

यथाच-कश्चिद्राजकुमारो बालक्रीडासक्तो नरेन्द्रभवनान्निष्क्रान्तो मार्गाद्भ्रष्टो नष्ट इति राज्ञा विज्ञातस्स्वयं चाज्ञातपितृकः केनचिद्द्विजवर्येण वर्धितोऽधिगतवेदशास्त्रष्षोडशवर्षस्सर्वकल्याणगुणाकरस्तिष्ठन् 'पिता ते सर्वलोकाधिपतिः गाम्भीर्यौदार्यवात्सल्यसौशील्यशौर्यवीर्यपराक्रमादिगुणसम्पन्नस्त्वामेव नष्टं पुत्रं दिदृक्षुः पुरवरे तिष्ठति' इति केनचिदभियुक्ततमेन प्रयुक्तं वाक्यं शृणोति चेत्—तदानीमेव 'अहं तावत् जीवतः पुत्रः, मत्पिता च सर्वसम्पत्समृद्धः' इति निरतिशयहर्षसमन्वितो भवति । राजा च स्वपुत्रं जीवन्तमरोगमति मनोहरदर्शनं विदितसकलवेद्यं श्रुत्वाऽवाप्तसमस्त [1] पुरुषार्थो भवति । पश्चात्तदुपादाने च प्रयतते । पश्चात्तावुभौ सङ्गच्छेते च– इति ॥

यत्पुनः—परिनिष्पन्नवस्तुगोचरस्य वाक्यस्य तज्ज्ञानमात्रेणापि पुरुषार्थपर्यवसानात् बालातुराद्युपच्छन्दनवाक्यवन्नार्थसद्भावे प्रामाण्यम—इति । तदसत्–अर्थसद्भावाभावे निश्चिते ज्ञातोऽप्यर्थः पुरुषार्थाय न भवति । [2]बालातुरादीनामप्यर्थसद्भावभ्रान्त्या हर्षाद्युत्पत्तिः । तेषामेव तस्मिन्नेव ज्ञाने विद्यमाने यद्यर्थाभावनिश्चयो जायेत; ततस्तदानीमेव हर्षादयो निवर्तेरन् । औपनिषदेष्वपि वाक्येषु ब्रह्मास्तित्वतात्पर्याभावनिश्चये ब्रह्मज्ञाने सत्यपि पुरुषार्थपर्यवसानं न स्यात् । अतः [3]"यतो वा इमानि भूतानि जायन्ते" इत्यादिवाक्यं निखिलजगदेककारणं निरस्तनिखिलदोषगन्धं सार्वज्ञ्यसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणाकरमनवधिकातिशयानन्दं ब्रह्मास्तीति बोधयतीति सिद्धम् ॥ ४ ॥

इति श्रीशारीरकमीमांसाभाष्ये समन्वयाधिकरणम् ॥ ४॥

१ पुरुषार्थो भवति पश्चात्तावुभौ सङ्गच्छेते च पा० । २ बालादीनामर्थं ।
३ तै भृगु० १ अनु १ । ४ हर्षाद्युपपत्ति पा० ।

## ( शारीरकमीमांसाभाष्ये ईक्षत्यधिकरणम् ॥५॥ )

# ईक्षतेर्नाशब्दम् ।१।१।५॥

१"यतो वा इमानि" इत्यादिजगत्कारणवादिवाक्यप्रतिपाद्यं सर्वज्ञं सर्वशक्ति समस्तहेयप्रत्यनीककल्याणगुणैकतानं ब्रह्म जिज्ञास्यमित्युक्तम्। इदानीं जगत्कारणवादिवाक्यानामानुमानिकप्रधानादिप्रतिपादनानर्हतोच्यते—ईक्षतेर्नाशब्दम्—इत्यादिना॥

इदमाम्नायते छान्दोग्ये—२"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इत्यादि ३ तत्र सन्देहः—किं सच्छब्दवाच्यं जगत्कारणं परोक्तमानुमानिकं प्रधानम्?, उतोक्तलक्षणं ब्रह्म--इति॥

किं प्राप्तम्? प्रधानमिति। कुत? *"सदेव सोम्येदमग्र आसीदेकमेव" इतीदंशब्दवाच्यस्य चेतनभोग्यभूतस्य सत्त्वरजस्तमोमयस्य वियदादिनानारूपविकारावस्थस्य वस्तुनः कारणावस्थां वदति। कारणभूतद्रव्यस्यावस्थान्तरापत्तिरेव हि कार्यता। अतो यद्द्रव्यं यत्स्वभावं च कार्यावस्थम्; तत्स्वभावं तदेव द्रव्यं कारणावस्थम्। सत्त्वादिमयं च कार्यमिति गुणसाम्यावस्थं प्रधानमेव हि कारणम्। तदेवोपसंहृतसकलविशेषं सन्मात्रमिति *"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यभिधीयते। तत एव च कार्यकारणयोरनन्यत्वम्। तथा सत्येवैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः। अन्यथा ४"यथा सोम्येकेन मृत्पिण्डेन" इत्यादि मृत्पिण्डतत्कार्यदृष्टान्तदार्ष्टान्तिकयोर्वैरूप्यं चेति जगत्कारणवादिवाक्येन महर्षिणा कपिलेनोक्तं प्रधानमेव प्रतिपाद्यते। प्रतिज्ञादृष्टान्तरूपेणानुमानवेषमेव चेदं वाक्यमिति सच्छब्दवाच्यमानुमानिकमेव—

---

१ तै०,भृगु १ अनु० १।
२* छा० ६ प्र० २ ख० १।
३ तत्र सन्दिह्यते पा०।
४ छा० ६ प्र० १ ख० ४।

इत्येवं प्राप्तेऽभिधीयते--ईक्षतेर्नाशब्दम्--इति। यस्मिन् शब्द एव प्रमाणं न भवति, तदशब्दम् आनुमानिकं प्रधानमित्यर्थः। न तज्जगत्कारणवादिवाक्यप्रतिपाद्यम्; कुतः? ईक्षतेः-सच्छब्दवाच्य-सम्बन्धिव्यापारविशेषाभिधायिन ईक्षतेर्धातोश्श्रवणात्। १"तदैक्षत बहु स्यां प्रजायेय" इति ईक्षणक्रियायोगश्चाचेतने प्रधाने न सम्भवति। अत ईदृशेक्षणक्षमश्चेतनविशेषस्सर्वज्ञस्सर्वशक्तिः पुरुषोत्तमस्सच्छब्दाभिधेयः। तथा च सर्वेष्वेव सृष्टिप्रकरणेष्वीक्षापूर्विकैव सृष्टिः प्रतीयते--२"स ईक्षत लोकान्नु सृजा इति स इमाल्लोकानसृजत" ३"स ईक्षाञ्चक्रे --स प्राणानसृजत" इत्यादिषु। ननु च कार्यानुगुणेनैव कारणेन भवितव्यम्। सत्यम्; सर्वकार्यानुगुण एव सर्वज्ञस्सर्वशक्तिस्सत्यसङ्कल्पः पुरुषोत्तमस्सूक्ष्मचिदचिद्वस्तुशरीरकः। यथाऽऽह--४"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" ५"यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः" ६"यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युश्शरीरम् एष सर्वभूतान्तरात्मा" इति। तदेतत्--७"न विलक्षणत्वात्" इत्यादिषु प्रतिपादयिष्यते। अत्र सृष्टिवाक्यानि न प्रधानप्रतिपादनयोग्यानीत्युच्यते। वस्तुविरोधस्तु तत्रैव परिहरिष्यते। यत्तूक्तं--प्रतिज्ञादृष्टान्तयोगादनुमानरूपमेवेदं वाक्यम्---इति, तदसत्; हेत्वनुपादानात्। ८"येनाश्रुतं श्रुतम्" इत्येकविज्ञानेन सर्वविज्ञाने प्रतिपिपादयिषिते सर्वात्मना तदसम्भवं मन्वानस्य तत्सम्भवमात्रप्रदर्शनाय हि दृष्टान्तोपादानम्। ईक्षत्यादिश्रवणादेव ह्यनुमानगन्धाभावोऽवगतः॥ ५॥

अथ स्यात्—न चेतनगतं मुख्यमीक्षणमिहोच्यते, अपि तु प्रधानगतं गौणमीक्षणम्, ९"तत्तेज ऐक्षत—ता आप ऐक्षन्त" इति गौणे-

---

१ छा० ६ प्र० २ ख० ३। २ ऐ० १ ख० १-२।
३ प्रश्न ६ प्रश्न ३-४। ४ श्वे० ६ प्र० ८।
५ मु० १ मु० १ ख० ९। ६ सु० ७ ख० तुरीयातीतावधूतोप च० १।
७ शारी० २ अ० १ पा० ४ सू०। ८ छां० ६ प्र० १ ख० ६।
९ छां० ६ प्र० २ ख० ३-४।

क्षणसाहचर्यात् भवति चाचेतनेष्वपि चेतनधर्मोपचारः। यथा—'वृष्टिप्रतीक्षाश्शालयः' १"चर्षेण बीजं प्रतिसञ्जहर्ष" इति। अतो गौणमीक्षणमितीमामाशङ्कामनुभाष्य परिहरति—

## गौणश्चेन्नात्मशब्दात् ।१।१।६॥

यदुक्तं—गौणेक्षणसाहचर्यात् सतोऽपीक्षणव्यपदेशस्सर्गानियतपूर्वावस्थाभिप्रायो गौणः इति। २"ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा" इति सच्छब्दप्रतिपादितस्य आत्मशब्देन व्यपदेशात्। एतदुक्तं भवति ३"ऐतदात्म्यमिदं सर्वम्। स आत्मा" इति चेतनाचेतनप्रपञ्चोद्देशेन सत आत्मत्वोपदेशोऽयं नाचेतने प्रधाने सङ्गच्छते--इति। अतस्तेजोऽबन्नानामपि परमात्मैवात्मेति तेजः प्रभृतयोऽपि शब्दाः परमात्मन एव वाचकाः। तथाहि-- ४"हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति परमात्मानुप्रवेशादेव तेजः प्रभृतीनां वस्तुत्वं तत्तन्नामभाक्त्वञ्चेति ५'तत्तेज ऐक्षत" "ता आप ऐक्षन्त" इत्यपि मुख्य एवेक्षणव्यपदेशः। अतस्साहचर्यादपि "तदैक्षत' इत्यत्र ६गौणत्वाशङ्का दूरोत्सारितेति सूत्राभिप्रायः॥ ६॥

इतश्च न प्रधानं सच्छब्दप्रतिपाद्यम्--

## तन्निष्ठस्य मोक्षोपदेशात् ।१।१।७॥

मुमुक्षोश्श्वेतकेतोः "तत्त्वमसि" इति सदात्मकत्वानुसन्धानमुपदिश्य, तन्निष्ठस्य ७"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति शरीरपातमात्रान्तरायो ब्रह्मसम्पत्तिलक्षणो मोक्ष

१ रामायणे सुन्दर० २६ सर्ग० ६ श्लो०।
२ ए० छां० ६ प्र० ८ ख० ७।
३ छां० ६ प्र० ८ ख० ७।
४ छां० ६ प्र० ३ ख० २।
५ छां० ६ प्र० २ ख० ३-४।
६ गौणत्वादिशङ्का पा० ।
७ छां० ६ प्र० १४ ख० २।

इत्युपदिशति। यदि च प्रधानमचेतनं कारणमुपा-दिश्येत; तदा तदात्मकत्वानुसन्धानस्य मोक्षसाधनत्वोपदेशो नोपपद्यते। १"यथाक्रतुरस्मिल्लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति तन्निष्ठस्याचेतनसम्पत्तिरेव स्यात्। नच मातापितृसहस्रेभ्योऽपि २ वत्सलतरं शास्त्रमेवंविधतापत्रयाभिहतिहेतुभूतामचित्सम्पत्तिमुपदिशति। प्रधानकरणवादिनोऽपि हि प्रधाननिष्ठस्य मोक्षं नाभ्युपगच्छन्ति ॥७॥

इतश्च न प्रधानम्—

## हेयत्वावचनाच्च १ । १ । ८ ॥

यदि प्रधानमेव कारणं सच्छब्दा ३ भिहितं भवेत्—तदा मुमुक्षोश्श्वेतकेतोस्तदात्मकत्वं मोक्षविरोधित्वाद्धेयत्वेनैवोपदेश्यं स्यात्। न च तत्क्रियते, प्रत्युतोपादेयत्वेनैव ४"तत्वमसि" ५"तस्य तावदेव चिरम्" इत्युपदिश्यते ॥ ८ ॥

इतश्च न प्रधानम्—

## प्रतिज्ञाविरोधात् १ । १ । ९ ॥

प्रधानकरणत्वे प्रतिज्ञाविरोधश्च भवति। वाक्योपक्रमे एक-विज्ञानेन सर्वविज्ञानं प्रतिज्ञातम्,तच्च कार्यकारणयोरनन्यत्वेन कारणभूतसद्विज्ञानात्तत्कार्यभूतचेतनाचेतनप्रपञ्चस्य ज्ञाततयैवोपपादनीयम् तत्तु प्रधान कारणत्वे चेतनवर्गस्य प्रधानकार्यत्वाभावात् प्रधानविज्ञानेन चेतनवर्गविज्ञानासिद्धेर्विरुध्यते ॥ ९ ॥

---

१ छां० ६ प्र० १४ ख० १ ।
२ वत्सलतरं हि शास्त्रं पा० ।
३ भिहितं तदा पा० ।
४ छां० ६ प्र० ८ ख० ७ ।
५ छां० ६ प्र० १४ ख० २ ॥

इतश्च न प्रधानम्—

## स्वाप्ययात् १ । १ । १० ॥

तदेव सच्छब्दवाच्यं प्रकृत्याह १ " स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषस्स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति" इति सुषुप्तं जीवं सता सम्पन्नं, स्वमपीतः—स्वस्मिन् प्रलीनः इति व्यपदिशति । प्रलयश्च-स्वकारणे लयः । न चाचेतनं प्रधानं चेतनस्य जीवस्य कारणं २ भवितुमर्हति । स्वमपीतो भवति—आत्मानमेव जीवोऽपीतो भवतीत्यर्थः । चिद्वस्तुशरीरकं तदात्मभूतं ब्रह्मैव ३ जीवशब्देनाभिधीयत इति नामरूप व्याकरणश्रुत्योक्तम् । तज्जीवशब्दाभिधेयं ब्रह्म सुषुप्तिकालेऽपि प्रलयकाल इव नामरूपपरिष्वङ्गाभावात् केवलसच्छब्दाभिधेयमिति ४ "सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति" इत्युच्यते । तथा समानप्रकरणे नामरूपपरिष्वङ्गाभावेन प्राज्ञेनैव परिष्वङ्गात् ५"प्राज्ञेनाऽऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नाऽन्तरम्" इत्युच्यते । आमोक्षाज्जीवस्य नामरूपपरिष्वङ्गादेव हि स्वव्यतिरिक्तविषयज्ञानोदयः । सुषुप्तिकाले हि नामरूपे विहाय सता सम्परिष्वक्तः पुनरपि ६जागरदशायां नामरूपे परिष्वज्य तत्तन्नामरूपो भवतीति श्रुत्यन्तरे स्पष्टमभिधीयते-७"यदा ८ सुप्तस्स्वप्नं न ९कञ्चन पश्यति१०अथास्मिन् प्राण एवैकधा भवति" ११"तस्माद्वा १२ आत्मनः प्राणा १३ यथायथं विप्रतिष्ठन्ते";१४ तथा

---

१ छां० ६ प्र० ८ ख० १ — २ भवति पा०
३ जीवशब्देनाप्यभिधी पा० — ४ छां० ६ प्र० ८ ख० १
५ बृ०।६ अ० ५ ब्रा०२१ — ६ जागरण पा०
७ कौषीतकी ४ अ० १९ — ८ सुषुप्तः पा.
९ कथञ्चन पा. — १० कौषी ४ अ० १९
११एतस्मादात्मनः,एतस्माद्वा आत्मनःपा. १२ यथायतनं पा०
१३ यथा पा० — १४ छां० ६ प्र०१ ख० ६

१ "त इह व्याघ्रो वा २ सिंहो वा वृको वा वराहो वा दंशो वा मशको वा यद्यद्भवन्ति तथा भवन्ति"—इति च। तथा सुषुप्तं जीवं * "प्राज्ञेनात्मना सम्परिष्वक्तः" इति च वदति॥

तस्मात् सच्छब्दवाच्यः "परं ब्रह्म सर्वज्ञः परमेश्वरः पुरुषोत्तम एव। तदाह वृत्तिकारः-*"सता सोम्य तदा सम्पन्नो भवति" इति, सम्पत्त्यसम्पत्तिभ्यामेलदध्यवसीयते--* "प्राज्ञेऽनात्मना सम्परिष्वक्तः" इति चाह इति॥ १०॥

इतश्च न प्रधानम्--

## गति सामान्यात् १ । १।११

३ "आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्। स ईक्षत लोकान्नु सृजा इति। स इमाल्लोकानसृजत" ४ "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः। आकाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी" ५ "तस्यह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः" इत्यादि सृष्टिवाक्यानां या गतिः—प्रवृत्तिः; तत्सामान्यात्—तत्समानार्थत्वादस्य, तेषु च सर्वेषु सेश्वरः कारणमवगम्यते। तस्मादत्रापि सर्वेश्वर एव कारणमिति निश्चीयते॥११॥

इतश्च न प्रधानम्—

## श्रुतत्वाच्च १ । ९ । ९२ ॥

श्रुतमेव ह्यस्यामुपनिषदि अस्य सच्छब्दवाच्यस्य आत्मत्वेन नामरूपयोर्व्याकर्तृत्वं, सर्वज्ञत्वं, सर्वशक्तित्वं, सर्वाधारत्वम्, अप-

१ सिंहोवावृकोवायद्यद्भवन्ति तथाभ. पा. २ तै० आनं०१ अनु०
३ ऐत० १ अ० १ ख० ४ तै० आनं० १ अनु०
५ सुबा० २

हतपाप्मत्वादिकं, सत्यकामत्वं, सत्यसङ्कल्पत्वञ्च—१ "अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" २ "सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः" ३ "एतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा" ४ "यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितम्। ५ तस्मिन् कामास्समाहिताः" ६ "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" इति ॥

तथाच श्रुत्यन्तराणि ७ "न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम्। स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" ८ "सर्वाणिरूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते" ९ "अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा" १० "विश्वात्मानं परायणम्" १० "पतिं विश्वस्याऽत्मेश्वरम्" १० "यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपिवा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" ११ "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादीनि। तस्माज्जगत्कारण १२ वादिवाक्यं न प्रधानादिप्रतिपादनयोग्यम्। अतस्सर्वज्ञस्सर्वशक्तिस्सर्वेश्वरेश्वरो निरस्त १३ निखिलदोषगन्धोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणौघमहार्णवः पुरुषोत्तमो नारायण एव निखिलजगदेककारणं जिज्ञास्यं ब्रह्मेति स्थितम् ॥

अत एव निर्विशेषचिन्मात्रब्रह्मवादोऽपि सूत्रकारेण आभिश्श्रुतिभिः निरस्तो वेदितव्यः पारमार्थिकमुख्येक्षणादिगुणयोगि जिज्ञा–

---

१ छां० ६ प्र० ३ ख० २   २,३, छां० ६ प्र० ८ ख० ६–७
४ छां० ८ प्र० १ ख० ३–५   ५ अस्मिन् पा०   ६ छा० ८-१–५
७ श्वे० ६ अ० ९॥   ८ तै–आरण्य ब्रह्ममेध-पुरुषसू-३, १२, १३ ॥
९ तै-आरण्य, चित्त-३, प्रश्न-११, अनु २१, पा ॥   १० तै–ना–११ अनु ॥
११ सुबा, खं. ७॥
१२ वादीनि वाक्यानि न प्रधानप्रतिपादन योग्यानि, पा ॥   १३ समस्त, पा ॥

स्यं ब्रह्मेति स्थापनात्। निर्विशेषवादे हि साक्षित्वमप्यपारमार्थिकं वेदान्तवेद्यं ब्रह्म जिज्ञास्यतया प्रतिज्ञातम्। तच्च चेतनमिति—ईक्षतेर्नाशब्दम्—इत्यादिभिस्सूत्रैः प्रतिपाद्यते। चेतनत्वं नाम चैतन्यगुणयोगः। अत ईक्षणगुणविरहिणः प्रधानतुल्यत्वमेव। किञ्च—निर्विशेषप्रकाशमात्रब्रह्मवादे तस्य प्रकाशत्वमपि दुरुपपादम्। प्रकाशो हि नाम स्वस्य परस्य च व्यवहारयोग्यतामापादयन्वस्तुविशेषः। निर्विशेषस्य वस्तुनस्तदुभयरूपत्वाभावात् घटादिवदचित्त्वमेव। तदुभयरूपत्वाभावेऽपि तत्क्षमत्वमस्तीति चेत्—न, तत्क्षमत्वं हि तत्सामर्थ्यमेव। सामर्थ्यगुणयोगे हि निर्विशेषवादः परित्यक्तस्स्यात्। अथ श्रुतिप्रामाण्यादयमेको विशेषोऽभ्युपगम्यत इति चेत्—हन्त तर्हि तत एव सर्वज्ञता, सर्वशक्तित्वं, सर्वेश्वरेश्वरत्वं, सर्वकल्याणगुणाकरत्वं, सकलहेयप्रत्यनीकत्वेत्यादयस्सर्वेऽभ्युपगन्तव्याः। शक्तिमत्त्वं च कार्यविशेषानुगुणत्वम्; तच्च कार्यविशेषैकनिरूपणीयम्; कार्यविशेषस्य निष्प्रमाणकत्वे तदेकनिरूपणीयं शक्तिमत्त्वमपि निष्प्रमाणकं स्यात्। किञ्च निर्विशेषवस्तुवादिनो वस्तुत्वमपि निष्प्रमाणम्। प्रत्यक्षानुमानागमस्वानुभवाः सविशेषगोचरा इति पूर्वमेवोक्तम्। तस्माद्विचित्रचेतनाचेतनात्मकजगद्रूपेण १ "बहु स्याम्" इतीक्षणक्षमः पुरुषोत्तम एव जिज्ञास्य इति सिद्धम्॥ १२॥

इति श्री शारीरकमीमांसाभाष्ये ईक्षत्यधिकरणम्॥५॥

---

( श्रीशारीरकमीमांसाभाष्ये आनन्दमयाधिकरणम्॥ ६॥ )

एवं जिज्ञासितस्य ब्रह्मणश्चेतनभोग्यभूतजडरूपसत्त्वरजस्तमोमयप्रधानाद्व्यावृत्तिरुक्ता इदानीं कर्मवश्यात् त्रिगुणात्मकप्रकृतिसंसर्गनिमित्तनानाविधानन्तदुःखसागरनिमज्जनेनाशुद्धाच्छुद्धाच्च प्रत्यगात्मनोऽन्यां निखिलहेयप्रत्यनीकनिरतिशयानन्दं ब्रह्मेति प्रतिपाद्यते--

---

१ छा ६-२-३॥ २ प्रत्यनीकं निरतिशया पा॥

## आनन्दमयोऽभ्यासात् ।१।१।१३॥

तैत्तिरीया अधीयते—१ "स वा एष पुरुषोऽन्नरसमयः" इति प्रकृत्य २ "तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः" इति । तत्र सन्देहः—किमयमानन्दमयः बन्धमोक्षभागिनः प्रत्यगात्मनो जीवशब्दाभिलपनीयादन्यः परमात्मा; उत स एव—इति ॥

किं युक्तम् ? प्रत्यगात्मेति । कुतः ? ३ "तस्यैष एव शारीर आत्मा" इत्यानन्दमयस्य शारीरत्वश्रवणात्; शारीरो हि शरीरसम्बन्धी जीवात्मा ॥

ननु च जगत्कारणतया प्रतिपादितस्य ब्रह्मणः सुखप्रतिपत्त्यर्थमन्नमयादीननुक्रम्य तदेव जगत्कारणमानन्दमय इत्युपदिशति; जगत्कारणं च ४ "तदैक्षत" इतीक्षणश्रवणात्सर्वज्ञस्सर्वेश्वर इत्युक्तम् ॥

सत्यमुक्तम्; स तु जीवान्नातिरिच्यते—५ "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य" ६ "तत्त्वमसि श्वेतकेतो" इति कारणतया निर्दिष्टस्य जीवसामानाधिकरण्यनिर्देशात् । सामानाधिकरण्यं ह्येकत्वप्रतिपादनपरम्; यथा 'सोऽयं देवदत्तः' इत्यादौ । ईक्षापूर्विका च सृष्टिश्चेतनस्य जीवस्योपपद्यत एव । अतः ७ "ब्रह्मविदाप्नोति परम्" इति जीवस्याचित्संसर्गवियुक्तं स्वरूपं प्राप्यतयोपदिश्यते । अचिद्वियुक्तस्वरूपस्य लक्षणमिदमुच्यते ८ "सत्यं ज्ञानमनन्तं ब्रह्म" इति । तद्रूपप्राप्तिरेव हि मोक्षः । ९ "न ह वै सशरीरस्य सतः

१ तै. आन. १ अनु
२ तै. आन. ५-२
३ तै. आन. ५ अनु
४ छा. ६. २. ३
५ छा. ६. ३. २
६ छा. ६. ८. ७
७. ८. तै. आन. १
९ छा. ८. १२. १

प्रियाप्रिययोरपहतिरस्ति। अशरीरंयावसन्तंनप्रियाप्रिये स्पृशतः" इति। अतो जीवस्याविद्यावियुक्तं स्वरूपं प्राप्यतया प्रक्रान्तमानन्दमय इत्युपदिश्यते। तथाहि—शाखाचन्द्रन्यायेनाऽत्मस्वरूपं दर्शयितुम् १ "अन्नमयः पुरुषः" इति शरीरं प्रथमं निर्दिश्य तदन्तरभूतं तस्य धारकं पञ्चवृत्तिप्राणम्, तस्याप्यन्तरभूतं मनः, तदन्तरभूतां च बुद्धिं, २ "प्राणमयो" ३ "मनोमयो" ४ विज्ञानमयः" इति तत्रतत्र बुद्ध्यवतरणक्रमेण निर्दिश्य सर्वान्तरभूतं जीवात्मानम् ५ "अन्योऽन्तर आत्माऽऽनन्दमयः" इत्युपदिश्यान्तरात्मपरम्परां समापयति। अतो जीवात्मस्वरूपमेव ६ "७ ब्रह्मविदाप्नोति" इति प्रक्रान्तं ब्रह्म; तदेवाऽनन्दमय इत्युपदिष्टमिति निश्चीयते॥

ननुच—८ "ब्रह्म पुच्छं प्रतिष्ठा" इत्यानन्दमयादन्यद्ब्रह्मेति प्रतीयते। नैवं—ब्रह्मैव स्वस्वभावविशेषेण पुरुषविधत्वकल्पितं शिरःपक्षपुच्छरूपेण व्यपदिश्यते। यथाऽन्नमयो देहोऽवयवी स्वस्मादनतिरिक्तैः स्वावयवैरेव ६ "तस्येदमेव शिरः" इत्यादिना शिरःपक्षपुच्छवत्तया निदर्शितः; तथा आनन्दमयं ब्रह्मापि स्वस्मादनतिरिक्तैः प्रियादिभिर्निदर्शितम्। तत्रावयवत्वेन रूपितानां प्रियमोदप्रमोदानन्दानामाश्रयतया अखण्डरूपमानन्दमयं ८ "ब्रह्म पुच्छं प्रतिष्ठा" इत्युच्यते। यदि चानन्दमयादन्यद्ब्रह्माभविष्यत्—'तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मा ब्रह्म' इत्यपि निरदेक्ष्यत। नचैवं निर्दिश्यते। एतदुक्तं भवति—६ "ब्रह्मविदाप्नोति परम्" इति

---

१ नायं वाक्यानुपूर्वीनिर्देशः, किन्तु अर्थ-कथनमात्रमिति वा, 'अन्नरसमयः पुरुषः' इति वा पाठः स्वीकर्तव्यः, तत्र एतादृशवाक्यानुपलब्धेरिति॥

२ तै. आन. २ अनु

३ तै. आन. ३

४ तै. आ. ४

५ तै. आन. ५. २

६ तै. आन १

७ ब्रह्मविदाप्नोति परम् इति. पा

८ तै. आन. ५

९ तै. आन. १ अनु

प्रकान्तं ब्रह्म १ "सत्यं ज्ञानमनन्तं ब्रह्म" इतिलक्षणतस्सकलेतर-व्यावृत्ताकारं प्रतिपाद्य तदेव २ "तस्माद्वा एतस्मादात्मनः" इत्यात्मशब्देन निर्दिश्य तस्य सर्वान्तरत्वेनाऽऽत्मत्वं व्यञ्जयद्वाक्य-मन्नमयादिषु तत्तदन्तरतया आत्मत्वेन निर्दिष्टान् प्राणमयादीनति-क्रम्य ३ "अन्योऽन्तर आत्माऽऽनन्दमयः" इत्यात्मशब्देन निर्देश-मानन्दमये समापयति। अत आत्मशब्देन प्रकान्तं ब्रह्माऽऽनन्दमय इति निश्चीयते—इति। ननु च—४ "ब्रह्म पुच्छं प्रतिष्ठा" इत्यु-क्त्वा ५ "असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुः" इति ब्रह्मज्ञानाज्ञानाभ्यामात्मनस्स-द्भावासद्भावौ दर्शयति; नानन्दमयज्ञानाज्ञानाभ्याम्। न चानन्दमयस्य प्रियमोदादिरूपेण सर्वलोकविदितस्य सद्भावासद्भावज्ञानाशङ्का युक्ता। अतो नानन्दमयमधिकृत्यायं श्लोक उदाहृतः। तस्मादानन्दमयादन्य-द्ब्रह्म।। नैवम्—६ "इदं पुच्छं प्रतिष्ठा" ७ "पृथिवी पुच्छं प्रतिष्ठा" ८ "अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा" ९ "महः पुच्छं प्रतिष्ठा" १० इत्युक्त्वा तत्रतत्रोदाहृताः ११ "अन्नाद्वै प्रजाः प्रजा-यन्ते" इत्यादि श्लोका यथा न पुच्छामात्रप्रतिपादनपराः; अपि त्वन्नमयादिपुरुषप्रतिपादनपराः; एवमत्राप्यानन्दमयस्यायम् १२ "असन्नेव" इति श्लोकः; नानन्दमयव्यतिरिक्तस्य पुच्छस्य। आनन्दमयस्यैव ब्रह्मत्वेऽपि प्रियमोदादिरूपेण १३ रूपितस्यापरि-च्छिन्नानन्दस्य सद्भावासद्भाव १४ ज्ञानाशङ्का युक्तैव। पुच्छब्रह्मणो-ऽप्यपरिच्छिन्नानन्दतयैव ह्यप्रसिद्धता। शिरःप्रभृत्यवयवित्वाभावा-

---

१, २ तै. आन. १
३ तै. आन. ५. २
४ तै. आन. ५. ३
५ तै. आन. ६. १
६ तै. आन. १. ३
७ तै. आन. २. ३
८ तै. आन. ३. ३
९ तै. आन. ४. २
१० इत्येवमुक्त्वा. पा.
११ तै. आन. २. १
१२ तै. आन. ६. १
१३ रूपितस्य तस्याप. पा
१४ ज्ञानशङ्का. पा

द्ब्रह्मणो नानन्दमयो ब्रह्मेति चेत् — ब्रह्मणः पुच्छत्वप्रतिष्ठात्वाभावात् पुच्छमपि ब्रह्म न भवेत्। अथाविद्यापरिकल्पितस्य वस्तुनस्तस्याश्रयभूतत्वात् ब्रह्मणः पुच्छं प्रतिष्ठेति रूपणमात्रमित्युच्येत. हन्त तर्हि तस्यासुखाद्व्यावृत्तस्यानन्दमयस्य ब्रह्मणः प्रियशिरस्त्वादिरूपणं भविष्यति। एवं च १ "सत्यं ज्ञानमनन्तं ब्रह्म" इति विकारास्पदजडपरिच्छिन्नवस्त्वन्तरव्यावृत्तस्यासुखाद्व्यावृत्तिरानन्दमय इत्युपदिश्यते। २ ततश्चाखण्डैकरसानन्दरूपे ब्रह्मण्यानन्दमय इति मयट् प्राणमय इव स्वार्थिको द्रष्टव्यः। तस्मादविद्यापरिकल्पितविविधविचित्रदेवादिभेदभिन्नस्य जीवात्मनस्स्वाभाविकं रूपमखण्डैकरसं सुखैकतानमानन्दमय इत्युच्यत इत्यानन्दमयः प्रत्यगात्मा ॥

सिद्धान्तः

एवं प्राप्ते प्रचक्ष्महे—आनन्दमयोऽभ्यासात्—आनन्दमयः परमात्मा। कुतः? अभ्यासात्; - ३ "सैषाऽऽनन्दस्य मीमांसा भवति इत्यारभ्य ४ "यतो वाचो निवर्तन्ते" इत्येवमन्तेन वाक्येन शतगुणितोत्तरक्रमेण निरतिशयदशाशिरस्कोऽभ्यस्यमान आनन्दः अनन्तदुःखमिश्रपरिमितसुखलवभागिनि जीवात्मन्यसम्भवन्निखिलहेयप्रत्यनीकं कल्याणैकतानं सकलेतरविलक्षणं परमात्मानमेव स्वाश्रयमावेदयति ॥

यथाऽऽह ५ "तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽनन्दमयः" इति विज्ञानमयो हि जीवः, न बुद्धिमात्रम्, मयट् प्रत्ययेन व्यतिरेकप्रतीतेः। प्राणमयेत्यगत्या स्वार्थिकताऽऽश्रीयते। इह तु तद्वतो जीवस्य सम्भवान्नानर्थक्यं न्याय्यम्। बद्धो मुक्तश्च प्रत्यगात्मा ज्ञातैवेत्यभ्यधिष्महि। प्राणमयादौ च मयडर्थसम्भवोऽनन्तरमेव वक्ष्यते। कथं तर्हि विज्ञानमयविषयश्लोके ६ "विज्ञानं यज्ञं तनुते"

---

१ तै० आन० १ अनु० १
२ ततश्चाखण्डानन्दैकरस पा०
३ तै० आन० ८-१
४ तै० आन० ९-१
५ तै० आन० ५-२
६ तै० आन० ५-१

इति केवलविज्ञानशब्दोपादानमुपपद्यते । ज्ञातुरेवाऽऽत्मनस्स्वरूपमपि स्वप्रकाशतया विज्ञानमित्युच्यत इति न दोषः, ज्ञानैकनिरूपणीयत्वाच्च ज्ञातुस्स्वरूपस्य स्वरूपनिरूपणधर्मशब्दा हि धर्ममुखेन धर्मिस्वरूपमपि प्रतिपादयन्ति, गवादि शब्दवत् । १ "कृत्यल्युटो बहुलम्" इति वा कर्तरि ल्युडाश्रीयते । नन्द्यादित्वं वाऽऽश्रित्य २ "नन्दिग्रहि" इत्यादिना कर्तरि ल्युः । अत एव च ३ "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इति यज्ञादिकर्तृत्वं विज्ञानस्य श्रूयते । बुद्धिमात्रस्य हि न कर्तृत्वं सम्भवति । अचेतनेषु हि चेतनोपकरणभूतेषु विज्ञानमयात्प्राचीनेष्व-न्नमयादिषु न, चेतनधर्मभूतं कर्तृत्वं श्रूयते । अत एव चेतनमचेतनं च स्वासाधारणैः निलयनत्वानिलयनत्वादिभिर्धर्मविशेषैर्विभज्य निर्दिश-द्वाक्यम् "विज्ञानं चाविज्ञानं च" इति विज्ञानशब्देन तद्गुणं चेतनं वदति । तथाऽन्तर्यामिब्राह्मणे ४ "यो विज्ञाने तिष्ठन्" इत्यस्य काण्व-पाठगतस्य पर्यायस्य स्थाने ५ "य आत्मनि तिष्ठन्" इति पर्यायमधी-याना माध्यन्दिनाः काण्वपाठगतं विज्ञानशब्दनिर्दिष्टं जीवात्मेति स्फुटीकुर्वन्ति । विज्ञानमिति च नपुंसकलिङ्गं वस्तुत्वाभिप्रायम् । तदेवं विज्ञानमयाज्जीवादन्यस्तदन्तरः परमात्मा आनन्दमयः । यद्यपि ३ "विज्ञानं यज्ञं तनुते" इति श्लोके ज्ञानमात्रमेवोपादीयते; न ज्ञाता, तथाऽपि ६ "अन्योन्तर आत्मा विज्ञानमयः" इति तद्वान् ज्ञातैवोप-दिश्यते, यथा ७ "अन्नाद्वै प्रजाः प्रजायन्ते" इत्यत्र श्लोके केवलान्नो-पादानेऽपि ८ "स वा एष पुरुषोऽन्नरसमयः" इत्यत्र नान्नमात्रं दिर्दिष्टम्; अपितु तन्मयः तद्विकारः । एतत्सर्वं हृदि निधाय सूत्र-कारस्स्वयमेव ९ "भेदव्यपदेशात्" इत्यनन्तरमेव वदति ॥

---

१ अष्टाध्याय्यां ३-३-११३
२ अष्टाध्याय्यां ३, १, १३४
३ तै० आन. ५ अनु०
४ बृ० ५, ७, २२
५ विज्ञानस्थाने माध्यन्दिन पाठः
६ तै० आन ४, १
७ तै० आन. २, १
८ तै० आ. १
९ शारी० १, १, १८

यदुक्तं जगत्कारणतया निर्दिष्टस्य १ "अनेन जीवेनाऽत्मनाऽनुप्रविश्य" २ "तत्त्वमसि" इति च जीवसामानाधिकरण्यनिर्देशाज्जगत्कारणमपि जीवस्वरूपान्नातिरिच्यत इति कृत्वा जीवस्यैव स्वरूपं ३ "ब्रह्मविदाप्नोति परम्" इति प्रक्रान्तमसुखाद्यावृत्तत्वेनाऽनन्दमय इत्युपदिश्यत इति तदयुक्तम्, जीवस्य चेतनत्वे सत्यपि ४ 'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' इति स्वसङ्कल्पपूर्वकानन्तविचित्र सृष्टियोगानुपपत्तेः। शुद्धावस्थस्यापि हि तस्य सर्गादिजगद्व्यापारासम्भवो ५ "जगद्व्यापारवर्जम्" ६ "भोगमात्रसाम्यलिङ्गाच्च" इत्यत्रोपपादयिष्यते । कारणभूतस्य ब्रह्मणो जीवस्वरूपत्वानभ्युपगमे ७ 'अनेन जीवेनाऽत्मना' ८ 'तत्वमसि' इति सामानाधिकरण्यनिर्देशः कथमुपपद्यत इति चेत्—कथं वा निरस्तनिखिलदोषगन्धस्य सत्यसङ्कल्पस्य सर्वज्ञस्य सर्वशक्तेरनवधिकातिशयासङ्ख्येयकल्याणगुणगणस्य सकलकारणभूतस्य ब्रह्मणः नानाविधानन्तदुःखाकरकर्माधीनचिन्तितनिमिषतादिसकलप्रवृत्तिजीवस्वरूपत्वम्? अन्यतरस्य मिथ्यात्वेनोपपद्यत इति चेत्—कस्य भोः? किं हेयसम्बन्धस्य? किं वा हेयप्रत्यनीककल्याणैकतानस्वभावस्य? हेयप्रत्यनीककल्याणैकतानस्य ब्रह्मणोऽनाद्यविद्याश्रयत्वेन हेयसम्बन्धमिथ्याप्रतिभासो मिथ्यारूप इति चेत्—विप्रतिषिद्धमिदमभिधीयते. ब्रह्मणो हेयप्रत्यनीककल्याणैकतानत्वमनाद्यविद्याश्रयत्वेनानन्तदुःखविषयमिथ्याप्रतिभासाश्रयत्वं चेति। अविद्याश्रयत्वं तत्कार्यदुःखप्रतिभासाश्रयत्वं चैव हि हेयसम्बन्धः। तत्सम्बन्धित्वं तत्प्रत्यनीकत्वं च विरुद्धमेव। तथाऽपि तस्य मिथ्यात्वान्न विरोध इति मा वोचः। मिथ्याभूतमप्य पुरुषार्थ एव, यन्निरसनाय सर्वे वेदान्ता आरभ्यन्त इति ब्रूषे। निरसनीयापुरुषार्थयोगश्च हेयप्रत्यनीककल्याणैकतानतया विरुध्यते। किं कुर्मः?

१ छा० ६-३-२ २ छा० ६, ८, ७
३ तै० आन० १ ४ छा० ६-२-३
५ शारी० ४-४-१७ ६ शारी. ४. ४. २१
७ छा० ६, ३, २ ८ छा. ६, ८, ७

१ "येनाश्रुतं श्रुतं भवति" इत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय २ "सदेव सोम्येदमग्र आसीत्" इत्यादिना निखिलजगदेककारणताम्, ३ "तदैक्षत बहु स्याम्" इति सत्यसङ्कल्पतां च ब्रह्मणः ४ "तत्त्वमसि" इति सामानाधिकरण्येनानन्तदुःखाश्रयजीवैक्यं प्रतिपादितम्; तदन्यथानुपपत्त्या ब्रह्मण एवाविद्याश्रयत्वादि परिकल्पनीयमिति चेत्—श्रुतोपपत्तयेऽप्यनुपपन्नं विरुद्धं च न कल्पनीयम्। अथ हेयसम्बन्ध एव पारमार्थिकः, कल्याणैकस्वभावता तु मिथ्याभूता; हन्तैवं तापत्रयाभिहतचेतनोज्जिजीवयिषया प्रवृत्तं शास्त्रम्, तापत्रयाभिहतिरेव तस्य पारमार्थिकी, कल्याणैकस्वभावस्तु भ्रान्तिपरिकल्पित इति बोधयत्सम्यगुज्जीवयति। अथैतद्दोषपरिजिहीर्षया ब्रह्मणो निर्विशेषचिन्मात्रस्वरूपातिरिक्तजीवत्वदुःखित्वादिकं सत्यसङ्कल्पत्वकल्याणगुणाकरत्वाद्यपि मिथ्याभूतमिति कल्पनीयमिति चेत्—अहो भवतां वाक्यार्थपर्यालोचनकुशलता। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं सर्वस्य मिथ्यात्वे सर्वस्य ज्ञातव्यस्याभावान्न ५सेत्स्यति। यथैकविज्ञानं परमार्थविषयम्, तथैव सर्वविज्ञानमपि यदि परमार्थविषयम्, तदन्तर्गतं च तदा तज्ज्ञानेन सर्वविज्ञानमिति शक्यते वक्तुम्। न हि परमार्थशुक्तिकाज्ञानेन तदाश्रयमपरमार्थरजतं ज्ञातं भवति। अथोच्येत—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अयमर्थः—निर्विशेषवस्तुमात्रमेव सत्यम्—इति। न तर्हि १ "येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इति श्रूयेत, येन श्रुतेनाश्रुतमपि श्रुतं भवतीति ह्यस्य वाक्यस्यार्थः। कारणतयोपलक्षितनिर्विशेषवस्तुमात्रस्यैव सद्भावश्चेत्प्रतिज्ञातः, ६ "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातम्"

---

१ छा० ६, १. ३ २ छां० ६, २, १
३ छा० ६, २, ३ ४ छा० ६, ८, ७
५ संपत्स्यते पा० ६ छां० ६, १, ४

इति दृष्टान्तोऽपि न घटते । मृत्पिण्डविज्ञानेन हि तद्विकारस्य ज्ञातता निदर्शिता । तत्रापि विकारस्यासत्यताऽभिप्रेतेति चेन्—मृद्विकारस्य रज्जुसर्पादिवदसत्यत्वं शुश्रूषोरसिद्धमिति प्रतिज्ञातार्थसम्भावनाप्रदर्शनाय १ "यथा सोम्य" इति प्रसिद्धवदुपन्यासो न युज्यते । न च तत्त्वमस्यादिवाक्यजन्यज्ञानोत्पत्तेः प्राग्विकारजातस्यासत्यतामापादयत्तर्कानुगृहीतं वा प्रमाणमुपलभामह इति । अयमर्थः २ "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यत्र वक्ष्यते । तथा ३ "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" ४ "तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजोऽसृजत" ५ "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" ६ "सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः"...''ऐतदात्म्यमिदं सर्वम्" इत्यादिनाऽस्य जगतस्सदात्मकता, सृष्टेः पूर्वकाले नामरूपविभागप्रहाणम्, जगदुत्पत्तौ सच्छब्दवाच्यस्य ब्रह्मणस्स्वव्यतिरिक्तनिमित्तान्तरानपेक्षत्वम्, सृष्टिकालेऽहमेवानन्तस्थिरत्रसरूपेण 'बहुस्याम्' इत्यनन्यसाधारणसङ्कल्पविशेषः यथासङ्कल्पमनन्तविचित्रतत्त्वानां विलक्षण क्रमविशेषविशिष्टा सृष्टिः समस्तेष्वचेतनेषु वस्तुषु स्वात्मकजीवानु ७ प्रवेशेनैवानन्तनामरूपव्याकरणम्, स्वव्यतिरिक्तस्य समस्तस्य स्वमूलत्वम्, स्वायतनत्वम्, स्वप्रवर्त्यत्वम्, स्वेनैव जीवनम्, स्वप्रतिष्ठत्वमित्याद्यनन्तविशेषाश्शास्त्रैकसमधिगम्याः प्रतिपादितताः । तत्सम्बन्धितया प्रकरणान्तरेष्वप्यपहतपाप्मत्वादिनिरस्तनिखिलदोषतासर्वज्ञतासर्वेश्वरत्वसत्यकामत्वसत्यसङ्कल्पत्वसर्वानन्दकरणनिरतिशयानन्दयोगाद्ययस्सकलेतरप्रमाणाविषयास्सहस्रशः प्रतिपादिताः । एवमनन्यगोचरानन्तविशेषविशिष्टप्रकृतब्रह्मपरामर्शितच्छब्दस्य निर्विशेषवस्तुमात्रोपदेशपरत्वमसङ्गततयेनोन्मत्त ८ प्रलपितायेत । त्वंपद च संसारि-

१ छा० ६, १
२ शारी० २, १, १५
३ छा० ६, २, १
४ छा० ६, २, ३
५ छा० ६, ३, २
६ छा० ६, ८, ३
७ प्रवेशनानन्त पा
८ प्रलीपतायते पां

त्वविशिष्टजीववाचि । तस्यापि निर्विशेषस्वरूपोपस्थापनपरत्वे स्वार्थः परित्यक्तस्स्यात् । निर्विशेषप्रकाशस्वरूपस्य च वस्तुनो ह्यविद्यया तिरोधानं स्वरूपनाशप्रसङ्गादिभिर्न सम्भवतीति पूर्वमेवोक्तम् । एवं च सति समानाधिकरणवृत्तयोस्तत्त्वमिति द्वयोरपि पदयोर्मुख्यार्थपरित्यागेन लक्षणा च समाश्रयणीया ॥

अथोच्येत—समानाधिकरणवृत्तानामेकार्थप्रतिपादनपरतया विशेषणांशे तात्पर्यासम्भवादेव विशेषणनिवृत्तेर्वस्तुमात्रैकत्वप्रतिपादनान्नलक्षणाप्रसङ्गः । यथा 'नीलमुत्पलम्' इति पदद्वयस्य विशेष्यैकत्वप्रतिपादनपरत्वेन नीलत्वोत्पलत्वरूपविशेषणद्वयं न विवक्ष्यते । तद्विवक्षायां हि नीलत्वविशिष्टाकारेणोत्पलत्वविशिष्टाकारस्यैकत्वप्रतिपादनं प्रसज्येत । तत्तु न सम्भवति—न हि नैल्यविशिष्टाकारेण तद्वस्तूत्पलपदेन विशेष्यते. जाति गुणयोरन्योन्यसमवायप्रसङ्गात् । अतो नीलत्वोत्पलत्वोपलक्षितवस्त्वेकत्वमात्रं सामानाधिकरण्येन प्रतिपाद्यते । तथा 'सोऽयं देवदत्तः' इत्यतीतकालविप्रकृष्टदेशविशिष्टस्य तेनैव रूपेण सन्निहितदेशवर्तमानकालविशिष्टतया प्रतिपादनानुपपत्तेरुभयदेशकालोपलक्षितस्वरूपमात्रैक्यं सामानाधिकरण्येन प्रतिपाद्यते । यद्यपि नीलमित्याद्येकपदश्रवणे, प्रतीयमानं विशेषणं सामानाधिकरण्यवेलायां विरोधान्न प्रतिपाद्यते । तथाऽपि वाच्येऽर्थे प्रधानांशस्य प्रतिपादनान्न लक्षणा । अपि तु विशेषणांशस्याविवक्षामात्रम् सर्वत्र १सामानाधिकरण्यस्यैष एव स्वभाव इति न कश्चिद्दोष—इति ॥

तदिदमसारं—सर्वेष्वेव वाक्येषु पदानां व्युत्पत्तिसिद्धार्थसंसर्गविशेषमात्रं प्रत्याय्यम् । तत्र समानाधिकरणवृत्तानामपि नीलादिपदानां नैल्यादिविशिष्ट एवार्थो व्युत्पत्तिसिद्धः पदान्तरार्थसंसृष्टोऽभिधीयते । यथा 'नीलमुत्पलमानय' इत्युक्ते नीलिमादिविशिष्टमेवानीयते, यथा च 'विन्ध्याटव्यां मदमुदितो मातङ्गगणस्तिष्ठति' इति

१ सामानाधिकरण्यस्यैष स्वभाव इति पा०

पदद्वयावगतविशेषणविशिष्ट एवार्थः प्रतीयते; एवं वेदान्तवाक्येष्वपि समानाधिकरणनिर्देशेषु तत्तद्विशेषणविशिष्टमेव ब्रह्म प्रतिपत्तव्यम्। न च विशेषणविवक्षायामितरविशिष्टाकारं वस्त्वन्येन विशेष्यम्; अपि तु सर्वैर्विशेषणैस्स्वरूपमेव विशेष्यम्। तथाहि १ "भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यम्" इति; अन्वयेन निवृत्त्या वा पदान्तरप्रतिपाद्यादाकारादाकारान्तरयुक्तया तस्यैव वस्तुनः पदान्तरप्रतिपाद्यत्वं सामानाधिकरण्यकार्यम्। यथा 'देवदत्तश्श्यामो युवा लोहिताक्षोऽदीनोऽकृपणोऽनवद्यः' इति। यत्र त्वेकस्मिन् वस्तुनि समन्वयायोग्यं विशेषणद्वयं समानाधिकरणपदनिर्दिष्टम्; तत्राप्यन्यतरत्पदममुख्यवृत्तमाश्रीयते; न द्वयम्। यथा 'गौर्वाहीकः' इति। नीलोत्पलादिषु तु विशेषणद्वयान्वयाविरोधादेकमेवोभयविशिष्टं प्रतिपाद्यते॥

अथ मनुषे—एकविशेषणप्रतिसम्बन्धित्वेन निरूप्यमाणं विशेषणान्तरप्रतिसम्बन्धित्वाद्विलक्षणम् इति घटपटयोरिवैकविभक्तिनिर्देशेऽप्यैक्यप्रतिपादनासम्भवात्समानाधिकरणशब्दस्य न विशिष्टप्रतिपादनपरत्वम्, अपि तु विशेषणमुखेन स्वरूपमुपस्थाप्य तदैक्यप्रतिपादनपरत्वमेव—इति॥

स्यादेतदेवम्; यदि विशेषणद्वयप्रतिसम्बन्धित्वमात्रमेवैक्यं निरुन्ध्यात्। नचैतदस्ति; एकस्मिन्धर्मिण्युपसंहर्तुमयोग्यधर्मद्वयविशिष्टत्वमेव ह्यैकत्वं निरुणद्धि। अयोग्यता च प्रमाणान्तरसिद्धा घटत्वपटत्वयोः। 'नीलमुत्पलम्' इत्यादिषु तु दण्डित्वकुण्डलित्वयद्रूपवत्त्वरसवत्त्वगन्धवत्त्वादिवच्च विरोधो नोपलभ्यते। न केवलमविरोध एव; प्रवृत्तिनिमित्तभेदेनैकार्थनिष्ठत्वरूपं सामानाधिकरण्यमुपपादयत्येव धर्मद्वयविशिष्टताम्। अन्यथा स्वरूपमात्रैक्ये अनेकपदप्रवृत्तौ निमित्ताभावात्सामानाधिकरण्यमेव न स्यात्। विशेषणानां

१ कैयटे, पृथ्व्याह्निके

स्वसम्बन्धानादरेण वस्तुस्वरूपोपलक्षण १ परत्वेसत्येकेनैव वस्तूप-लक्षितमित्युपलक्षणान्तरमनर्थकमेव; उपलक्षणान्तरोपलक्ष्याकारभे-दाभ्युपगमे तेनाकारेण सविशेषत्वप्रसङ्गः ॥

' सोऽयं देवदत्तः ' इत्यत्रापि लक्षणागन्धो न विद्यते, विरोधा-भावात्। देशान्तरसम्बन्धितयाऽतीतस्य सन्निहितदेशसम्बन्धितया वर्तमानत्वाविरोधात्। अत एव हि ' सोऽयम् ' इति प्रत्यभिज्ञया कालद्वयसम्बन्धिनो वस्तुन ऐक्यमुपपाद्यते वस्तुनस्स्थिरत्ववादिभिः। अन्यथा प्रतीतिविरोधे सति सर्वेषां क्षणिकत्वमेव स्यात्। देशद्वय-सम्बन्धविरोधस्तु कालभेदेन परिह्रियते ॥

यतस्समानाधिकरणपदानामनेकविशेषणविशिष्टैकार्थवाचित्वम्; अत एव २ " अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति " इत्या-रुण्यादिविशिष्टैकहायन्या क्रयस्साध्यतया विधीयते ॥

तदुक्तम्—३ " अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमस्स्यात्" —इति। तत्रैवं पूर्वपक्षी मन्यते—यद्यप्यरुणयेति पदमाकृतेरिव गुण-स्यापि द्रव्यप्रकारतैकस्वभावत्वाद् द्रव्यपर्यन्तमेवारुणिमानमभिदधाति; तथाऽप्येकहायन्यन्वयनियमोऽरुणिम्नो न सम्भवति; एकहायन्या क्रीणाति, तच्चारुणयेत्यर्थद्वयविधानासम्भवात् ॥

ततश्चारुणयेति वाक्यं भित्वा प्रकरणविहितसर्वद्रव्यपर्यन्त-मेवारुणिमानमविशेषेणाभिदधाति। अरुणयेति स्त्रीलिङ्गनिर्देशः प्रकर-णविहितसर्वलिङ्गकद्रव्याणां प्रदर्शनार्थः। तस्मादेकहायन्यन्वयनियमो-ऽरुणिम्नो न स्यात्— इति ॥

१ रूपत्वे० पा २ यजु० ६-१-६

३ पूर्वमीमांसासूत्रम्० ३-१-१२-२

अत्राभिधीयते—१ " अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमस्स्यात् " २ " अरुणयैकहायन्या " इत्यारुण्यविशिष्टद्रव्यैकहायनीद्रव्यवाचिपदयोस्सामानाधिकरण्येनार्थैकत्वे सिद्धे सत्यैकहायनीद्रव्यारुण्यगुणयोररुणयेति पदेनैव विशेषणविशेष्यभावेन सम्बन्धितयाऽभिहितयोः क्रयाख्यैककर्मान्वयाविरोधादरुणिम्नः क्रयसाधनभूतैकहायन्यन्वयनियमस्स्यात् ॥

यद्येकहायन्याः क्रयसम्बन्धवदरुणिमसम्बन्धोऽपि वाक्यावसेयस्स्यात्; तदा वाक्यस्यार्थद्वयविधानं स्यात्। न चैतदस्ति अरुणयेति पदेनैवारुणिमविशिष्टद्रव्यमभिहितम्। एकहायनीपदसामानाधिकरण्येन तस्यैकहायनीत्वमात्रमवगम्यते; न गुणसम्बन्धः; विशिष्टद्रव्यैक्यमेव हि सामानाधिकरण्यस्यार्थः ३ " भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यम " इति हि सामानाधिकरण्यलक्षणम् ॥

अत एव हि ' रक्तः पटो भवति ' इत्यादिष्वैकार्थ्यादेकवाक्यत्वम्। पटस्य भवनक्रियासम्बन्धे हि वाक्यव्यापारः; रागसम्बन्धस्तु रक्तपदेनैवाभिहितः; रागसम्बन्धि द्रव्यं पट इत्येतावन्मात्रं सामानाधिकरण्यावसेयम्। एवमेकेन गुणेन द्वाभ्यां बहुभिर्वा तेनतेन पदेन समस्तेन व्यस्तेन वा विशिष्टमुपस्थाप्य सामानाधिकरण्येन सर्वविशेषणविशिष्टोऽर्थ एक इति ज्ञापयित्वा तस्य क्रियासम्बन्धाभिधानमविरुद्धम्—' देवदत्तश्श्यामो युवा लोहिताक्षो दण्डी कुण्डली तिष्ठति; शुक्लेन वाससा यवनिकां सम्पादयेन ; नीलमुत्पलमानय; नीलोत्पलमानय; गामानय शुक्लां शोभनाक्षीम् ' ४ " अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् "—इति। एवम् ५ " अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति" इति ॥

---

१ पूर्वमी० ३-१-१२ २ यजु ६-१-६
३ कैयटे वृध्याह्निके० ४ यजुषि० २. काण्डे० २-अनु
५ यजुषि० ६-१-६

एतदुक्तं भवति—यथा ' काष्ठैस्स्थाल्यामोदनं १ पचेत् ' इत्यनेककारकविशिष्टैका क्रिया युगपत्प्रतीयते; तथा समानाधिकरणपदसङ्घाताभिहितमेकैकं कारकं तत्तत्कारकप्रतिपत्तिवेलायामेवानेकविशेषणविशिष्टं युगपत्प्रतिपन्नं क्रियायामन्वेतीति न कश्चिद्विरोधः ' खादिरैश्शुष्कैः काष्ठैस्समपरिमाणे भाण्डे पायसं शाल्योदनं समर्थः पाचकः पचेत् , इत्यादिषु—इति ॥

२ यत्तूपात्तद्रव्यकवाक्यस्थगुणशब्दः केवलगुणाभिधायीत्यरुणयेति पदेन केवलगुणस्यैवाभिधानमिति; तन्नोपपद्यते, लोकवेदयोर्द्रव्यवाचिपदसमानाधिकणस्य गुणवाचिनः क्वचिदपि केवलगुणाभिधानादर्शनात् । उपात्तद्रव्यकवाक्यस्थं गुणपदं केवलगुणाभिधायीत्यप्यसङ्गतम् . ' पटश्शुक्लः ' इत्यादिषूपात्तद्रव्यकेऽपि गुणविशिष्टस्यैवाभिधानात् । ' पटस्य शुक्लः ' इत्यत्र शौक्ल्यविशिष्टपटाप्रतिपत्तिरसमानविभक्तिनिर्देशकृता; न पुनरुपात्तद्रव्यकत्वकृता । तत्रैव ' पटस्य शुक्लो भागः ' इत्यादिषु समानविभक्तिनिर्देशे शौक्ल्यविशिष्टद्रव्यं प्रतीयते । यत्पुनः क्रयस्यैकहायन्यवरुद्धत्वादरुणिम्नः क्रयान्वयो न सम्भवतीति; तदपि विरोधिगुणरहितद्रव्यवाचिपदसमानाधिकरणगुणपदस्य तदाश्रयगुणाभिधानेन क्रियापदान्वयाविरोधादसङ्गतम् । राद्धान्ते चोक्तन्यायेनारुणिम्नश्शाब्दे द्रव्यान्वये सिद्धे द्रव्यगुणयोः क्रयसाधनत्वानुपपत्त्या अर्थात्परस्परान्वयस्सिध्यतीत्यप्यसङ्गतम् । अतो यथोक्त एवार्थः ॥

तस्मात् तत्त्वमस्यादिसामानाधिकरण्ये पदद्वयाभिहितविशेषणापरित्यागेनैवैक्यप्रतिपादनं वर्णनीयम । तत्त्वनाद्यविद्योपहितानवधिकदुःखभागिनश्शुद्धयशुद्धय भगावस्थाच्चेतनादर्थान्तरभूतमशेषहेयप्रत्यनीकानवधिककल्याणैकतानं परमात्मानमनभ्युपगच्छतो न सम्भवति ॥

१ पचति' इत्यने० पा    २ यत्तूक्तं—उपात्त. पा

अभ्युपगच्छतोऽपि समानाधिकरणपदानां यथावस्थितविशेषणविशिष्टैक्यप्रतिपादनपरत्वाश्रयणे त्वम्पदप्रतिपन्नसकलदोष १ भागित्वं परस्य प्रसज्येतेति चेत्—नैतदेवम् . त्वम्पदेनापि जीवान्तर्यामिणः परस्यैवाभिधानात ॥

एतदुक्तं भवति—सच्छब्दाभिहितं निरस्तनिखिलदोषगन्धं सत्यसङ्कल्पमिश्रानवधिका २ तिशयासङ्ख्येयकल्याणगुणगणं समस्तकारणभूतं परं ब्रह्म ३ "बहु स्याम्" इति सङ्कल्प्य तेजोबन्नप्रमुखं कृत्स्नं जगत्सृष्ट्वा तस्मिन देवादिविचित्रसंस्थानसंस्थिते जगति चेतनं जीववर्गं स्वकर्मानुगुणेषु शरीरेष्वात्मतया प्रवेश्य स्वयं च स्वेच्छयैव जीवान्तरात्मतयाऽनुप्रविश्य एवम्भूतेषु स्वपर्यन्तेषु ४ देवाद्याकारेषु संघातेषु नामरूपे व्याकरोत् । एवं रूप संघातस्यैव वस्तुत्वं शब्दवाच्यत्वं चाकरोदित्यर्थः । अनेन जीवेनात्मना जीवेन मयेति निर्देशो जीवस्य ब्रह्मात्मकत्वं दर्शयति । ब्रह्मात्मकत्वं च जीवस्य जीवान्तरात्मतया ब्रह्मणोऽनु५प्रवेशाद्वित्यवगम्यते—६ "इदं सर्वम सृजत । यदिदं किञ्च तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य। सच्च त्यच्चाभवत्" इति अत्रेदं सर्वमिति निर्दिष्टं चेतनाचेतन७वस्तुद्वयं सत्यच्छब्दाभ्यां विज्ञानाविज्ञानशब्दाभ्यां च विभज्य निर्दिश्य चिद्वस्तुन्यपि ब्रह्मणोऽनुप्रवेशाभिधानात् । अत एव नामरूपव्याकरणात्सर्वे वाचकाश्शब्दा अचिज्जीवविशिष्टपरमात्मवाचिन इत्यवगतम्—इति ॥

किञ्च ८ "ऐतदात्म्यमिदं सर्वम्" इति चेतनमिश्रं प्रपञ्चम इदं

१ भागित्वं ब्रह्मणः पा०
२ निरतिशयकल्याण पा०
३ छा० ६, २, ३, तै० आन० ६
४ देवाद्याकारेषु नाम पा०
५ प्रवेशादवगम्यते पा०
६ तै० आन० ६, २
७ वर्गद्वयं पा०
८ छा० ६, ८, ७

सर्वमिति निर्दिश्य १ "तस्यैष आत्मा" इति प्रतिपादितम् । एवंच सर्व चेतनाचेतनं प्रति ब्रह्मण आत्मत्वेन सर्वं सचेतनं जगत् तस्य शरीरं भवति । तथा च श्रुत्यन्तराणि २ "अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा" ३ "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद । यस्य पृथिवी शरीरम् । यः पृथिवीमन्तरो यमयति । स त आत्माऽन्तर्याम्यमृतः" इति प्रारभ्य ४ य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽत्मा शरीरम् । य आत्मानमन्तरो यमयति । स त आत्माऽन्तर्याम्यमृतः" इत्यादि ५ "यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरम् । योऽपामन्तरे सञ्चरन् यस्यापश्शरीरम्" इत्यारभ्य ६ "योऽक्षरमन्तरे सञ्चरन्यस्याक्षरं शरीरम् । यमक्षरं न वेद । एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादीनि सचेतनं जगत् तस्य शरीरत्वेन निर्दिश्य तस्यात्मत्वेन परमात्मानमुपदिशन्ति अतश्चेतनवाचिनोऽपि शब्दाश्चेतनस्याप्यात्मभूतं चेतनशरीरकं परमात्मानमेवाभिदधति । यथा अचेतनदेवादिसंस्थानपिण्डवाचिनश्शब्दाः तत्तच्छरीरकजीवात्मन एव वाचकाः ७ "चत्वारः पञ्च दशरात्राद्देवत्वं गच्छन्ति" इत्यादिषु, देवा भवन्तीत्यर्थः । शरीरस्य शरीरिणं प्रति प्रकारत्वात् ८ प्रकारवाचिनां च शब्दानां प्रकारिण्येव पर्यवसानात् ९ शरीरवाचिनां शब्दानां शरीरिपर्यवसानं न्याय्यम् । प्रकारो हि नाम इदमित्थमिति प्रतीयमाने वस्तुनि इत्थमिति प्रतीयमानोंऽशः । तस्य तद्वस्त्वपेक्षत्वेन तत्प्रतीतेस्तदपेक्षत्वात् तस्मिन्नेव पर्यवसानं युक्तमिति तस्य प्रतिपादकोऽपि शब्दस्तस्मिन्नेव पर्यवस्यति । अत एव 'गौरश्वो मनुष्यः' इत्यादिप्रकारभूताकृतिवाचिनश्शब्दाः प्रकारिणि

१ तै० आन ५
२ यजुषि आरण्यके० ३. ११
३ बृ० ५, ७, ३
४ बृ० ५, ७, २२
५, ६ सुबाल० ७
७
८ प्रकारवाचिनां शब्दानां पा०
९ शरीराभिधायिनां पा०

पिण्डे पर्यवस्यन्तः पिण्डस्यापि चेतनशरीरत्वेन तत्प्रकारत्वात् पिण्डशरीरकचेतनस्यापि परमात्मप्रकारत्वाच्च परमात्मन्येव पर्यवस्यतीति सर्वशब्दानां परमात्मैव वाच्य इति परमात्मवाचिशब्देन सामानाधिकरण्यं मुख्यमेव ॥

ननु - 'खण्डो गौः खण्डश्शुक्लः' इति जातिगुणवाचिनामेव पदानां द्रव्यवाचिपदैस्सह सामानाधिकरण्यं दृष्टम्, द्रव्याणां तु द्रव्यान्तरप्रकारत्वे मत्वर्थीयप्रत्ययो दृष्टः, यथा—'दण्डी कुण्डली' इति नैवम्, जातिर्वा गुणो वा द्रव्यं वा नैतच्चैकमेव सामानाधिकरण्ये प्रयोजकम्, अन्योन्यस्मिन् व्यभिचारात्, यस्य पदार्थस्य कस्यचित्प्रकारतयैव सद्भावः, तस्य तदपृथक्सिद्धिस्थितिप्रतीतिभिस्तद्वाचिनां शब्दानां स्वाभिधेयविशिष्टद्रव्यवाचित्वाद्धर्मान्तरविशिष्टतद्द्रव्यवाचिना शब्देन सामानाधिकरण्यं युक्तमेव । यत्र पुनः पृथक्सिद्धस्य स्वनिष्ठस्यैव द्रव्यस्य कदाचित्कचिद्द्रव्यान्तरप्रकारत्वमिष्यते; तत्र मत्वर्थीयप्रत्यय इति निरवद्यम् ॥

तदेवं परमात्मनश्शरीरतया तत्प्रकारत्वाच्चिद्विशिष्ट १ जीवस्यापि जीवनिर्देशविशेषरूपा अहंत्वमित्यादिशब्दाः परमात्मानमेवाऽचक्षत इति २ "तत्त्वमसि"इति सामानाधिकरण्येनोपसंहृतम्, एवं च सति परमात्मानं प्रति जीवस्य शरीरतयाऽन्वयाज्जीवगता धर्माः परमात्मानंनस्पृशन्ति, यथा स्वशरीरगता बालत्वयुवत्वस्थविरत्वादयो धर्माः जीवं न स्पृशन्ति. अतः २ 'तत्त्वमसि' इति सामानाधिकरण्ये तत्पदं जगत्कारणभूतं सत्यसङ्कल्पं सर्वकल्याणगुणाकरं निरस्तसमस्त-हेयगन्धं परमात्मानमाचष्टे. त्वमिति च तमेव सशरीरजीवशरीरकमाचष्ट इति सामानाधिकरण्यं मुख्यवृत्तम्, प्रकरणाविरोधस्सर्वश्रुत्यविरोधो ब्रह्मणि निरवद्ये कल्याणैकताने अविद्यादिदोषगन्धाभावश्च। अतो जीवसामानाधिकरण्यमपि विशेषण ३ भूताज्जीवादन्यत्वमेवापादयतीति विज्ञानमयाज्जीवादन्य एवानन्दमयः परमात्मा ॥

---

१ जीवस्य जीवनि पा०

२ छा० ६-८-७

३ भूतजीवा० पा०

यदुक्तम्—१ " तस्यैष एव शारीर आत्मा " इत्यानन्दमयस्य शारीरत्वश्रवणाज्जीवादन्यत्वं न सम्भवति—इति. तदयुक्तम्; अस्मिन् प्रकरणे सर्वत्र १ " तस्यैष एव शारीर आत्मा। यः पूर्वस्य" इति परमात्मन एव शारीरात्मत्वाभिधाने कथं २ " तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः " इत्याकाशादिसृज्यवर्गस्य परमकारणत्वेन प्रज्ञातजीवव्यतिरेकस्य परस्य ब्रह्मण आत्मत्वेन व्यपदेशात्तद्व्यतिरिक्ताकाशादीनामन्नमयपर्यन्तानां तच्छरीरत्वमवगम्यते। ३ " यस्य पृथिवी शरीरं। यस्यापश्शरीरं। यस्य ४ तेजश्शरीरं। यस्य वायुश्शरीरं। यस्याकाशश्शरीरं। यस्याक्षरं। शरीरं। यस्य मृत्युश्शरीरं। एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः " इति सुबालश्रुत्या सर्वतत्त्वानां परमात्मशरीरत्वं स्पष्टमभिधीयते। अतः २ " तस्माद्वा एतस्मादात्मनः " इत्यत्रैवान्नमयस्य परमात्मैव शारीर आत्मेत्यवगतः। प्राणमयं प्रकृत्याह १ " तस्यैष एव शारीर आत्मा। यः पूर्वस्य " इति। पूर्वस्यान्नमयस्य यश्शारीर आत्मा श्रुत्यन्तरसिद्धः परमकारणभूतः परमात्मा; स एव तस्य प्राणमयस्यापि शारीर आत्मेत्यर्थः। एवं मनोमयविज्ञानमययोर्द्रष्टव्यम्। आनन्दमये तु १ " एष एव " इति निर्देशस्तस्यानन्यात्मत्वं दर्शयितुम्। तत्कथं विज्ञानमयस्यापि पूर्वोक्तया नीत्या परमात्मैव शारीर आत्मेत्यवगतः। एवं सति विज्ञानमयस्य यश्शारीर आत्मा, स एवानन्दमयस्यापि शारीर आत्मेत्युक्ते आनन्दमयस्य अभ्यासावगतपरमात्मभावस्य परमात्मनस्स्वयमेवात्मेत्यवगम्यते। एवं च स्वव्यतिरिक्तं चेतनाचेतनवस्तुजातं स्वशरीरमिति स एव निरुपाधिकश्शारीर आत्मा। अत एवेदं परं ब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारीरकमित्यभियुक्तैरभिधीयते। अतो विज्ञानमयाज्जीवादन्य एव परमात्मा आनन्दमयः ॥१३॥

---

१ तै० आन० ४     २ तै० आन० १

३ सुबाल० ७     ४ तेजश्शरीरम्। यस्याकाशश्शरीरम् पा

आह—नायमानन्दमयो जीवादन्यः. विकारशब्दस्य मयट्-प्रत्ययस्य श्रवणात् १ "मयड्वैतयोः" इति प्रकृत्य २ "नित्यं वृद्धशरादिभ्यः" इति विकारार्थे मयट् स्मर्यते । वृद्धश्चायमानन्दशब्दः ॥

ननु प्राचुर्येऽपि मयडस्ति ३ " तत्प्रकृतवचने मयट् " इति-स्मृतेः । यथा ' अन्नमयो यज्ञः ' इति । स एवायं भविष्यति । नैवम्—अन्नमय इत्युपक्रमे विकारार्थत्वं दृष्टम् . अत औचित्यादस्यापि विकारार्थत्वमेव युक्तम् ॥

किञ्च—प्राचुर्यार्थत्वेऽपि जीवादन्यत्वं न सिध्यति । तथाहि—आनन्दप्रचुर इत्युक्ते दुःखमिश्रत्वमवर्जनीयम । आनन्दस्य हि प्राचुर्यं दुःखस्याल्पत्वमवगमयति । दुःखमिश्रत्वमेव हि जीवत्वम । अत औचित्यप्राप्तविकारार्थत्वमेव युक्तम् ॥

किञ्च—लोके मृण्मयं हिरण्मयं दारुमयमित्यादिषु, वेदे च ४ " पर्णमयी जुहूः " ५ " शमीमय्यस्स्रुचः " ६ " दर्भमयी रशना" इत्यादिषु मयटो विकारार्थे प्रयोगबाहुल्यात्स एव प्रथमतरं धियम-धिरोहति । जीवस्य चानन्दविकारत्वमस्त्येव । तस्य स्वत आनन्दरू-पस्य सतस्संसारित्वावस्था तद्विकार एवेति । अतो विकारवाचिनो मयट्प्रत्ययस्य श्रवणादानन्दमयो जीवादनतिरिक्त इति । तदेतदनु-भाष्य परिहरति—

## विकारशब्दान्नेतिचेन्न प्राचुर्यात् ।१।१।१४॥

नैतद्युक्तं; कुतः ? प्राचुर्यात्—परस्मिन् ब्रह्मण्यानन्दप्राचुर्यात् । ७ प्राचुर्यार्थे च मयटस्सम्भवात् । एतदुक्तं भवति—शतगुणितोत्तर-क्रमेणाभ्यस्यमानस्यानन्दस्य जीवाश्रयत्वासम्भवाद्ब्रह्माश्रयोऽयमा-

१ अष्टाध्याय्यां० ४. ३. १४३
२ अष्टाध्याय्यां ४. ३. १४४
३ अष्टाध्याय्यां० ५. ४. २१
४ यजुषि. ३. कां. ५. प्र. ७. अनु
५, ६ यजुषि. ३. अष्टके. ८. प्र. २. अनु
७ प्राचुर्यार्थे मयटस्सं पा

नन्द इति निश्चिते सति तस्मिन् ब्रह्मणि विकारासम्भवात् प्राचुर्येऽपि मयड्विधिसम्भवाच्चानन्दमयः परं ब्रह्म—इति ॥

औचित्यात्प्रयोगप्रौढ्या च मयटो विकारार्थत्वमर्थविरोधान्न सम्भवति । किञ्च औचित्यं प्राणमय एव परित्यक्तम् , तत्र विकारार्थत्वासम्भवात् । अनस्तत्र पञ्चवृत्तेर्वायोः प्राणवृत्तिमत्तामात्रेण प्राणमयत्वम् , प्राणापानादिषु पञ्चसु वृत्तिषु प्राणवृत्तेः १ प्राचुर्याद्वा । न च प्राचुर्ये मयट्प्रत्ययस्य प्रौढिर्नास्ति. 'अन्नमयो यज्ञः' 'शकटमयी यात्रा' इत्यादिषु दर्शनात् ॥

यदुक्तमानन्दप्राचुर्यमल्पदुःखसद्भावमवगमयतीति; तदसत् , तत्प्रचुरत्वं हि तत्प्रभूतत्वम् , तच्चेतरस्य सत्तां नावगमयति; अपि तु तस्याल्पत्वं निवर्तयति । इतरसद्भावासद्भावौ तु प्रमाणान्तरावसेयौ; इह च प्रमाणान्तरेण तदभावोऽवगम्यते २ " अपहतपाप्मा " इत्यादिना । तत्रैतावदेव वक्तव्यं, ब्रह्मानन्दस्य प्रभूतत्वमन्या ३ नन्दस्याल्पत्वमपेक्षत इति । उच्यते च तत् ४ "स एको मानुष आनन्दः" इत्यादिना जीवानन्दापेक्षया ब्रह्मानन्दो निरतिशयदशापन्नः प्रभूत इति ॥

यच्चोक्तं जीवस्यानन्दविकारत्वं सम्भवतीति; तदपि नोपपद्यते. जीवस्य ज्ञानानन्दस्वरूपस्य केनचिदाकारेण मृद इव घटाद्याकारेण परिणामस्सकलश्रुतिस्मृतिन्यायविरुद्धः । संसारदशायां तु कर्मणा ज्ञानानन्दौ सङ्कुचितावित्युपपादयिष्यते । अतश्चानन्दमयो जीवादन्यः परं ब्रह्म ॥

इतश्च जीवादन्य आनन्दमयः परं ब्रह्म--

## तद्धेतुव्यपदेशाच्च ।१।१।१५॥

५ "को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति " इति । एष एव जीवानानन्दयतीति

१ प्राणवत्तामा० पा  २ छा० ८-२-५
३ आनन्दस्याल्पत्वापेक्षमिति पा  ४ तै० आन० ८-अनु
५ तै० आन-७. अनु

१जीवानन्दहेतुरयं व्यपदिश्यते। अतश्चानन्दयितव्याज्जीवादानन्दयिताऽयमन्य आनन्दमयः परमात्मेति विज्ञायते। आनन्दमय एवात्र आनन्दशब्देनोच्यत इति चानन्तरमेव वक्ष्यते ॥

## मान्त्रवर्णिकमेव च गीयते । १ । १ । १६ ॥

इतश्च जीवादन्य आनन्दमयः --

२ "सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रवर्णोदितं ब्रह्मैवानन्दमय इति गीयते। तत्तु जीवस्वरूपादन्यत् परं ब्रह्म—३"ब्रह्मविदाप्नोति परम्" इति जीवस्य प्राप्यतया ब्रह्म निर्दिष्टम् ॥

४ "तदेषाभ्युक्ता" इति—तत् ब्रह्म, अभिमुखीकृत्य प्रतिपाद्यतया परिगृह्य, ऋगेषा, अध्येतृभिरुक्ता । ५ ब्राह्मणोक्तस्यार्थस्य वैशद्यमनेन मन्त्रेण क्रियत इत्यर्थः, जीवस्योपासकस्य प्राप्यं ब्रह्म तस्माद्विलक्षणमेव । अनन्तरं च ६" तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" इत्यारभ्योत्तरोत्तरैर्ब्राह्मणैर्मन्त्रैश्च तदेव विशदीक्रियते । अतो जीवादन्य आनन्दमयः ॥

अत्राह—यद्यप्युपासकात्प्राप्यस्य भेदेन भवितव्यम् ; तथापि न वस्त्वन्तरं जीवान्मान्त्रवर्णिकं ब्रह्म ; किन्तु तस्यैवोपासकस्य निरस्तसमस्ताविद्यागन्धनिर्विशेषचिन्मात्रैकरसं शुद्धं स्वरूपम् , तदेव "सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रेण विशोध्यते। तदेव च "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह" इति वाङ्मनसागोचरतया निर्विशेषमिति गम्यते । अतस्तदेव मान्त्रवर्णिकमिति तस्मादनतिरिक्त आनन्दमय इति। अत उत्तरं पठति—

---

१ जीवानामानन्दहेतु पा०
२ तै० आन० १ अनु०
३ तै० आन० १ अनु
४ ६, ७, तै० आन० १ अनु
५ ब्राह्मणोक्तार्थस्य
७ तै० आन० १ अनु०

## नेतरोऽनुपपत्तेः ।१।१।१७॥

परमात्मन इतरो जीवशब्दाभिलप्यो मुक्तावस्थोऽपि न भवति मान्त्रवर्णिकः। कुतः ? अनुपपत्तेः। तथाविधस्यात्मनो निरुपाधिकं विपश्चित्वं १"सोऽकामयत बहु स्यां प्रजायेय" इति सत्यसङ्कल्पत्व-प्रदर्शनेन विवरिष्यते। २ विविधं पश्यश्चित्त्वं हि विपश्चित्त्वम्। पृषोदरादित्वात्पश्यच्छब्दावयवस्य यच्छब्दस्य लोपं कृत्वा व्युत्पादितो विपश्चिच्छब्दः। यद्यपि मुक्तस्य विपश्चित्त्वं सम्भवति; तथापि तस्यैवात्मनस्संसारदशायामविपश्चित्त्वमप्यस्तीति निरुपाधिकं विपश्चित्त्वं नोपपद्यते। निर्विशेषचिन्मात्रतापन्नस्य मुक्तस्य विविध ३ दर्शनाभावा ४ त्सुतरां विपश्चित्त्वं न सम्भवतीति न केनापि प्रमाणेन निर्विशेषं वस्तु प्रतिपाद्यत इति च पूर्वमेवोक्तम्। ५ "यतो वाचो निवर्तन्ते" इति च वाक्यं यदि वाङ्मनसयोर्ब्रह्मणो निवृत्तिमभिदधीत; न ततो निर्विशेषतां वस्तुनोऽवगमयितुं शक्नुयात् ; अपि तु वाङ्मनसयोस्तत्राप्रमाणतां वदेत् ; तथा च सति तस्य तुच्छत्वमेवापद्यते। ६ "ब्रह्मविदाप्नोति" ७ इत्यारभ्य ब्रह्मणो विपश्चित्त्वं जगत्कारणत्वं ज्ञानानन्दैकतानतामितरान्प्रत्यानन्दयितृत्वं कामादेव चिदात्मकस्य कृत्स्नस्यस्रष्टृत्वं सृज्यवर्गानुप्रवेशकृततदात्मकत्वं भयाभयहेतुत्वं ८वाय्वादित्यादीनां प्रशासितृत्वं शतगुणितोत्तरक्रमेण निरतिशयानन्दत्वमन्यच्चानेकं प्रतिपाद्य वाङ्मनसयोःब्रह्मणि प्रवृत्त्यभावेन निष्प्रमाणकंब्रह्मेत्युच्यत इति भ्रान्तजल्पितम् ९"यतो वाचो निवर्तन्ते" इति यच्छब्दनिर्दिष्टमर्थम् १० "आनन्दं ब्रह्मणो विद्वान्" इत्यानन्दशब्देन प्रतिनिर्दिश्य तस्य ब्रह्मसम्बन्धित्वं ब्रह्मण इति व्यतिरेकनिर्देशेन

---

१, तै० आन० ६। २ विविधं हि पश्यचित्त्वं वि० पा०।
३ दर्शनासम्भवात् पा०। ४ सुतरमपि पा०।
५ तै० आन० ६ अनु०। ६ तै० आन० १।
७ परमित्यार पा०। ८ वाय्वादीनां पा०।
९ तै० आन० ९ अनु०! १० तै० आन० ९।

प्रतिपाद्य तदेव वाङ्मनसागोचरं विद्वान्' इति तद्वेदनमभिदधद्वाक्यं जरद्गवादिवाक्यवदनर्थकं [१] वाच्यानन्तर्गतं च स्यात् ॥

अतश्शतगुणितोत्तरक्रमेण ब्रह्मानन्दस्यातिशयेयत्तां वक्तुमुद्यम्य तस्येयत्ताया अभावादेव वाङ्मनसयोस्ततो निवृत्तिः [२] "यतो वाचो निवर्तन्ते" इत्युच्यते। एवमियत्तारहितं 'ब्रह्मण आनन्दं विद्वान् कुतश्चन न बिभेति' इत्युच्यते। किञ्च अस्य मान्त्रवर्णिकस्य विपश्चितः [३] "सोऽकामयत" इत्यारभ्य [४]वक्ष्यमाणस्वसङ्कल्पावक्लृप्तजगज्जन्मस्थितिजगदन्तरात्मत्वादेर्मुक्तात्मस्वरूपादन्यत्वं सुस्पष्टमेव ॥१७॥

इतश्चोभयावस्थात्प्रत्यगात्मनोऽन्य आनन्दमयः—

## भेदव्यपदेशाच्च । १ । १ । १८ ॥

[५] "तस्माद्वा एतस्मादात्मन आकाशः" इत्यारभ्य मान्त्रवर्णिकं ब्रह्म व्यञ्जयद्वाक्यमन्नप्राणमनोभ्य इव जीवादपि तस्य भेदं व्यपदिशति [६] "तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽनन्दमयः" इति। अतो जीवाद्भेदस्य व्यपदेशाच्चायं मान्त्रवर्णिक आनन्दमयोऽन्य एवेति [७]ज्ञायते ॥ १८ ॥

इतश्च जीवादन्यः—

## कामाच्च नानुमानापेक्षा । १ । १ । १९ ॥

जीवस्याविद्यापरवशस्य जगत्कारणत्वे ह्यवर्जनीया आनुमानिकप्रधानादिशब्दाभिधेयाचिद्वस्तुसंसर्गापेक्षा; तथैव हि चतुर्मुखादीनां

---

१ वाचकानन्तर्गं पा०
२ तै० आन० १
३ तै० आन० ६
४ वक्ष्यमाणस्य स्व० पा०
५ तै० आन० १
६ तै० आन ५,
७ विज्ञायते पा०

कारणत्वम्, इह च १"सोऽकामयत। बहु स्यां प्रजायेय" इत्यचित्संसर्ग २ रहितस्य स्वकामादेव विचित्रचिदचिद्वस्तुनस्सृष्टिः ३"इदं सर्वमसृजत। यदि दं किञ्च" इत्याम्नयते। अतोऽस्यानन्दमयस्य जगत्सृजतो नानुमानिकाचिद्वस्तुसंसर्गापेक्षा प्रतीयते। ततश्च जीवादन्य आनन्दमयः ॥१६॥

इतश्च—

## अस्मिन्नस्य च तद्योगं शास्ति ।१।१।२०॥

अस्मिन्—आनन्दमये, अस्य जीवस्य, तद्योगम्—आनन्दयोगम्, शास्ति शास्त्रम्—४"रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति। रसशब्दाभिधेयानन्दमयलाभादयं जीवशब्दाभिलपनीय आनन्दी भवतीत्युच्यमाने यल्लाभाद्य आनन्दी भवति, स स एवेत्यनुन्मत्तः को ब्रवीतित्यर्थः॥

एवमानन्दमयः परं ब्रह्मेति निश्चिते सति ५"यदेष आकाश आनन्दः" ६"विज्ञानमानन्दं ब्रह्म" इत्यादिष्वानन्दशब्देनानन्दमय एव परामृश्यते। यथा विज्ञानशब्देन विज्ञानमयः अतएव ७'आनन्दं ब्रह्मणो विद्वान्' इति व्यतिरेकनिर्देशः। अत एव च ८"आनन्दमयमात्मानमुपसंक्रामति" इति फलनिर्देशश्च। उत्तरे चानुवाके पूर्वानुवाकोक्तानामन्नमयादीनाम् ९"अन्नं ब्रह्मेति व्याजानात्" १०"प्राणो ब्रह्मेति व्यजानात्" ११"मनो ब्रह्मेति व्यजानात्" १२"विज्ञानं ब्रह्मेति व्यजानात्" इति प्रति पादानात् १३"आनन्दो ब्रह्म" इत्यप्यानन्दमया-

१ तै० आन० ६ अनु०।
२ रहितस्य तस्य पाठ०।
३ तै० आन० ६, २।
४ तै० आन० ७, १।
५ तै० आन० ७।
६ बृ० ५, ६, २८।
७ तै० आन० ९, १।
८ तै० आन० ८, ५।
९ तै० भृ० २।
१० तै० भृ० ३।
११ तै० भृ० ४ अन०।
१२ तै० भृ० ५, १।
१३ तै० भ० ६, १।

यस्यैव प्रतिपादनमिति विज्ञायते ; तत एव च तत्रापि १"आनन्दमयमात्मानमुपसङ्क्रम्य" इत्युपसंहृतम् ॥

अतः प्रधानशब्दाभिलप्यादर्थान्तरभूतस्य परस्य ब्रह्मणो जीवशब्दाभिलपनीयादपि वस्तुनोऽर्थान्तरत्वं सिद्धम् ॥२०॥

इति श्रीशारीरकमीमांसाभाष्ये आनन्दमयाधिकरणम् ॥६॥



( श्रीशारीरकमीमांसाभाष्ये अन्तरधिकरणम् ॥७॥ )

यद्यपि मन्दपुण्यानां जीवानां कामाज्जगत्सृष्टिरतिशयितानन्दयोगो भयाभयहेतुत्व २मित्यादि न सम्भवत्येवेतीमामाशङ्कां निराकरोति—

## अन्तस्तद्धर्मोपदेशात् ।१।१।२१॥

इदमाम्नायते च्छान्दोग्ये ३"य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद । तस्यर्क्च साम च गेष्णौ इत्यधिदैवतम्" ४"अथाध्यात्मम्'''अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम" इति ॥

तत्र सन्दिह्यते—किमयमक्ष्यादित्यमण्डलान्तर्वर्ती पुरुषः पुण्योपचयनिमित्तैश्वर्य आदित्यादिशब्दाभिलप्यो जीव एव ; अहोस्वित्तदतिरिक्तः परमात्मा—इति । किं युक्तम् ?

१ तै० आन० १० ५ ।
२ इत्यादीनि न सम्भवन्ति० पा० ।
३ छा० १ ६, ६७, ८ ।
४ छा० १, ७, ५ ।

उपचितपुण्यो जीव एवेति। कुतः? सशरीरत्वश्रवणात्। शरीरसम्बन्धो हि जीवानामेव सम्भवति। कर्मानुगुणप्रियप्रयोगाय हि शरीरसम्बन्धः। अत एव हि कर्मसम्बन्धरहितस्य मोक्षस्य प्राप्यत्वमशरीरत्वेनोच्यते १"न ह वै स शरीरस्य सतः प्रियाप्रिययो-रपहतिरस्ति। अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः" इति। सम्भवति च पुण्यातिशयात् ज्ञानाधिक्यम्, शक्त्याधिक्यञ्च। अत एव लोककामेशत्वादि तस्यैवोपपद्यते। २ तत एव चोपास्यत्वम्, फलदायित्वम्, पापक्षपणकरत्वेन मोक्षोपयोगित्वं च। मनुष्येष्व-प्युपचितपुण्याः केचित् ज्ञानशक्त्यादिभिरधिकतरा दृश्यन्ते; ततश्च सिद्धगन्धर्वादयः; ततश्च देवाः; ततश्चेन्द्रादयः। अतो ब्रह्मादिष्व-न्यतम एवैकैकस्मिन् कल्पे पुण्यविशेषेणैवम्भूतमैश्वर्यं प्राप्तो जगत्सृ-ष्ट्याद्यपि करोतीति जगत्कारणत्वजगदन्तरात्मत्वादिवाक्यमस्मिन्ने-वोपचितपुण्यविशेषे सर्वज्ञे सर्वशक्तौ वर्तते। अतो न जीवादतिरिक्तः परमात्मा नाम कश्चिदस्ति। एवं च सति ३"अस्थूलमनण्वहृस्वम्" इत्यादयो जीवात्मनस्स्वरूपाभिप्राया भवन्ति। मोक्षशास्त्राण्यपि तत्स्वरूपतत्प्राप्त्युपायोपदेशपराणि—इति॥

## सिद्धान्तः

एवं प्राप्तेऽभिधीयते—अन्तस्तद्धर्मोपदेशात्—अन्तरादित्ये-ऽन्तरक्षिणि च यः पुरुषः प्रतीयते, स जीवादन्यः परमात्मैव; कुतः? तद्धर्मोपदेशात् जीवेष्वसम्भवंस्तदतिरिक्तस्यैव परमात्मनो धर्मोऽय-मपहतपाप्मत्वादिः ४"स एष सर्वेभ्यः पाप्मभ्य उदितः" इत्यादि-नोपदिश्यते। अपहतपाप्मत्वं हि अपहतकर्मत्वम्, कर्मवश्यतागन्धर-हितत्वमित्यर्थः। कर्माधीनसुखदुःखभागित्वेन कर्मवश्या हि जीवाः। अतोऽपहतपाप्मत्वं जीवादन्यस्य परमात्मन एव धर्मः॥

---

१ छा० ८, १२, १। २ अत एवोपास्यत्वं फलदायित्वं च पा०।
३ बृ० ५, ८, ८। ४ छा० १, ६, ७।

तत्पूर्वकं स्वरूपोपाधिकं लोककामेशत्वम्, सत्यसङ्कल्पत्वादिकम् सर्वभूतान्तरात्मत्वञ्च तस्यैव धर्मः। यथाह [1]"एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" इति, तथा [2]"एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति। [3]"सोऽकामयत। बहु स्यां प्रजायेयेति" इत्यादिसत्यसङ्कल्पत्वपूर्वकसमस्तचिदचिद्वस्तुसृष्टियोगो निरुपाधिकभयाभयहेतुत्वम्, वाङ्मनसपरिमितिकृतपरिच्छेदरहितानवधिकातिशयानन्दयोग इत्यादयोऽकर्मसम्पाद्यास्स्वाभाविका धर्मा जीवस्य न सम्भवन्ति॥

यत्तु शरीरसम्बन्धान्न जीवातिरिक्त इत्युक्तम्; तदसत्, न हि सशरीरत्वं कर्मवश्यतां साधयति, सत्यसङ्कल्पस्येच्छयाऽपि शरीरसम्बन्धसम्भवात्। अथोच्येत—शरीरं नाम त्रिगुणात्मकप्रकृतिपरिणामरूपभूतसङ्घातः; तत्सम्बन्धश्चापहतपाप्मनस्सत्यसङ्कल्पस्य पुरुषस्येच्छया न सम्भवति, अपुरुषार्थत्वात्। कर्मवश्यस्य तु स्वस्वरूपानभिज्ञस्य कर्मानुगुणफलोपभोगायानिच्छतोऽपि तत्सम्बन्धोऽवर्जनीयः—इति॥ स्यादेतदेवम्; यदि गुणत्रयमयः प्राकृतोऽस्य देहस्स्यात्; स तु स्वाभिमतस्वानुरूपोऽप्राकृत एवेति सर्वमुपपन्नम्॥

एतदुक्तं भवति—परस्यैव ब्रह्मणो निखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपतया सकलेतरविलक्षणस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणगणाश्च सन्ति। तद्वदेव स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्त [4] गुणगणनिधिदिव्यरूपमपि स्वाभाविकमस्ति। तदेवोपासकानुग्रहेण तत्तत्प्रतिपत्त्यनुरूपसंस्थानं करोत्यपारकारुण्यसौशील्यवात्सल्यौदार्यजलनिधिः, निरस्तनिखिलहेयगन्धोऽपहतपाप्मा परमात्मा परंब्रह्म पुरुषोत्तमो नारायणः—इति॥

---

[1] छा० ८, १, ५। [2] सुबाल० ७।

[3] तै० आन० ६। [4] गुणनिधिदिव्य० पा०।

१"यतो वा इमानि भूतानि जायन्ते" २"सदेव सोम्येद-मग्र आसीत्" ३ "आत्मा वा इदमेक एवाग्र आसीत्" ४ "एको ह वै नारायण आसीन्न ब्रह्मा नेशानः" इत्यादिषु निखिलजगदेक-कारणतयाऽवगतस्य परस्य ब्रह्मणः ५"सत्यं ज्ञानमनन्तं ब्रह्म" ६ "विज्ञानमानन्दं ब्रह्म" इत्यादिष्वेवम्भूतं स्वरूपमित्यवगम्यते। ७ "निर्गुणम्" ८ "निरञ्जनम्" ९ "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" १० "न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" ११ "तमीश्वराणां परमं महेश्वरं तं दैवतानां परमञ्च दैवतम्" १२ "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" १३ "सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाऽभिवदन्यदास्ते" १४"वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसः परस्तात्" १५"सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" इत्यादिषु परस्य ब्रह्मणः प्राकृतहेयगुणान् प्राकृतहेयदेहसम्बन्धं तन्मूलकर्मवश्यतासम्बन्धं च प्रतिषिध्य कल्याणगुणान् कल्याणरूपं च वदन्ति। तदिदं स्वाभाविकमेव-रूपमुपासकानुग्रहेण तत्प्रतिपत्त्यनुगुणाकारं देवमनुष्यादिसंस्थानं करोति स्वेच्छयैव परमकारुणिको भगवान्। तदिदमाह श्रुतिः—

---

१ तै० भृ. १ | २ छा. ६-२-१
३ ऐतरेय. १ १ १ | ४ महोप. १ अ. १
५ तै. आन. १ | ६ बृ. ५-६-२८
७ आत्मोप | ८ श्वेता. ६-१९
९ छा. ८-१-१ | १० श्वे. ६-८
११ श्वे. ६-७ | १२ श्वे. ६-९
१३. १४. यजु आरण्य. ३-१२. पुरुषसू | १५ तै. नारायणीये. १ अनु ८।

१ "अजायमानो बहुधा विजायते" इति । स्मृतिश्च २ "अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया । परित्राणाय साधूनां विनाशाय च दुष्कृताम्" इति । साधवोह्युपासकाः, तत्परित्राणमेवोद्देश्यम् , आनुषङ्गिकस्तु दुष्कृतां विनाशः, सङ्कल्पमात्रेणापि तदुपपत्तेः । 'प्रकृतिं स्वाम् , इति प्रकृतिः- स्वभावः । ३स्वमेव स्वभावमास्थाय, न संसारिणां स्वभावमित्यर्थः । आत्ममाययेति ४स्वसङ्कल्परूपेण ज्ञानेनेत्यर्थः ५ "माया वयुनं ज्ञानम्" इति ज्ञानपर्यामपि मायाशब्दं नैघण्टुका अधीयते । आह च भगवान् पराशरः—"समस्ताश्शक्तयश्चैता नृप यत्र प्रतिष्ठिताः । तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥ समस्तशक्तिरूपाणि तत्करोति जनेश्वर । देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया । जगतामुपकाराय न सा कर्मनिमित्तजा"—इति, महाभारते चावताररूपस्याप्यप्राकृतत्वमुच्यते ७"न भूत सङ्घसंस्थानो देहोऽस्य परमात्मनः" इति । अतः परस्यैव ब्रह्मण एवंरूपवत्त्वादयमपि तस्यैव धर्मः । अत आदित्यमण्डलाक्ष्यधिकरणः आदित्यादिजीवव्यतिरिक्त परमात्मैव ॥२१॥

## भेदव्यपदेशाच्चान्यः । १ । १ । २२ ॥

आदित्यादिजीवेभ्यो भेदो व्यपदिश्यतेऽस्य परमात्मनः—८ "य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यश्शरीरं य आदित्यमन्तरो यमयति" ९"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽत्मा शरीरं य आत्मानमन्तरो यमयती"१०"योऽक्षरमन्तरे सञ्चरन्यस्याक्षरं शरीरं यमक्षरं न वेद यो मृत्युमन्तरे सञ्चरन्यस्य मृत्युश्शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति ११चास्यापहतपाप्मनः पर, मात्मनस्सर्वान् जीवान् शरीरत्वेन व्यपदिश्य तेषामन्तरात्मत्वेनैनं व्यपदिशति । अतस्सर्वेभ्यो हिरण्यगर्भादिजीवेभ्योऽन्य एव परमात्मेति सिद्धम् ॥-२॥

इति श्रीशारीरकमीमांसाभाष्ये अन्तरधिकरणम् ।७॥

---

१. पुरुषसू ॥ २. गी० ४-६. यजु. आरण. ८ ॥ ३. स्वीयमेव स्वभावमा. पा० ४ स्वसंकल्पाज्ञानेन. पा० ॥ ५. वेदनिघण्टी, धर्मवर्गे. २२-श्लो० । ६ वि. पु. ६-७ ७० ॥ ७. महाभारते उद्योगपर्वणि ॥८. बृ. ५ ७ ९॥ ९. बृ. ५-७ २२ १०सुबाल. ७ ख॥११.इ'न चास्यापहतपाप्मन. सर्वान् जीवान

( श्रीशारीरकमीमांसाभाष्ये आकाशाधिकरणम् ॥ ८ ॥ )

१ "यतो वा इमानि भूतानि जायन्ते" इति जगत्कारणं ब्रह्मेत्यवगम्यते। किं तज्जगत्कारणमित्यपेक्षायां २ "सदेव सोम्येदमग्र आसीत्" ३ "तत्तेजोऽसृजत" ४ "आत्मा वा इदमेक एवाग्र आसीत्" ५ स इमाल्लोकानसृजत" ६ "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" इति साधारणैश्शब्दैर्जगत्कारणे निर्दिष्टे ईक्षणविशेषानन्दविशेषरूपविशेषार्थस्वभावात्प्रधानक्षेत्रज्ञा ७ द्व्यतिरिक्तं ब्रह्मेत्युक्तम्। इदानीमाकाशादिविशेषशब्दै ८ र्निर्दिश्य जगत्कारणत्वजगदैश्वर्यादिवादेऽप्याकाशादिशब्दाभिधेयतया प्रसिद्धचिदचिद्वस्तुनोऽर्थान्तरमुक्तलक्षणमेव ब्रह्मेति प्रतिपाद्यते आकाशस्तल्लिङ्गात् इत्यादिना पादशेषेण—

## आकाशस्तल्लिङ्गात् १ । १ । २३ ॥

इदमाम्नायते छान्दोग्ये—९ "अस्य लोकस्य का गतिरिति आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्" —इति। तत्र सन्देहः—किं प्रसिद्धाकाश एवात्राकाशशब्देनाभिधीयते उतोक्तलक्षणमेव ब्रह्म—इति। किं प्राप्तम्। प्रसिद्धाकाश इति, कुतः? शब्दैकसमधिगम्ये वस्तुनि य एवार्थो व्युत्पत्तिसिद्धश्शब्देन प्रतीयते स एव ग्रहीतव्यः। अतः प्रसिद्धाकाश एव चराचरभूतजातस्य कृत्स्नस्य कारणम् अतस्तस्मादनतिरिक्तं ब्रह्म। नन्वीक्षापूर्वकसृष्ट्यादिभिरचेतनाज्जीवाच्च व्यतिरिक्तं ब्रह्मेत्युक्तम्। सत्यमुक्तम्, अयुक्तं तु-

१ तै० भृ० १

२ छा० ६-२-१

३ छा० ६-२-३

४ ऐतरेय १-१-१

५ ऐतरेय १-१-२

६ तै० आन० १

७ क्षेत्रज्ञातिरिक्तं पा०

८ शब्दैर्निर्दिष्टस्य पा०

९ छा० १-९-१

तत्। तथाहि १ "यतो वा इमानि भूतानि जायन्ते तद्ब्रह्म" इत्युक्ते कुत इमानि भूतानि जायन्त इत्यादिविशेषापेक्षायां २ "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्यादिना विशेषप्रतीतेः-जगज्जन्मादिकारणमाकाश एवेति निश्चिते सति ३ "सदेव सोम्येदमग्र आसीत्" इत्यादिष्वपि सदादिशब्दास्साधारणाकारास्तमेव विशेषमाकाशमभिदधति। ४ "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादिष्वात्मशब्दोऽपि तत्रैव वर्तते। तस्यापि हि चेतनैकान्तत्वं न सम्भवति; यथा 'मृदात्मको घटः' इति। आप्नोतीत्यात्मेति व्युत्पत्त्या सुतरामाकाशेऽप्यात्मशब्दो वर्तते। अत एवमाकाश एव कारणं ब्रह्मेति निश्चिते सतीक्षणादयस्तदनुगुणा गौणा वर्णनीयाः। यदि हि साधारणशब्दैरेव सदादिभिः कारणमभ्यधायिष्यत; ईक्षणाद्यर्थानुरोधेन चेतनविशेष एव कारणमिति निरचेष्यत। आकाशशब्देन तु विशेष एव निश्चित इति नार्थस्वाभाव्यान्निर्णेतव्यमस्ति। ननु ५ "आत्मन आकाशः सम्भूतः" इत्याकाशस्यापि कार्यत्वं प्रतीयते। सत्यम्, सर्वेषामेवाकाशवाय्वादीनां सूक्ष्मावस्था स्थूलावस्था चेत्यवस्थाद्वयमस्ति। तत्राकाशस्य सूक्ष्मावस्था कारणम् ६ स्थूलावस्था तु कार्यम्। ५ "आत्मन आकाशस्सम्भूतः" इति स्वस्मादेव सूक्ष्मरूपात्स्वयं स्थूलरूपस्सम्भूत इत्यर्थः। २ "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इति सर्वस्य जगत आकाशादेव प्रभवाप्ययादिश्रवणात्तदेव हि कारणं ब्रह्मेति निश्चितम्। यत एवं प्रसिद्धाकाशादनतिरिक्तं ब्रह्म, अत एव च ७ "यदेष आकाश आनन्दो न स्यात्" ८ "आकाशो ह वै नामरूपयो-

१ तै० भृ० १ अनु०
२ छा० १-९ १
३ छा० ६ २ १
४ ऐतरेय १ १ १
५ तै० आन० १ २
६ स्थूलावस्था कार्यम् पा०
७ तै० आन० ७ अनु०
८ छा० ८ १४ १

-र्निर्वहिता" इत्येवमादिनिर्देशोऽप्युपपन्नतरः । अतः प्रसिद्धाकाशादन-तिरिक्तं ब्रह्मेति ॥

## सिद्धान्तः

एवं प्राप्ते ब्रूमः---आकाशस्तल्लिङ्गात्–आकाशशब्दाभिधेयः प्रसिद्धाकाशादचेतनादर्थान्तभूतो यथोक्तलक्षणः परमात्मैव कुतः ? तल्लिङ्गात् निखिलजगदेककारणत्वम् , परायणत्वम् इत्यादीनि परमात्मलिङ्गान्युपलभ्यन्ते । १ निखिलकारणत्वं ह्यचिद्वस्तुनः प्रसिद्धाकाशशब्दाभिधेयस्य नोपपद्यते, चेतनवस्तुनस्तत्कार्यत्वासम्भवात् । परायणत्वं च चेतनानां परमप्राप्यत्वम् । तच्चाचेतनस्य हेयस्य सकलपुरुषार्थविरोधिनो न सम्भवति । सर्वस्माज्ज्यायस्त्वं च निरुपाधिकं सर्वैः कल्याणगुणैस्सर्वेभ्यो निरतिशयोत्कर्षः । तदप्यचितो नोपपद्यते ॥

यदुक्तं जगत्कारणविशेषाकांक्षायामाकाशशब्देन विशेषसमर्पणादन्यत्सर्वं तदनुरूपमेव वर्णनीयमिति,तदयुक्तम्, २ "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इति प्रसिद्धवन्निर्देशात् । प्रसिद्धवन्निर्देशो हि प्रमाणान्तरप्राप्तिमपेक्षते । प्रमाणान्तराणि च ३ "सदेव सोम्येदमग्र आसीत्" इत्येवमादीन्येव वाक्यानि तानि च यथोदितप्रकारेणैव ब्रह्म प्रतिपादयन्तीति तत्प्रतिपादितं ब्रह्माकाशशब्देन प्रसिद्धवन्निर्दिश्यते । सम्भवति च परस्य ब्रह्मणः ४प्रकाशकत्वादाकाशशब्दाभिधेयत्वम्—आकाशते, आकाशयति च---इति । किञ्च अनेनाकाशशब्देन विशेषसमर्पणक्षमेणापि चेतनांशं प्रत्यसम्भावितकारणभावमचेतनविशेषमभिदधानेन ५ "तदैक्षत बहु स्यां प्रजायेय" ६ "सोऽकामयत । बहुस्यां प्रजायेय" इत्यादि ७ वाक्यशेषावधारित-

---

१ निखिलजगदेककारणत्वं पा०
२ छा० १, ६, १ ।
३ छा० ६, २, १ ।
४ प्रकाशत्वात् पा० ।
५ छा० ६. २, ३ ।
६ तै० आन० ६ ।
७ वाक्यविशेष पा० ।

स सार्वज्ञ्यसत्यसङ्कल्पत्वादिविशिष्टापूर्वार्थप्रतिपादनसमर्थवाक्यार्थान्यथाकरणं न प्रमाणपदवीमधिरोहति । एवमपूर्वानन्तविशेषणविशिष्टापूर्वार्थप्रतिपादनसमर्थानेकवाक्यगतिसामान्यं चैकेनानुवादस्वरूपेणान्यथा कर्तुं न शक्यते । यस्त्वात्मशब्दश्चेतनैकान्तो न भवति, 'मृदात्मको घटः' इत्यादिदर्शनादित्युक्तम् ; तत्रोच्यते—यद्यपि चेतनादन्यत्रापि क्वचिदात्मशब्दः प्रयुज्यते ; तथापि शरीरप्रतिसम्बन्धिन्यात्मशब्दस्य प्रयोगप्राचुर्यात् १"आत्मा वा इदमेक एवाग्र आसीत्" २"आत्मन आकाशस्सम्भूतः" इत्यादिषु शरीरप्रतिसम्बन्धिचेतन एव प्रतीयते । यथा गोशब्दस्यानेकार्थवाचित्वेऽपि प्रयोगप्रचुर्यात्सास्नादिमानेव स्वतः प्रतीयते ; अर्थान्तरप्रतीतिस्तु तत्तदसाधारणनिर्देशापेक्षा ; तथा स्वतः प्राप्तं शरीरप्रतिसम्बन्धिचेतनाभिधानमेव ३"स ईक्षत लोकान्नु सृजा इति" ४"सोऽकामयत । बहु स्यां प्रजायेय" इत्यादितत्तद्वाक्यविशेषा एव स्थिरी कुर्वन्ति । एवं वाक्यशेषावधारितानन्यसाधारणानेकापूर्वार्थविशिष्टं निखिलजगदेककारणं ५"सदेव सोम्य" इत्यादिवाक्यसिद्धं ब्रह्मैवाकाशशब्देन प्रसिद्धवत् ६ सर्वाणि "ह वा इमानि भूतानि" इत्यादिवाक्येन निर्दिश्यत इति सिद्धम् ॥२३॥

इति श्रीशारीरकमीमांसाभाष्ये आकाशाधिकरणम् ॥ ८ ॥

## अत एव प्राणः ।१।१।२४॥

इदमाम्नायते छान्दोग्ये—७"प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता" इति प्रस्तुत्य ५"कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसम्विशन्ति प्राणमभ्युज्जिहते सैषा

१ ऐतरेय १, १, १ ।
२ तै० आन० १, २ ।
३ छा० ६, २, १ ।
४ छा १, ६, १ ।
५ छा० १, ११, ४, ५ ।

देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रास्तोष्यो मूर्धा ते व्यपतिष्यत्"–इति ॥

अत्र प्राणशब्दोऽप्याकाशशब्दवत्प्रसिद्धप्राणव्यतिरिक्ते परस्मिन्नेव ब्रह्मणि वर्तते, तदसाधारणनिखिलजगत्प्रवेशनिष्क्रमणादिलिङ्गात्प्रसिद्धवन्निर्दिष्टात्। अधिकाशङ्का तु–कृत्स्नस्य भूतजातस्य प्राणाधीनस्थितिप्रवृत्त्यादिदर्शनात् प्रसिद्ध एव प्राणो जगत्कारणतया निर्देशमर्हति—इति ॥

परिहारस्तु—शिलाकाष्ठादिषु चेतनस्वरूपे च तदभावात् १ "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इति नोपपद्यत इति। अतः प्राणयति सर्वाणि भूतनीति कृत्वा–परं ब्रह्मैव प्राणशब्देनाभिधीयते। अतः प्रसिद्धाकाशप्राणादेरन्यदेव निखिलजगदेककारणमपहतपाप्मत्वसार्वज्ञसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणगणं परं ब्रह्मैवाकाश २ प्राणादिशब्दाभिधेयमिति सिद्धम् ॥ २४ ॥

इति श्रीशारीरकमीमांसाभाष्ये प्राणाधिकरणम् ॥ ६ ॥

---

श्रीशारीरकमीमांसाभाष्ये ज्योतिरधिकरणम् ॥ १० ॥

अतः परं जगत्कारणत्वव्याप्तेन येनकेनापि निरतिशयोत्कृष्टगुणेन जुष्टं ज्योतिरिन्द्रादिशब्दैरर्थान्तरप्रसिद्धैरप्यभिधीयमानं परं ब्रह्मैवेत्यभिधीयते—ज्योतिश्चरणाभिधानात्-इत्यादिना—

## ज्योतिश्चरणाभिधानात्। १। १ २५ ॥

इदमाम्नायते छान्दोग्ये ३ "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषु लोकेष्विदं वाव तद्यदि-

---

१ छा० १-११-५।　　२ प्राणशब्द पा०।
३. छा० ३-१३ ७।

दमस्मिन्नन्तः पुरुषे ज्योतिः" इति तत्र संशयः किमयं ज्योतिश्शब्देननिर्दिष्टो निरतिशयदीप्तियुक्तोऽर्थः प्रसिद्धमादित्यादिज्योतिरेव कारणभूतं ब्रह्म, उत समस्तचिदचिद्वस्तुजातविसजातीयः परमकारणभूतोऽमितभास्सर्वज्ञस्सत्यसङ्कल्पः पुरुषोत्तमः—इति। किं युक्तम्? प्रसिद्धमेव ज्योतिरिति। कुतः प्रसिद्धवन्निर्देशोऽप्याकाशप्राणादिवत् स्ववाक्योपात्त परमात्मव्याप्तलिङ्गविशेषादर्शनात्, परमपुरुषप्रत्यभिज्ञानासम्भवात्, १ कौक्षेयज्योतिषैक्योपदेशाच्च प्रसिद्धमेव ज्योतिः कारणात्वव्याप्तनिरतिशयदीप्तियोगाज्जगत्कारणं २ ब्रह्मेति॥

( सिद्धान्तः )

एवं प्राप्ते प्रचक्ष्महे—ज्योतिश्चरणाभिधानात् द्युसम्बन्धितया निर्दिष्टं निरतिशयदीप्तियुक्तं ज्योतिः परमपुरुष एव। कुतः ३ "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" इत्यस्यैव द्युसम्बन्धिनश्चरणत्वेन सर्वभूताभिधानात्॥

एतदुक्तं भवति यद्यपि ४ "अथ यदतः परो दिवो ज्योतिः" इत्यस्मिन्वाक्ये परमपुरुषासाधारणलिङ्गंनोपलभ्यते; तथापि पूर्ववाक्ये द्युसम्बधितया परमपुरुषस्य निर्देशादिदमपि द्युसम्बन्धि ज्योतिस्स एवेति प्रत्यभिज्ञायत इति। १ कौक्षेयज्योतिषैक्योपदेशश्च फलाय तदात्मकत्वानुसन्धानविधिरिति न कश्चिद्दोषः। १ कौक्षेयज्योतिषश्च तदात्मकत्वं भगवता स्वयमेवोक्तम् '५ "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः" इति॥

## छन्दोभिधानान्नेतिचेन्न तथा चेतोर्पणनिगमात्तथाहि दर्शनम् ।१।१।२६॥

पूर्वस्मिन्वाक्ये ६"गायत्री वा इदं सर्वम्" इति गायत्र्याख्यं

---

१ कौशेयकज्योतिष पा०। २ ब्रह्मेति प्राप्ते प्रचक्ष्महे पा०।
३ छा० ३, १२, ६। ४ छा० ३, १३, ७।
५ गी० १५, १, ४। ६ छा० ३, १२, १।

छन्दोऽभिधाय १ "तदेतदृचाऽभ्यनूक्तम्" इत्युदाहृतायां २ "तावानस्य महिमा" इत्यस्या ऋचोऽपि छन्दोविषयत्वान्नात्र परमपुरुषाभिधानमिति चेत्

तन्न, तथा चेतोर्पणनिगमात् न गायत्रीशब्देन छन्दोमात्रमिहाभिधीयते, छन्दोमात्रस्य सर्वात्मकत्वानुपपत्तेः अपि तु ब्रह्मण एव गायत्रीचेतोर्पणमिह निगम्यते। ब्रह्मणि गायत्रीसादृश्यानुसन्धानं फलायोपदिश्यत इत्यर्थः सम्भवति च ३ "पादोऽस्य सर्वा भूतानि। त्रिपादस्यामृतं दिवि" इति चतुष्पदो ब्रह्मणश्चतुष्पदया गायत्र्या च सादृश्यम्। चतुष्पदा च गायत्री क्वचिद्दृश्यते। तद्यथा ४ "इन्द्रश्शचीपतिः। बलेन पीडितः। दुश्च्यवनो वृषा। समित्सु सासहिः" इति। तथा ह्यन्यत्रापि सादृश्याच्छन्दोभिधायी शब्दोऽर्थान्तरे प्रयुज्यमानो दृश्यते। यथा संवर्गविद्यायाम् ५ "ते वा एते पञ्चान्ये दश ६ सम्पद्यन्ते" इत्यारभ्य ५ "सैषा विराडन्नात्" इत्युच्यते॥ २६॥

इतश्च गायत्रीशब्देन ब्रह्मैवाभिधीयते—

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ।१।१।२७॥

भूतपृथिवीशरीरहृदयानि निर्दिश्य ७ "सैषा चतुष्पदा" इति व्यपदेशो ब्रह्मण्येव गायत्रीशब्दाभिधेय उपपद्यते॥

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ।१।१।२८

पूर्ववाक्ये ८ "त्रिपादस्यामृतं दिवि" इति दिवोऽधिकरणत्वेन निर्देशादिह च दिवः पर इत्यवधित्वेन निर्देशादुपदेशस्य ९ भिन्नरूप-

---

१ छा० ३, १२, १।　　२ छा० ३, १२, ६।
३ छा० ३, १२, ६।　　४
५ छा० ४, ३, ८।　　६ सन्त इति रङ्गरामानुजीयादिषु पाठो दृश्यते।
७ छा० ३, १२, ५।　　८ छा० ३, १२, ६।
९ भिन्नत्वेन पा०।

त्वेन पूर्ववाक्योक्तं ब्रह्म परस्मिन्न प्रत्यभिज्ञायत इति चेत्--तन्न, उभयस्मिन्नपि उपदेशे अर्थस्वभावैक्येन प्रत्यभिज्ञाया अविरोधात्; यथा 'वृक्षाग्रे श्येनो वृक्षाग्रात्परतश्श्येनः' इति। तस्मात्परमपुरुष एव निरतिशयतेजस्को दिवः परो ज्योतिर्दीप्यत इति प्रतिपाद्यते। १ "एतावानस्य महिमा। अतो ज्यायाँश्च पुरुषः। पादोऽस्य विश्वा भूतानि। त्रिपादस्यामृतं दिवि" इति प्रतिपादितस्य चतुष्पादः परमपुरुषस्य २ "वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसस्तु पारे" इत्यभिहिताप्राकृतरूपस्य तेजोऽप्यप्राकृतमिति तद्वत्तया स एव ज्योतिश्शब्दाभिधेय इति निरवद्यम्॥

इति श्रीशारीरकमीमांसाभाष्ये ज्योतिरधिकरणम्॥ १०॥

(श्रीशारीरकमीमांसाभाष्ये इन्द्रप्राणाधिकरणम्॥ ११)

निरतिशयदीप्तियुक्तं ज्योतिश्शब्दाभिधेयं प्रसिद्धवन्निर्दिष्टं-परमपुरुष एवेत्युक्तम। इदानीं कारणत्वव्याप्तामृतत्वप्राप्त्युपायतयोपास्यत्वेन श्रुत इन्द्रप्राणादिशब्दाभिधेयोऽपि परमपुरुष एवेत्याह-

## प्राणस्तथाऽनुगमात्। १। १। २९॥

कौषीतकीब्राह्मणे प्रतर्दनविद्यायां ३ "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च" इत्यारभ्य ३ "वरं वृणीष्व" इति वक्तारमिन्द्रं प्रति ३ "त्वमेव मे परं वृणीष्व यं त्व मनुष्याय हिततमं मन्यसे" इति प्रतर्दनेनोक्ते ३ "स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व" इति श्रूयते। तत्र संशयः- किमयं हिततमोपासनकर्मतयेन्द्रप्राणशब्दनिर्दिष्टो जीव एव; उत तद्व्यतिरिक्तः परमात्मा--इति।। किं युक्तम्, जीव एवेति। कुतः? इन्द्रशब्दस्य जीवविशेष एव प्रसिद्धेः, तत्समानाधिकरणस्य प्राणशब्दस्यापि तत्रैव वृत्तेः। अयमिन्द्राभिधानो जीवः प्रतर्दनेन ३ "त्वमेव

१, २, यजु, आरण्य, ३, प्र, १२, अ. ३, कौषीतक्यां ३, १॥

मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इत्युक्तः १ "मामुपास्व" इति स्वात्मोपासनं हिततममुपदिदेश। हिततमश्चामृतत्वप्राप्त्युपाय एव। जगत्कारणोपासनस्यैवामृतत्वप्राप्तिहेतुता २ "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इत्यवगता। अतः प्रसिद्धजीवभाव इन्द्र एव कारणं ब्रह्म ॥

इत्याशङ्कायामभिधीयते—प्राणस्तथानुगमात्— इति; अयमिन्द्रप्राणशब्दनिर्दिष्टो न जीवमात्रम्, अपि तु जीवादर्थान्तरभूतं परं ब्रह्म। ३ "स एव प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः" इतीन्द्रप्राणशब्दाभ्यांप्रस्तुतस्याऽनन्दाजरामृतशब्दसामानाधिकरण्येनानुगमो हि तथा सत्येवोपपद्यते ॥ २६ ॥

# न वक्तुरात्मोपेदशादिति चेदध्यात्मसंबन्ध भूमा ह्यस्मिन्। १। १। ३०॥

यदुक्तमिन्द्रप्राणशब्दनिर्दिष्टस्य ३ "आनन्दोऽजरोऽमृतः" इत्यनेनैकार्थ्यादयं परं ब्रह्मेति। तन्नोपपद्यते, ४ "मामेव विजानीहि" ५ "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व" इति वक्ता हीन्द्रः ३ "त्रिशीर्षाणं त्वाष्ट्रमहनम्" इत्येवमादिना त्वाष्ट्रवधादिभिः प्रज्ञातजीवभावस्य स्वात्मन एवोपास्यतां प्रतर्दनायोपदिशति। अत उपक्रमे जीवविशेष इत्यवगते सति ३ "आनन्दोऽजरोऽमृतः" इत्यादिभिरुपसंहारस्तदनुगुण एव वर्णनीय इति चेत्—

परिहरति—अध्यात्मसम्बन्धभूमा ह्यस्मिन्—आत्मनि यस्सम्बन्धस्सोऽध्यात्मसम्बन्धः। तस्य भूमा-भूयस्त्वम्. -बहुत्वमित्यर्थः। आत्मन्याधेयतया सम्बध्यमानानां बहुत्वेन सम्बन्धबहुत्वम्। तच्चास्मिन्प्रकरणे परमात्मन्येव हि सम्भवति। ३ "तद्यथा रथस्यारेषु नेमि-

१. कौषीतक्यां ३. १॥ २. छा. ६. १४. २॥ ३. कौ. ३. १॥
४. कौ. ३. १॥

रर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पितास्स एष प्राण एव प्रज्ञात्माऽजरोऽमृतः" इति भूतमात्राशब्देनाचेतनवस्तुजातमभिप्राय प्रज्ञामात्राशब्देन तदाधारतया चेतनवर्गं चाभिप्राय तस्याप्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्य तमेव १ "आनन्दोऽजरोऽमृतः" इत्युपदिशति। तदेतच्चेतनाचेतनात्मकृत्स्नवस्त्वाधारत्वं जीवादर्थान्तरभूतेऽस्मिन् परमात्मन्येवोपपद्यत इत्यर्थः ॥

अथवा—अध्यात्मसम्बन्धभूमा ह्यस्मिन्—परमात्मासाधारणधर्मसम्बन्धोऽध्यात्मसम्बन्धः। तस्य भूमा बहुत्वं हि अस्मिन् प्रकरणे विद्यते। तथाहि—प्रथमं २ "त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इति १ "मामुपास्स्व" इति च परमात्मासाधारणमोक्षसाधनोपासनकर्मत्वं प्राणशब्दनिर्दिष्टस्येन्द्रस्य प्रतीयते। तथा २ "एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति एष एवासाधु कर्म कारयति तं यमधो निनीषति" इति सर्वस्य कर्मणः कारयितृत्वं च परमात्मधर्मः। तथा २ "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणेऽर्पिताः" इति सर्वाधारत्वं च तस्यैव धर्मः। तथा २ "स एष प्राण एव प्रज्ञात्माऽनन्दोऽजरोऽमृतः" इत्येतेऽपि परमात्मन एव धर्माः। २ "एष लोकाधिपतिरेष सर्वेशः" इति च परमात्मन्येव सम्भवति। तदेवमध्यात्मसम्बन्धभूम्नोऽत्र विद्यमानत्वात्परमात्मैवात्रेन्द्रप्राणशब्दनिर्दिष्टः ॥ ३० ॥

कथं तर्हि प्रज्ञातजीवभावस्येन्द्रस्य स्वात्मन उपास्यत्वोपदेशस्सङ्गच्छते; तत्राह—

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् । १ । १ । ३१ ॥

प्रज्ञातजीवभावेनेन्द्रेण ३ "मामेव विजानीहि" ३ "मामुपास्स्व" इत्युपास्यत्वं ब्रह्मणस्स्वात्मत्वेनोपदेशोऽयं न प्रमाणान्तरप्राप्तस्वात्म-

१. कौ. ३. ८॥ २. कौ. ३. ८॥ ३. कौ. ३. १॥

वलोकनकृतः, अपितु शास्त्रेण स्वात्मदृष्टिकृतः। एतदुक्तं भवति— १ "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" २"ऐतदात्म्यमिदं सर्वम्" ३ "अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा" ४ "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति" ५ "एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" इत्येवमादीना शास्त्रेण जीवात्मशरीरकं परमात्मानमवगम्य जीवात्मवाचिनामहंत्वमादिशब्दानामपि परमात्मन्येव पर्यवसानं ज्ञात्वा" ६ "मामेव विजानीहि" ६ "मामुपास्स्व" इति स्वात्मशरीरकं परमात्मानमेवोपास्यत्वेनोपदिदेश—इति। वामदेववत्—यथा वामदेवः परस्य ब्रह्मणः सर्वान्तरात्मत्वं सर्वस्य च तच्छरीरत्वं शरीरवाचिनां च शब्दानां शरीरिणि पर्यवसानं पश्यन् 'अहम्' इति स्वात्मशरीरकं परं ब्रह्म निर्दिश्य तत्सामानाधिकरण्येन मनुसूर्यादीन् व्यपदिशति ७ "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चाहं कक्षीवानृषिरस्मि विप्र" इत्यादिना। यथा च प्रह्लादः ८ "सर्वगत्वादनन्तस्य स एवाहमवस्थितः। मत्तस्सर्वमहं सर्वं मयि सर्वं सनातने" इत्यादि वदति ॥ ३१ ॥

अस्मिन् प्रकरणे जीववाचिभिश्शब्दैस्तद्विशेषाभिधायिभिश्चोपास्यभूतस्य परस्य ब्रह्मणोऽभिधाने कारणं चोद्यपूर्वकमाह—

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्या-दाश्रितत्वादिह तद्योगात् । १ । १ । ३२ ॥

६"न वाचं विजिज्ञासीत वक्तारं विद्यात्" ६ "त्रिशीर्षाणं त्वाष्ट्रमहनम् अरुन्मुखान्यतीन् सालावृकेभ्यः प्रायच्छम्" इत्यादिर्जीवलिङ्गान्, ६"यावद्स्मिन् शरीरे प्राणो वसतितावदायुः" १० "अथ खलु प्राण

१. छा. ६. ३. २ ॥ २. छा. ६. ८. ७ ॥ ३. यजु. आरण्य ॥
४. बृ. ५. ७. २२॥ ५.सुबाल. ७. ख ॥ ६. कौ. ३. १ ॥
७. बृ. ३. ४. १०. 'अहमनु-सूर्यश्च' इत्यन्तमेव बृहदारण्यके दृश्यते। ऋक्संहिता (३-६-१९-४ ३-२६-१) वाक्यम् 'अहम्' इत्यरस्य 'विप्र' इत्यन्तम्
८. वि.पु.१.१६.८६॥ ९.कौ.१.८॥ १०.कौ. ३. १॥

एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" इति मुख्यप्राणलिङ्गाच्च नाध्यात्मसम्बन्धभूमेति चेत्—न, उपासात्रैविध्यात् हेतोः, उपासना-त्रैविध्यमुपदेष्टुं तत्तच्छब्देनाभिधानम्—निखिलकारणभूतस्य ब्रह्मण-स्स्वरूपेणानुसन्धानम्, भोक्तृवर्ग शरीरकत्वानुसन्धानं भोग्य भोगो पकरणशरीरकत्वानुसन्धानंचेति त्रिविधमनुसन्धानमुपदेष्टु-मित्यर्थः। तदिदं त्रिविधं ब्रह्मानुसन्धानं प्रकरणान्तरेष्वप्याश्रितम्-१"सत्यं ज्ञानमनन्तं ब्रह्म" २ "आनन्दो ब्रह्म"—इत्यादिषु स्वरूपानु-सन्धानम्; ३ "तत्सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य। सच्च त्यच्चाभवत्। निरुक्तं चानिरुक्तं च। निलयनं चानिलयनं च। विज्ञानं चाविज्ञानं च। सत्यं चानृतं च सत्यमभवत्" इत्यादिषु भोक्तृशरी-रतया, भोग्यभोगोपकारणशरीरतया चानुसन्धानम्। इहापि प्रकरणे तत्त्रिविधमनुसन्धानं युज्यत एवेत्यर्थः।

एतदुक्तं भवति—यत्र हिरण्यगर्भादिजीवविशेषाणां प्रकृत्याद्यचे-तनविशेषाणां च परमात्मासाधारणधर्मयोगः तदभिधायिनां शब्दानां परमात्मवाचिशब्दैस्सामानाधिकरण्यं वा दृश्यते; तत्र परमात्मन-स्तत्तच्चिदचिद्विशेषान्तरात्मत्वानुसन्धानं प्रतिपिपादयिषितम्—इति। अतोत्रेन्द्रप्राणशब्दनिर्दिष्टो जीवादर्थान्तरभूतः परमात्मैवेति सिद्धम् ३२

इति श्रीशारीरकमीमांसाभाष्ये इन्द्रप्राणाधिकरणम् ॥ ११ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
प्रथमस्याध्यायस्य प्रथमः पादः ॥ १ ॥

---

१. तै. आन. १. अनु   २. तै. भृ. ६. अनु॥   ३. तै. आन. ६. २॥





श्रीमतेरामानुजायनमः

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

:( प्रथमाध्याये-द्वितीयपादे-सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १॥ ):



प्रथमे पादे अधीतवेदः पुरुषः कर्ममीमांसाश्रवणाधिगतकर्मयाथात्म्यविज्ञानः केवलकर्मणामल्पास्थिरफलत्वमवगम्य, वेदान्तवाक्येषु चापातप्रतीतानन्तस्थिरफलब्रह्मस्वरूप [१]तदुपासनसमुपजातपरमपुरुषार्थलक्षणमोक्षापेक्षो ऽवधारितपरिनिष्पन्नवस्तुबोधनशब्दशक्तिः वेदान्तवाक्यानां परस्मिन् ब्रह्मणि निश्चितप्रमाणभावस्तदितिकर्तव्यतारूपशारीरकमीमांसाश्रवणमारभेतेत्युक्तं शास्त्रारम्भसिद्धये ॥ १ ॥

अनन्तविचित्रस्थिरत्रसरूपभोक्तृभोग्यभोगोपकरणभोगस्थानलक्षणनिखिलजगदुदयविभवलयमहानन्दैककारणं परं ब्रह्म "यतो वा इमानि" इत्यादिवाक्यं बोधयतीति च प्रत्यपादि ॥ २ ॥

जगदेककारणं परं ब्रह्म सकलेतरप्रमाणाविषयतया शास्त्रैकप्रमाणकमित्यभ्यधाम ॥ ३ ॥

शास्त्रप्रमाणकत्वं च ब्रह्मणः प्रवृत्तिनिवृत्त्यन्यतरविरहेऽपि स्वरूपेणैव परमपुरुषार्थ भूते परस्मिन् ब्रह्मणि वेदान्तवाक्यानां समन्वयान्निरुह्यत इत्यब्रूम ॥ ४ ॥

निखिलजगदेककारणतया वेदान्तवेद्यं ब्रह्म च ईक्षणाद्यन्वयादानुमानिकप्रधानादर्थान्तरभूतश्चेतनविशेष एवेत्युपापीपदाम ॥ ५ ॥

---

१. तदुपासनः समुपजात. पा ॥

स च स्वाभाविकानवधिकातिशयानन्दविपश्चित्त्वनिखिलचेतनभयाभयहेतुत्वसत्यसङ्कल्पत्वसमस्तचेतनाचेतनान्तरात्मत्वादिभिर्बद्धमुक्तोभयावस्थाज्जीवशब्दाभिलपनीयाच्चार्थान्तरभूत इति च समार्तिथामहि ॥ ६ ॥

स चाप्राकृताकर्मनिमित्तस्वासाधारणदिव्यरूप इत्युदैरिराम॥ ७ ॥

आकाशप्राणाद्यचेतनविशेषाभिधायिभिर्जगत्कारणतया प्रसिद्धवन्निर्दिश्यमानस्सकलेतरचेतनाचेतनविलक्षणस्स एवेति समगरिष्महि

परतस्वासाधारणनिरतिशयदीप्तियुक्तज्योतिश्शब्दाभिधेयो द्युसम्बन्धितया प्रत्यभिज्ञानात्स एवेत्यातिष्ठामहि ॥ ९ ॥

परमकारणासाधारणामृतत्वप्राप्तिहेतुभूतः परमपुरुष एव शास्त्रदृष्ट्येन्द्रादिशब्दैरभिधीयत इत्यब्रूमहि ॥ १० ॥

तदेवमतिपतितसकलेतरप्रमाणसम्भावनाभूमिस्सार्वज्ञ्यसत्यसङ्कल्पत्वाद्यपरिमितोदारगुणसागरतया स्वेतरसमस्तवस्तुवीलक्षणः परं ब्रह्म पुरुषोत्तमो नारायण एव वेदान्तवेद्य इत्युक्तम् ॥ ११ ॥

अतः परं द्वितीयतृतीयचतुर्थेषु पादेषु यद्यपि वेदान्तवेद्यं ब्रह्मैव, तथापि कानिचिद्वेदान्तवाक्यानि प्रधानक्षेत्रज्ञान्तर्भूतवस्तुविशेषस्वरूपप्रतिपादनपराण्येवेत्याशङ्क्य तन्निरसनमुखेन तत्तद्वाक्योदितकल्याणगुणाकरत्वं ब्रह्मणः प्रतिपाद्यते ॥

तत्रास्पष्टजीवादिलिङ्गकानि वाक्यानि द्वितीये पादे विचार्यन्ते; स्पष्टलिङ्गकानि तृतीये; तत्तत्प्रतिपादनच्छायानुसारीणि चतुर्थे ॥

## सर्वत्र प्रसिद्धोपदेशात् । १ । २ । १ ॥

इदमाम्नायते छान्दोग्ये १"अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिल्लोँके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः" इत्यादि ।

अत्र २ " स क्रतुं कुर्वीत " इति प्रतिपादितस्योपासनस्योपास्यः २ "मनोमयः प्राणशरीरः" इति निर्दिश्यत इति प्रतीयते । तत्र संशयः—किं मनोमयत्वादिगुणकः क्षेत्रज्ञः ; उत परमात्मा—इति ।

१. छा. ३-१४-१ ॥ २. छा. ३.१४-२ ॥

किं युक्तम् ? क्षेत्रज्ञ इति । कुतः ? मनःप्राणयोः क्षेत्रज्ञोपकरणत्वात्, परमात्मनस्तु १ "अप्राणो ह्यमनाः" इति तत्प्रतिषेधाच्च । न च १ "सर्वं खल्विदं ब्रह्म" इति २ पूर्वनिर्दिष्टं ब्रह्मात्रोपास्यतया सम्बद्धुं शक्यते, १ "शान्त उपासीत" इत्युपासनोपकरणशान्तिनिवृत्त्युपायभूतब्रह्मात्मकत्वोपदेशायोपात्तत्वात् । न च १ "स क्रतुं कुर्वीत" इत्युपासनस्योपास्यसाकाङ्क्षत्वाद्वाक्यान्तरस्थमपि ब्रह्म सम्बध्यत इति युक्तं वक्तुम्, स्ववाक्योपात्तेन मनोमयत्वादिगुणकेन निराकाङ्क्षत्वात्; १ "मनोमयः प्राणशरीरः" इत्यनन्यार्थतया निर्दिष्टस्य विभक्तिविपरिणाममात्रेणोभयाकाङ्क्षानिवृत्तिसिद्धेः । एवं निश्चिते जीवत्वे १ 'एतद्ब्रह्म' इत्युपसंहारस्थब्रह्मशब्दमपि जीव एव पूजार्थं प्रयुक्तमित्यध्यवसीयत इति ॥

एवं प्राप्ते ब्रूमः-सर्वत्र प्रसिद्धोपदेशात्--मनोमयत्वादिगुणकः परमात्मा । कुतः ? सर्वत्र--वेदान्तेषु परस्मिन्नेव ब्रह्मणि प्रसिद्धस्य मनोमयत्वादेरुपदेशात् । प्रसिद्धं हि मनोमयत्वादि ब्रह्मणः । यथा-३ "मनोमयः प्राणशरीरनेता" ४ "स एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः" ५ "हृदा मनीषा मनसाऽभिक्लृप्तो य एतं विदुरमृतास्ते भवन्ति" ६ "न चक्षुषा गृह्यते नापि वाचा" ७ "मनसा तु विशुद्धेन" तथा ८ "प्राणस्य प्राणः" ९ "अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" १० "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इत्यादिषु । मनोमयत्वं --विशुद्धेन मनसा ग्राह्यत्वम् । प्राणशरीरत्वं—प्राणस्याप्याधारत्वं नियन्तृत्वं च ।

एवं च सति ११ "एष म आत्माऽन्तर्हृदय एतद्ब्रह्म" इति ब्रह्मश-

---

१. मु. २-१-२॥ २. पूर्ववाक्यनिर्दिष्ट. पा ॥ ३. मु. २-२ ७॥
४. तै. शिक्षावल्ल्यां. ६ ३॥ ५. तै. नारायण ३॥ ६. मु. ३ १-८॥
७. ८. केनोप. १-२॥ ९. कौ. ३-२. अयं त्वधिकः पाठोनोपनिषदि ॥ १०. छा १-११ ५॥ ११. छा. ३-१४-४॥

ब्दोऽपि मुख्य एव भवति। १"अप्राणो ह्यमनाः" इति मनआयत्तं ज्ञानं प्राणायत्तां स्थितिं च ब्रह्मणो निषेधति।

अथवा २"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इत्यत्रैवोपासनं विधीयते—सर्वात्मकं ब्रह्म शान्तस्सन्नुपासीतेति। २"स क्रतुं कुर्वीत" इति तस्यैव गुणोपादनार्थोऽनुवादः। उपादेयाश्च गुणा मनोमयत्वादयः; यतस्सर्वात्मकं ब्रह्म मनोमयत्वादिगुणकमुपासीतेति वाक्यार्थः। तत्र सन्देहः—किमिह ब्रह्मशब्देन प्रत्यगात्मा निर्दिश्यते : उत परमात्मा—इति। किं युक्तम्? प्रत्यगात्मेति। कुतः? तस्यैव सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः। सर्वशब्दनिर्दिष्टं हि ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत्। ब्रह्मादिभावश्च प्रत्यगात्मनोऽनाद्यविद्यामूलकर्मविशेषोपाधिको विद्यत एव; परस्य तु ब्रह्मणस्सर्वज्ञस्य सर्वशक्तेरपहतपाप्मनो निरस्तसमस्ताविद्यादिदोषगन्धस्य समस्तहेयाकरसर्वभावो नोपपद्यते। प्रत्यगात्मन्यपि क्वचित्क्वचिद्ब्रह्मशब्दः प्रयुज्यते। अत एव परमात्मा परं ब्रह्मेति परमेश्वरस्य क्वचित्सविशेषणो निर्देशः। प्रत्यगात्मनश्च निर्मुक्तोपाधेर्बृहत्त्वं च विद्यते ३"स चानन्त्याय कल्पते" इति श्रुतेः। अविदुषस्तस्यैव कर्मनिमित्तत्वाज्जन्मस्थितिलयानां तज्जलानिति हेतुनिर्देशोऽप्युपपद्यते। तदयमर्थः—अयं जीवात्मा स्वतोऽपरिच्छिन्नस्वरूपत्वेन ब्रह्मभूतस्सन्ननाद्यविद्यया देवतिर्यङ्मनुष्यस्थावरात्मनाऽवतिष्ठते—इति।

अत्र प्रतिविधीयते—सर्वत्र प्रसिद्धोपदेशात्—सर्वत्र—४"सर्वं खल्विदम्" इति निर्दिष्टे सर्वस्मिन् जगति ब्रह्मशब्देन तदात्मतया विधीयमानं परं ब्रह्मैव न प्रत्यगात्मा। कुतः? प्रसिद्धोपदेशात्, ४"तज्जलान्" इति हेतुतः 'सर्वं खल्विदं ब्रह्म' इति प्रसिद्धवदुपदेशात्। ब्रह्मणो जातत्वाद्ब्रह्मणि लीनत्वाद्ब्रह्माधीनजीवनत्वाच्च हेतोर्ब्रह्मात्मकं सर्वं खल्विदं जगदित्युक्ते यस्माज्जगज्जन्मस्थितिलया वेदान्तेषु प्रसिद्धा स्तदेवात्र ब्रह्मेति प्रतीयते। तच्च परमेव ब्रह्म; तथाहि ५"यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंवि-

१. मु. २-१-२। २. छा. ३-१४-१। ३. श्वे. ५-९।
४. छा. ३-१४-१। ५. तै. भृ. १।

शन्ति। तद्विजिज्ञासस्व तद्ब्रह्म" इत्युपक्रम्य १"आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादिना पूर्वानुवाकप्रतिपादितानवधिकातिशयानन्दयोगिनो विपश्चितः परस्माद्ब्रह्मण एव जगदुत्पत्तिस्थितिलया निर्दिश्यन्ते; तथा २"स कारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता नचाधिपः" इति करणाधिपस्य जीवस्याधिपः परं ब्रह्मैव कारणं व्यपदिश्यते। एवं सर्वत्र परस्यैव ब्रह्मणः कारणत्वं प्रसिद्धम्। अतः परब्रह्मणो जातत्वात्तस्मिन् प्रलीनत्वात्तेन प्राणनात्तदात्मकतया तादात्म्यमुपपन्नम्। अतस्सर्वप्रकारं सर्वशरीरं सर्वात्मभूतं परं ब्रह्म शान्तो भूत्वोपासीतेति श्रुतिरेव परस्य ब्रह्मणस्सर्वात्मकत्वमुपपाद्य तस्योपासनमुपदिशति। परं ब्रह्म हि कारणावस्थं कार्यावस्थं सूक्ष्मस्थूलचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूतम्। एवम्भूततादात्म्यस्य प्रतिपादने परस्य ब्रह्मणस्सकलहेयप्रत्यनीककल्याणगुणाकरत्वं न विरुध्यते, प्रकारभूतशरीरगतानां दोषाणां प्रकारिण्यात्मन्यप्रसङ्गात्, प्रत्युत निरतिशयैश्वर्यापादनेन गुणायैव भवतीति पूर्वमेवोक्तम्॥

यदुक्तं जीवस्य सर्वतादात्म्यमुपपद्यत इति; तदसत्. जीवानां प्रतिशरीरं भिन्नानामन्योन्यतादात्म्यासम्भवात्। मुक्तस्याप्यनवच्छिन्नस्वरूपस्यापि जगत्तादात्म्यं जगज्जन्मस्थितिप्रलयकारणत्वनिमित्तं न सम्भवतीति ३"जगद्व्यापारवर्जम्" इत्यत्र वक्ष्यते। जीवकर्मनिमित्तत्वाज्जगज्जन्मस्थितिलयानां स एव कारणमित्यपि न साधीयः, तत्कर्मनिमित्तत्वेऽपीश्वरस्यैव जगत्कारणत्वात्। अतः परमात्मैवाऽत्र ब्रह्मशब्दाभिधेयः। इममेव सूत्रार्थमभियुक्ता बहुमन्वते। यथाह वृत्तिकारः ४"सर्वं खल्विति सर्वात्मा ब्रह्मेशः" इति॥ १॥

## विवक्षितगुणोपपत्तेश्च १। २। २॥

वक्ष्यमाणाश्च गुणाः परमात्मन्येवोपपद्यन्ते ५"मनोमयः प्राणशरीरो भारूपस्सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामस्स-

१ तै. भृ. ६॥ २ श्वे० ६-९॥ ३ शारी० ४-४-१७॥
४ वृत्तिः ५ छा० ३-१४-२॥

र्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः" इति। मनोमयः—परिशुद्धेन मनसैकेन ग्राह्यः; विवेकविमोकादिसाधनसप्तकानुगृहीतपरमात्मोपासननिर्मलीकृतेन हि मनसा गृह्यते। अनेन हेयप्रत्यनीककल्याणैकतानतया सकलेतरविलक्षणस्वरूपतोच्यते; मलिनमनोभिर्मलिनानामेव ग्राह्यत्वात्। प्राणशरीरः—जगति सर्वेषां प्राणानां धारकः; प्राणो यस्य शरीरम् आधेयं विधेयं शेषभूतं च स प्राणशरीरः। आधेयत्वविधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानीत्युपपादयिष्यते। भारूपः—भास्वररूपः; अप्राकृतस्वासाधारणनिरतिशयकल्याणदिव्यरूपत्वेन निरतिशयदीप्तियुक्त इत्यर्थः। सत्यसङ्कल्पः—अप्रतिहतसङ्कल्पः। आकाशात्मा—आकाशवत्सूक्ष्मस्वच्छस्वरूपः; सकलेतरकारणभूतस्याऽऽकाशस्याप्यात्मभूत इति वा आकाशात्मा; स्वयं च प्रकाशते अन्यानपि प्रकाशयतीति वा आकाशात्मा। सर्वकर्मा—क्रियत इति कर्म; सर्वं जगद्यस्य कर्म, असौ सर्वकर्मा; सर्वा वा क्रिया यस्यासौ सर्वकर्मा। सर्वकामः—काम्यन्त इति कामाः—भोग्यभोगोपकरणादयः; ते परिशुद्धाः सर्वविधास्तस्य सन्तीत्यर्थः। सर्वगन्धः सर्वरसः—[1]"अशब्दमस्पर्शम्" इत्यादिना प्राकृतगन्धरसादिनिषेधादप्राकृताः स्वासाधारणा निरवद्या निरतिशयाः कल्याणाः स्वभोग्यभूतास्सर्वविधा गन्धरसास्तस्य सन्तीत्यर्थः। सर्वमिदमभ्यात्तः—उक्तं रसपर्यन्तं सर्वमिदं कल्याणगुणजातं स्वीकृतवान्। 'अभ्यात्तः' इति 'भुक्ता ब्राह्मणाः' इतिवत्कर्तरि क्तः प्रतिपत्तव्यः। अवाकी—वाकः उक्तिः; सोऽस्य नास्तीत्यवाकी। कुत इत्याह—अनादर इति—अवाप्तसमस्तकामत्वेनादर्तव्याभावादादररहितः। अत एव अवाकी—अजल्पाकः; परिपूर्णैश्वर्यत्वाद्ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगत्तृणीकृत्य जोषमासीन इत्यर्थः। त एते विवक्षिता गुणाः परमात्मन्येवोपपद्यन्ते ॥ २ ॥

## अनुपपत्तेस्तु न शारीरः । १ । २ । ३ ॥

तमिमं गुणसागरं पर्यालोचयतां खद्योतकल्पस्य शरीरसम्बन्धनिबन्धनापरिमितदुःखसम्बन्धयोग्यस्य बद्धमुक्तावस्थस्य जीवस्य

---

[1] कठ० १-३-१२ ॥

प्रस्तुतगुणलेशसम्बन्धगन्धोऽपि नोपपद्यत इति नास्मिन् प्रकरणे शारीरपरिग्रहशङ्का जायत इत्यर्थः ॥ ३ ॥

## कर्मकर्तृव्यपदेशाच्च । १ । २ । ४ ॥

१"एतमितः प्रेत्याभिसम्भवितास्मि" इति प्राप्यतया परं ब्रह्म व्यपदिश्यते, प्राप्तृतया च जीवः । अतः प्राप्ता जीव उपासकः, प्राप्यं परं ब्रह्मोपास्यमिति प्राप्तुरन्यदेवेदमिति विज्ञायते ॥ ४ ॥

## शब्दविशेषात् । १ । २ । ५ ॥

२"एष म आत्माऽन्तर्हृदये" इति शारीरष्षष्ठ्या निर्दिष्टः उपास्यस्तु प्रथमया । एवं समानप्रकरणे वाजिनां च श्रुतौ शब्दविशेषश्श्रूयते जीवपरयोः; यथा ३"व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा एवमयमन्तरात्मन् पुरुषो हिरण्मयः यथा ज्योतिरधूमम्" इति । अत्र ३"अन्तरात्मन्" इति सप्तम्यन्तेन शारीरो निर्दिश्यते; ३ "पुरुषो हिरण्मयः" इति प्रथमयोपास्यः । अतः पर एवोपास्यः ॥

इतश्च शारीरादन्यः—

## स्मृतेश्च । १ । २ । ६ ॥

४"सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च" ५"यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्" ६"ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया । तमेव शरणं गच्छ" इति शारीरमुपासकं, परमात्मानं चोपास्यं स्मृतिर्दर्शयति ॥ ६ ॥

---

१ छा० ३-१४-४ ॥          २ छा० ३-१४-३ ॥
३ शतपथब्राह्मण १-६-३          ४ गी० १५-१५ ॥
५ गी० १५-१९ ॥          ६ गी० १८-६१ ॥

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेतिचेन्न निचाय्य--त्वादेवं व्योमवच्च । १ । २ । ७ ॥

अल्पायतनत्वमर्भकौकस्त्वम् , तद्व्यपदेशः-अल्पत्वव्यपदेशः । १"एष म आत्माऽन्तर्हृदये" इत्यणीयसि हृदयायतने स्थितत्वात् १ "अणीयान् व्रीहेर्वा यवाद्वा" इत्यादिनाऽणीयस्त्वस्य स्वरूपेण व्यपदेशाच्च नायं परमात्मा, अपि तु जीव एव; २ "सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" इत्यादिभिः परमात्मनोऽपरिच्छिन्नत्वावगमात् , जीवस्य चाराग्रमात्रत्वव्यपदेशादिति चेत्-

नैतदेवम् , परमात्मैव ह्यणीयानित्येवं निचाय्यत्वेन व्यपदिश्यते; एवं निचाय्यत्वेन-एवं द्रष्टव्यत्वेन, एवमुपास्यत्वेनेति यावत् । न पुनरणीयस्त्वमेवास्य स्वरूपमिति; व्योमवच्चायं व्यपदिश्यते, स्वाभाविक महत्त्वं चात्रैव व्यपदिश्यते—२ ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः" इति । अत उपासनार्थमेवाल्पत्वव्यपदेशः । तथाहि २ "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इति सर्वोत्पत्तिप्रलयकारणत्वेन सर्वस्याऽत्मतयाऽनुप्रवेशकृतजीवयितृत्वेन च सर्वात्मकं ब्रह्मोपासी--तेत्युपासनं विधाय २ "अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिल्लोंके पुरुषो भवति तथेतः प्रेत्य भवति" इति यथोपासनं प्राप्यसिद्धि--मभिधाय २ "स क्रतुं कुर्वीत" इति गुणविधानार्थमुपासनमनूद्य २ "मनोमयः प्राणशरीरो भारूपस्सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः" इति जगदैश्वर्यविशिष्टस्य स्वरूपगुणांश्चोपादेयान् प्रतिपाद्य २ "एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा" इत्युपासकस्य हृदयेऽणीयस्त्वेन तदात्मनयो-

१. छा. ३-१४-३ ॥ २. मुण्ड, १-१-६ ॥

३. छा० ३-१४-१, ४॥

पासस्य परमपुरुषस्योपासनार्थमवस्थानमुक्त्वा १"एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यस्सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः" इत्यन्तर्हृदयेऽवस्थितस्योपास्यमानस्य प्राप्याकारं निर्दिश्य १"एष म आत्माऽन्तर्हृदय एतद्ब्रह्म" इत्येवम्भूतं परं ब्रह्म परमकारुण्येनास्मदुज्जिजीवयिषयाऽस्मद्धृदये सन्निहितमितीदमनुसन्धानं विधाय २"एतमितः प्रेत्याभिसम्भवितास्मि" इति यथोपासनं प्राप्तिनिश्चयानुसन्धानं च विधाय २"इति यस्य स्यादद्धा न विचिकित्साऽस्ति" इत्येवंविधप्राप्यप्राप्तिनिश्चयोपेतस्योपासकस्य प्राप्तौ न संशयोऽस्तीत्युपसंहृतम् । अत उपासनार्थमर्भकौकस्त्वमणीयस्त्वं च ॥ ७ ॥

## सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् । १ । २ । ८ ॥

जीवस्येव परस्यापि ब्रह्मणश्शरीरान्तर्वर्तित्वमभ्युपगतं चेत्-तद्वदेव शरीरसम्बन्धप्रयुक्तसुखदुःखोपभोगप्राप्तिरिति चेत्--तन्न, हेतुवैशेष्यात्—नहि शरीरान्तर्वर्तित्वमेव सुखदुःखोपभोगहेतुः; अपि तु पुण्यपापरूपकर्मपरवशत्वम्; तत्त्वपहतपाप्मनः परमात्मनो न सम्भवति। तथा च श्रुतिः ३"तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति ॥ ८ ॥

इति श्रीशारीरकमीमांसाभाष्ये सर्वत्रप्रसिद्ध्यधिकरणम् ॥१॥

---

१ छा० ३ । १४ । १, ४ ॥ २ छा० ३ । १४ । ४ ॥
३ मुण्ड० ३ । १ । १ ॥

—*( श्रीशारीरकमीमांसाभाष्ये अत्त्राधिकरणम् ॥२॥ )*—

यदि परमात्मा न भोक्ता, एवं तर्हि सर्वत्र भोक्तृतया प्रतीयमानो जीव एव स्यादित्याशङ्क्याह –

## अत्ता चराचरग्रहणात् । १ । २ । ९ ॥

कठवल्लीष्वाम्नायते १"यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इति । अत्रौदनोपसेचनसूचितोऽत्ता किं जीव एव, उत परमात्मेति सन्दिह्यते । किं युक्तम् ? जीव इति । कुतः ? भोक्तृत्वस्य कर्मनिमित्तत्वाज्जीवस्यैव तत्सम्भवात् ॥

अत्रोच्यते—अत्ता चराचरग्रहणात्—अत्ता परमात्मैव । कुतः ? चराचरग्रहणात्—चराचरस्य कृत्स्नस्यात्तृत्वं हि तस्यैव सम्भवति । न चेदं कर्मनिमित्तभोक्तृत्वम् ; अपि तु जगज्जन्मस्थितिलयहेतुभूतस्य परस्य ब्रह्मणो विष्णोस्संहर्तृत्वम् ; २"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्यत्रैव दर्शनात् । तथा च ३"मृत्युर्यस्योपसेचनम्" इति वचनात्, ३"ब्रह्म च क्षत्रं च" इति कृत्स्नं चराचरं जगदिहादनीयौदनत्वेन गृह्यते । उपसेचनं हि नाम स्वयमद्यमानं सदन्यस्यादनहेतुः । अत उपसेचनत्वेन मृत्योरप्यद्यमानत्वात्तदुपसिच्यमानस्य कृत्स्नस्य ब्रह्मक्षत्रपूर्वकस्य जगतश्चराचरस्यादनमत्र विवक्षितमिति गम्यते । ईदृशं चादनमुपसंहार एव । तस्मादीदृशं जगदुपसंहाररूपं भोक्तृत्वं परमात्मन एव ॥ ९ ॥

## प्रकरणाच्च । १ । २ । १० ॥

प्रकरणं चेदं परस्यैव ब्रह्मणः—४"महान्तं विभुमात्मानं मत्वा धीरो न शोचति" ४"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति हि प्रकृतम् । ३"क इत्था वेद यत्र सः" इत्यपि हि तत्प्रसादादृते तस्य दुरवबोधत्वमेव पूर्वप्रस्तुतं प्रत्यभिज्ञाप्यते ॥ १० ॥

१ कठ० १-२-२५ ॥ २ कठ० १-३-९ ॥
३ कठ० १-२-२५ ४ कठ० १-२-२२-२३ ॥

अथ स्यात्—नायं ब्रह्मक्षत्रौदनसूचितः पुरुषोऽपहतपाप्मा परमात्मा; अनन्तरम् [1]"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः" इति कर्मफलभोक्तुरेव सद्वितीयस्याभिधानात्। द्वितीयश्च प्राणो बुद्धिर्वा स्यात्। ऋतपानं हि कर्मफलभोग एव; स च परमात्मनो न सम्भवति; बुद्धिप्राणयोस्तु भोक्तुर्जीवस्योपकरणभूतयोर्यथा कथञ्चित्पानेऽन्वयस्सम्भवतीति तयोरन्यतरेण सद्वितीयो जीव एव प्रतिपाद्यते, तदेकप्रकरणत्वात्पूर्वप्रस्तुतोऽत्ताऽपि स एव भवितुमर्हति—इति। तत्रोच्यते—

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ।१। २ । ११ ।

न प्राणजीवौ बुद्धिजीवौ वा गुहां प्रविष्टावृतं पिबन्तावित्युच्येते; अपि तु जीवपरमात्मानौ हि तथा व्यपदिश्येते। कुतः? तद्दर्शनात्। अस्मिन् प्रकरणे जीवपरयोरेव गुहाप्रवेशव्यपदेशो दृश्यते। परमात्मानस्तावत् [2]"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इति। जीवस्यापि [3]"या प्राणेन सम्भवत्यदितिर्देवतामयी। गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत" इति। कर्मफलान्यत्तीत्यदितिर्जीव उच्यते। प्राणेन सम्भवति—प्राणेन सह वर्तते। देवतामयी—इन्द्रियाधीनभोगा। गुहां प्रविश्य तिष्ठन्ती—हृदयपुण्डरीकोदरवर्तिनी। भूतेभिर्व्यजायत—पृथिव्यादिभिर्भूतैस्सहिता देवादिरूपेण विविधा जायते। एवं च सति [4]"ऋतं पिबन्तौ" इति व्यपदेशः 'छत्रिणो गच्छन्ति' इति वत्प्रतिपत्तव्यः। यद्वा—प्रयोज्यप्रयोजकरूपेण पाने कर्तृत्वं जीवपरयोरुपपद्यते ॥ ११ ॥

## विशेषणाच्च । १ । २ । १२ ।

अस्मिन् प्रकरणे जीवपरमात्मानावेवोपास्यत्वोपासकत्वप्रा-

---

१ कठ० १-३-१ ॥ २ कठ० १-२-१२ ॥
३ कठ० २-४-७ ॥ ४ कठ० ३-१-३ ॥

प्यत्वप्राप्तृत्वविशिष्टौ सर्वत्र प्रतिपाद्येते। तथाहि—१"ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति" इति। ब्रह्मजज्ञो जीवः, ब्रह्मणो जातत्वात् ज्ञत्वाच्च। तं देवमीड्यं विदित्वा-जीवात्मानमुपासकं ब्रह्मात्मकत्वेनावगम्येत्यर्थः। तथा २"यस्सेतुरीजानानामक्षरं ब्रह्म यत्परम्। अभयं तितीर्षतां पारं नाचिकेतं शकेमहि" इत्युपास्यः परमात्मोच्यते। नाचिकेतम्—नाचिकेतस्य कर्मणः प्राप्यमित्यर्थः। ३"आत्मानं रथिनं विद्धि शरीरं रथमेव च" इत्यादिनोपासको जीव उच्यते। तथा ४"विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इति प्राप्यप्राप्तारावभिधीयेते जीवपरमात्मानौ। इहापि ५"छायातपौ" इत्यज्ञत्वसर्वज्ञत्वाभ्यां तावेव विशिष्य व्यपदिश्येते॥

अथ स्यात् ६"येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके" इति जीवस्वरूपयाथात्म्यप्रश्नोपक्रमत्वात्सर्वमिदं प्रकरणं जीवपरमिति प्रतीयते—इति। नैतदेवम्, न हि जीवस्य देहातिरिक्तस्यास्तित्वनास्तित्वशङ्कयाऽयं प्रश्नः, तथा सति पूर्ववरद्वयवरणानुपपत्तेः। तथा हि पितुस्सर्ववेदसदक्षिणक्रतुसमाप्तिवेलायां दीयमानदक्षिणावैगुण्येन क्रतुवैगुण्यं मन्यमानेन कुमारेण नचिकेतसा आस्तिकाग्रेसरेण स्वात्मदानेनापि पितुः क्रतुसाद्गुण्यमिच्छता ७"कस्मै मां दास्यसि" इत्यसकृत्पितरं पृष्टवता स्वनिर्बन्धकृष्टपितृवचनान्मृत्युसदनं प्रविष्टेन स्वसदनात्प्रोषुषि यमे तददर्शनात्तत्र तिस्रो रात्रीरुपोषुषा स्वोपवासभीततत्प्रतिविधानप्रवृत्तमृत्युप्रदत्ते वरत्रये आस्तिक्यातिरेकात्प्रथमेन वरेण स्वात्मानं प्रति पितुः प्रसादो वृतः, एतच्च सर्वं देहातिरिक्तात्मानमजानतो नोपपद्यते। द्वितीयेन च वरेणोत्तीर्णदेहात्मानुभाव्यफलसाधनभूताऽग्निविद्या वृता; तदपि देहातिरिक्तात्मानभिज्ञस्य न सम्भवति। अतस्तृतीयेन वरेण यदिदं प्रियते ८"येयं प्रेते विचि-

---

१. कठ. १-१-१७॥ २. कठ. १.३.२॥ ३. कठ. १.३.३॥
४. कठ. १-३-९॥ ५. कठ. १.३.१॥ ६. कठ. १.१.२०॥
७. कठ. १.१.४॥ ८ कठ१. १. २०॥

कित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः" इति; अत्र परमपुरुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मतत्वजिज्ञासयाऽयं प्रश्नः क्रियते । एवं च १"येयं प्रेते" इति न शरीरवियोगमात्राभिप्रायम्, अपि तु सर्वबन्धविनिर्मोक्षाभिप्रायम् । यथा २"न प्रेत्य संज्ञाऽस्ति" इति । अयमर्थः-मोक्षाधिकृते मनुष्ये प्रेते सर्वबन्धविनिर्मुक्ते तत्स्वरूपविषया वादिविप्रतिपत्तिनिमित्ताऽस्तिनास्त्यात्मिका येयं विचिकित्सा, तदपनोदनाय तत्स्वरूपयाथात्म्यं त्वयाऽनुशिष्टोऽहं विद्यां—जानीयाम्—इति । तथा हि बहुधा विप्रतिपद्यन्ते—केचिद्वित्तिमात्रस्याऽऽत्मनस्स्वरूपोच्छित्तिलक्षणं मोक्षमाचक्षते । अन्ये वित्तिमात्रस्यैव सतोऽविद्यास्तमयम् । अपरे—पाषाणकल्पस्याऽऽत्मनो ज्ञानाद्यशेषवैशेषिकगुणोच्छेदलक्षणं कैवल्यरूपम् । अपरे तु-अपहतपाप्मानं परमात्मानमभ्युपगच्छन्तस्तस्यैवोपाधिसंसर्गनिमित्तजीवभावस्योपाध्यपगमेन तद्भावलक्षणं मोक्षमातिष्ठन्ते । त्रय्यन्तनिष्णातास्तु-- निखिलजगदेककारणस्याशेषहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस्य परस्य ब्रह्मणश्शरीरतया प्रकारभूतस्यानुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्यानादिकर्मरूपाविद्यातिरोहितस्वरूपस्याविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते । तत्र मोक्षस्वरूपं तत्साधनं च त्वत्प्रसादाद्विद्यामिति नचिकेतसा पृष्टो मृत्युस्तस्यार्थस्य दुरवबोधत्वप्रदर्शनेन विविधभोगवितरणप्रलोभनेन चैनं परीक्ष्य योग्यतामभिज्ञाय परावरात्मतत्त्वविज्ञानं परमात्मोपासनं तत्पदप्राप्तिलक्षणं मोक्षं च ३"तं दुर्दर्शं गूढमनुप्रविष्टम्" इत्यारभ्य ४"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्यन्तेनोपदिश्य तदपेक्षितांश्च विशेषानुपदिदेशेति सर्वं समञ्जसम् । अतः परमात्मैवात्तेति सिद्धम् ॥ १२ ॥

इति श्रीशारीरिकमीमांसाश्रीभाष्ये अत्त्रधिकरणम् ॥ २ ॥

---

१-कठ. १-१-२ २-बृ. ४-४-१२ ३-कठ. १.२.१२ ॥
४-कठ. १.३.९ ॥

( *श्रीशारीरकमीमांसाश्रीभाष्ये-अन्तराधिकरणम् ॥ ३ ॥* )

## अन्तर उपपत्तेः । १ । २ । १३ ॥

१इदमामनन्ति च्छन्दोगाः २ "य एषोऽक्षिणि पुरुषो दृश्यते। एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म" इति। तत्र सन्देहः— किमयमक्ष्याधारतया निर्दिश्यमानः पुरुषः प्रतिबिम्बात्मा, उत चक्षुरिन्द्रियाधिष्ठाता देवताविशेषः, उत जीवात्मा, अथ परमात्मा इति। किं युक्तम्? प्रतिबिम्बात्मेति। कुतः? प्रसिद्धवन्निर्देशात्; 'दृश्यते' इत्यपरोक्षाभिधानाच्च। जीवात्मा वा, तस्यापि हि चक्षुषि विशेषेण सन्निधानात्प्रसिद्धिरुपपद्यते? उन्मीलितं हि चक्षुरुद्वीक्ष्य जीवात्मनश्शरीरे स्थितिगती निश्चिन्वन्ति। ३ "रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः" इति ४ श्रुतिप्रसिद्ध्या चक्षुःप्रतिष्ठो देवताविशेषो वा; एष्वेव प्रसिद्धवन्निर्देशोपपत्तेरेषामन्यतमः—

इति प्राप्ते प्रचक्ष्महे—अन्तर उपपत्तेः--अक्ष्यन्तरः परमात्मा। कुतः? ५ "एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति एतं संयद्वाम इत्याचक्षते। एतं हि सर्वाणि वामान्यभिसंयन्ति एष उ एव वामनिः। एष हि सर्वाणि वामानि नयति। एष उ एव भामनिः। एष हि सर्वेषु लोकेषु भाति" इत्येषां गुणानां परमात्मन्येवोपपत्तेः ॥ १३ ॥

## स्थानादिव्यपदेशाच्च । १ । २ । १४ ॥

चक्षुषि स्थितिनियमनादयः परमात्मन एव ६ "यश्चक्षुषि तिष्ठन्" इत्येवमादौ व्यपदिश्यन्ते। अतश्च ७ "य एषोऽक्षिणि

१. इदं समामनन्ति पा ॥
२. छा. ४-१५-१ ॥
३. बृ. ७-५-१ ॥
४. श्रुतिप्रसिद्ध पा ॥
५. छा. ४-१५-३ ॥
६. बृ. ५-७-१८ ॥
७. छा. ४-१५-१ ॥

पुरुषः' इति स एव प्रतीयते। अतः प्रासङ्गिकनिर्देशश्च परमात्म-न्युपपद्यते। तत एव 'दृश्यते' इति साक्षात्कारव्यपदेशोऽपि-योगिभिर्दृश्यमानत्वादुपपद्यते ॥ १४ ॥

## सुखविशिष्टाभिधानादेव च । १ । २ १५ ॥

इतश्चाक्ष्याधारः पुरुषोत्तमः –१ "कं ब्रह्म खं ब्रह्म" इति प्रकृतस्य सुखविशिष्टस्य ब्रह्मणः उपासनस्थानविधानार्थं संयद्वाम-त्वादिगुणविधानार्थं च ३ "य एषोऽक्षिणि पुरुषः" इत्यभिधानात्। एवकारो नैरपेक्ष्यं हेतोर्द्योतयति।

नन्वग्निविद्याव्यवधानात् १ "कं ब्रह्म" इति प्रकृतं ब्रह्म नेह सन्निधत्ते। तथा हि—अग्नयः १ "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इति ब्रह्मविद्यामुपदिश्य २ "अथ हैनं गार्हपत्योऽनुशशास" इत्यारभ्याग्नी-नामुपासनमुपदिदिशुः। न चाग्निविद्या ब्रह्मविद्याङ्गमिति शक्यं वक्तुम्; ब्रह्मविद्याफलानन्तर्गततद्विरोधिसर्वायुःप्राप्तिसन्तत्यविच्छे-दादिफलश्रवणात्। उच्यते—१ "प्राणो ब्रह्म" १ "एतदमृतमभय-मेतद्ब्रह्म" इत्युभयत्र ब्रह्मसंशब्दनात्। ३ "आचार्यस्तु ते गतिं वक्ता" इत्यग्निवचनाच्च गत्युपदेशात्पूर्वं ब्रह्मविद्याया असमाप्तेस्तन्मध्य-गताग्निविद्या ब्रह्मविद्याङ्गमिति निर्धार्यते; ४ "अथ हैनं गार्हपत्यो-ऽनुशशास" इति ब्रह्मविद्याधिकृतस्यैवाग्निविद्योपदेशाच्च। किञ्च ५ "व्याधिभिः प्रतिपूर्णोऽस्मि" इति ब्रह्मप्राप्तिव्यतिरिक्तनानाविध-कामोपहतिपूर्वकगर्भजन्मजरामरणादिभव ६ भयोपतप्तायोपकोसलाय ८ "एषा सोम्य तेऽस्मद्विद्याऽऽत्मविद्या च" इति समुच्चित्योपदेशा-न्मोक्षैकफलात्मविद्याङ्गत्वमग्निविद्यायाः प्रतीयते। एवं चाङ्गत्वे-

१. छा. ४-१०-५ ॥ २. छा. ४-११-१ ॥
३. छा. ४-१४-१ ॥ ४. छा. ४-११-१ ॥
५. छा. ४-१०-३ ॥ ६. भयाभि. पा ॥
७. छा. ४-१४-१ ॥ ८. छा. ४-१३-२ ॥

ऽवगते सति फलानुकीर्तनमर्थवाद इति गम्यते । नचात्र मोक्षविरोधिफलं किञ्चिच्छ्रूयते, १"अपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्ते उप वयन्तं भुञ्जामोऽस्मिंश्च" लोकेऽमुष्मिंश्च इत्यमीषां फलानां मोक्षाधिकृतस्यानुगुणत्वात्। अपहते पापकृत्याम् - ब्रह्मप्राप्तिविरोधि पाप कर्मापहन्ति। लोकी भवति— तद्विरोधिनि पापे निरस्ते ब्रह्मलोकं प्राप्नोति । सर्वमायुरेति-ब्रह्मोपासनसमाप्तेर्यावदायुरपेक्षितम् , तत्सर्वमेति। ज्योग्जीवति—व्याध्यादिभिरनुपहतो यावद्ब्रह्मप्राप्ति जीवति। नास्यावरपुरुषाः क्षीयन्ते— अस्य शिष्यप्रशिष्यादयः पुत्रपौत्रादयोऽपि ब्रह्मविद एव भवन्ति। २"नास्याब्रह्मवित्कुले भवति" इति च श्रुत्यन्तरे ब्रह्मविद्याफलत्वेन श्रूयते। उप वयन्तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च—वयम् अग्नयस्तमेनमुपभुञ्जामः-यावद्ब्रह्मप्राप्ति विघ्नेभ्यः परिपालयाम इति। अतोऽग्निविद्याया ब्रह्मविद्याङ्गत्वेन तत्सन्निधानाविरोधात्सुखाद्यविशिष्टं प्राकृतमेव ३ब्रह्मोपासनस्थानविधानार्थं गुणविधानार्थं चोच्यते । ननु ४"आचार्यस्तु ते गतिं वक्ता" इति गतिमात्रपरिशेषणादाचार्येण गतिरेवोपदेश्येति गम्यते; तत्कथं स्थानगुणविध्यर्थतोच्यते तदभिधीयते ४"आचार्यस्तु ते गतिं वक्ता" इत्यस्यायमभिप्रायः—ब्रह्मविद्यामनुपदिश्य प्रोषुषि गुरौ तदलाभादनाश्वासमुपकोसलमुज्जीवयितुं स्वपरिचरणप्रीता गार्हपत्यादयो गुरोरग्नयस्तस्मै ब्रह्मस्वरूपमात्रं तदङ्गभूतां चाग्निविद्यामुपदिश्य ५"आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्" इति श्रुत्यर्थमालोच्य साधुतमत्वप्राप्त्यर्थमाचार्य एवास्य संयद्वामत्वादिगुणकं ब्रह्म तदुपासनस्थानमर्चिरादिकां च गतिमुपदिशत्विति मत्वा ६"आचार्यस्तु ते गतिं वक्ता" इत्यवोचन्। गतिग्रहणमुपदेश्यविद्याशेषप्रदर्शनार्थम्। अत एवाचार्योऽपि ७"अहं तु ते तद्वक्ष्यामि

१ छा० ४ । १३ । २ ॥
२ मु० ३ । २ । ९ ॥
३ प्रथम इहोपासनस्थान पा ॥
४ छा० ४ । ९ । ६ ॥
५ छा० ४ । ९ । ३ ॥
६ छा० ४ । १४ । १ ॥
७ छा० ४ । १४ । ३ ॥

यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" इत्युपक्रम्य संयद्वामत्वादिकल्याणगुणविशिष्टं ब्रह्माक्षिस्थानोपास्यमर्चिरादिकां च गतिमुपदिदेश। अतः १"कं ब्रह्म खं ब्रह्म" इति सुखविशिष्टस्य प्रकृतस्यैव ब्रह्मणोऽत्राभिधानादयमक्ष्याधारः परमात्मा ॥ १५ ॥

ननु च १"कं ब्रह्म खं ब्रह्म" इति परं ब्रह्माभिहितमिति कथमवगम्यते, यस्येहाक्ष्याधारतयाऽभिधानं ब्रूषे; यावता १"कं ब्रह्म खं ब्रह्म" इति प्रसिद्धाकाशलौकिकसुखयोरेव ब्रह्मदृष्टिर्विधीयत इति प्रतिभाति, २"नाम ब्रह्म" ३"मनो ब्रह्म" इत्यादिवचनसारूप्यात्। तत्राह—

## अत एव च स ब्रह्म । १ । २ । १६ ॥

यतस्तत्र ४"यदेव कं तदेव खम्" इति सुखविशिष्टस्याऽकाशस्याभिधानम्, अत एव खशब्दाभिधेयस्सः आकाशः परं ब्रह्म। एतदुक्तं भवति—अग्निभिः ५"प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इत्युक्ते उपकोसल उवाच ५"विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामि" इति ॥

अस्यायमभिप्रायः—न तावत्प्राणादिप्रतीकोपासनमग्निभिरभिहितम्, जन्मजरामरणादिभवभयभीतस्य मुमुक्षोर्ब्रह्मोपदेशाय प्रवृत्तत्वात्। अतो ब्रह्मैवोपास्यमुपदिष्टम्। तत्र प्रसिद्धैः प्राणादिभिस्समानाधिकरण्यं ब्रह्म निर्दिष्टम्; तेषु च प्राणविशिष्टत्वं जगद्विधरणयोगेन वा प्राणशरीरतया प्राणस्य नियन्तृत्वेन वा ब्रह्मण उपपद्यत इति ६"विजानाम्यहं यत्प्राणो ब्रह्म" इत्युक्तवान्। तथा सुखाकाशयोरपि ब्रह्मणः शरीरतया तन्नियाम्यत्वेन विशेषणत्वम्; उतान्योन्यव्यवच्छेदकतया निरतिशयानन्दरूपब्रह्मस्वरूपसमर्पणपरत्वेन वा; तत्र पृथग्भूतयोश्शरीरतया विशेषणत्वे वैषयिकसुखभूताकाशयोर्नियाम-

१ छा० ४ । १० । ५ ॥ २ छा० ७ । १ । ५ ॥
३ छा० ७ । ३ । २ ॥ ४.५ छा० ४ । १० । ५ ॥
६ छा० ४ । १० । ५ ॥

कत्वं ब्रह्मणस्स्यादिति स्वरूपावगतिर्न स्यात् . अन्योन्यव्यवच्छेदक त्वेऽपरिच्छिन्नानन्दैकस्वरूपत्वं ब्रह्मणस्स्यादित्यन्यतरप्रकारनिर्दिधार-यिषया १"कं च तु खं च न विजानामि" इत्युक्तवान । उपकोसल-स्येममाशयं जानन्तोऽग्नयः १"यद्वा व कं तदेव खं यदेव खं तदेव कम्" इत्यूचिरे । ब्रह्मणस्सुखरूपत्वमेवापरिच्छिन्नमित्यर्थः । अतः प्राणशरीरतया प्राणविशिष्टं यद्ब्रह्म, तदेवापरिच्छिन्नसुखरूपं चेति निगमितम् -१"प्राणं च हास्मै तदाकाशं चोचुः" इति । अतः १"कं ब्रह्म खं ब्रह्म" इत्यत्रापरिच्छिन्नसुखं ब्रह्म प्रतिपादितमिति परं ब्रह्मैव तत्र प्रकृतम्, तदेव चात्राक्ष्याधारतयाऽभिधीयत इत्यक्ष्याधारः परमात्मा ॥ १६ ॥

## श्रुतोपनिषत्कगत्यभिधानाच्च । १ । २ । १७ ॥

श्रुतोपनिषत्कस्य --अधिगतपरमपुरुषयाथात्म्यस्यानुसन्धेय-तया श्रुत्यन्तरप्रतिपाद्यमाना अर्चिरादिका गतिर्या, तामपुनरावृत्ति-लक्षणपरमपुरुषप्राप्तिकरीमुपकोसलायाक्षिपुरुषं श्रुतवते २"तेऽर्चिषमे-वाभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षम्" इत्यारभ्य ३"चन्द्र-मसो विद्युतं तत्पुरुषोऽमानवस्स एतान्ब्रह्म गमयत्येष देवपथो ब्रह्म-पथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इत्यग्निरुपदि-शति । अतोऽप्ययमक्षिपुरुषः परमात्मा ॥ १७ ॥

## अनवस्थितेरसम्भवाच्च नेतरः । १ । २ । १८ ॥

प्रतिबिम्बादीनामक्षिणि नियमेनानवस्थानादमृतत्वादीनां च निरुपाधिकानां तेष्वसम्भवाच्च परमात्मन इतरः छायादिः अक्षिपुरुषो भवितुमर्हति । प्रतिबिम्बस्य तावत्पुरुषान्तरसन्निधानायत्तत्वान्न नियमेनावस्थानसम्भवः । जीवस्यापि सर्वेन्द्रियव्यापारानुगुणत्वाय सर्वेन्द्रियकन्दभूते स्थानविशेषे वृत्तिरिति चक्षुषि नावस्थानम् । देवता-

१ छा० ४ । १०। ५ ॥ २ छा० ४ । १५ । ५ ॥
३ छा० ४ । १५ । ५ ॥ ४ बृ० ७ । ५ । १० ॥

याश्च १"रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः" इति रश्मिद्वारेणावस्थानव-चनाद्देशान्तरावस्थितस्यापीन्द्रियाधिष्ठानोपपत्तेर्न चक्षुर्व्यवस्थानम्। सर्वेषामेवैषां निरुपाधिकामृतत्वादयो न सम्भवन्त्येव। तस्मादक्षि-पुरुषः परमात्मा ॥

इति श्रीशारीरकमीमांसाभाष्ये अन्तराधिकरणम् ॥ ३ ॥

---

( *श्रीशारीरकमीमांसाभाष्ये अन्तर्याम्यधिकरणम् ॥ ४ ॥* )

२ "स्थानादिव्यपदेशाच्च" इत्यत्र ३ "यश्चक्षुषि तिष्ठन्" इत्यादिना प्रतिपाद्यमानं चक्षुषि स्थितिनियमनादिकं परमात्मन एवेति सिद्धं कृत्वाऽक्षिपुरुषस्य परमात्मत्वं साधितम्। इदानीं तदेव समर्थ्यते--

## अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यप-देशात्। १। २। १९ ॥

काण्वा माध्यन्दिनाश्च वाजसनेयिनस्समामनन्ति ४ "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः" इति। एवमप्स्वग्न्यन्तरिक्षवाय्वादित्यदिक्चन्द्रतारकाकाशतमस्तेजस्सु दे-वेषु च सर्वेषु भूतेषु प्राणवाक्चक्षुश्श्रोत्रमनस्त्वग्विज्ञानरेतस्स्वात्मा-त्मीयेषु च तिष्ठन्तं तत्तदन्तरभूतं तत्तदवेद्यं तत्तच्छरीरकं तत्तद्यम-

---

१ छ० ४। १५। ५ ॥　　२ शारी. १-२-१४ ॥
३ बृ. ५-७-१८ ॥　　४ बृ. ५-७-३ ॥

यन्तं कञ्चिन्निर्दिश्य १ "एष त आत्माऽन्तर्याम्यमृतः" इत्युपदिश्यते । माध्यन्दिनपाठे तु १ 'यस्सर्वेषु लोकेषु तिष्ठन्" १ "यस्सर्वेषु वेदेषु" १ "यस्सर्वेषु यज्ञेषु" इति च पर्यायाः। १ "यो विज्ञाने तिष्ठन्" इत्यस्य पर्यायस्य स्थाने १ "य आत्मनि तिष्ठन् इति पर्यायः। २ "स त आत्माऽन्तर्याम्यमृतः" इति च विशेषः। तत्र संशय्यते —किमयमन्तर्यामी प्रत्यगात्मा, उत परमात्मा—इति । किं युक्तम् ? प्रत्यगात्मेति । कुतः ? वाक्यशेषे ३ "द्रष्टा श्रोता" इति करणायत्तज्ञानताश्रुतेः। एवं द्रष्टुरेवान्तर्यामित्वोपदेशात्, ३ "नान्योऽतोऽस्ति द्रष्टा" इति द्रष्ट्रन्तरनिषेधाच्चेति ।

एवं प्राप्तेऽभिधीयते—अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्—अधिदैवाधिलोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणोऽन्तर्याम्यपहतपाप्मा परमात्मा नारायणः । काण्वपाठसिद्धेभ्योऽधिदैवादिमन्त्रयो वाक्येभ्योऽधिकान्यधिलोकादिमन्ति वाक्यानि माध्यन्दिनपाठे सन्तीति ज्ञापनार्थमधिदैवाधिलोकादिष्वित्युभयोरूपादानम् । तदेवमुभयेष्वपि वाक्येष्वन्तर्यामी परमात्मेत्यर्थः । कुतः ? तद्धर्मव्यपदेशात् ; परमात्मधर्मो ह्ययम्, यदेक एव सन् सर्वलोकसर्वभूतसर्वदेवादीन्नियमयतीति । तथा उद्दालकप्रश्नः — ४ "य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो—यमयति" इत्युपक्रम्य ३ "तमन्तर्यामिणं ब्रूहि" इति, तस्य चोत्तरम् ५ "यः पृथिव्यां तिष्ठन्" इत्यारभ्योक्तम्। तदेतत्सर्वाल्लोकान् सर्वाणि च भूतानि सर्वान् देवान् सर्वान्वेदान् सर्वांश्च यज्ञानन्तः प्रविश्य सर्वप्रकारनियमनम्, सर्वशरीरतया सर्वस्यात्मत्वं च सर्वज्ञात्सत्यसङ्कल्पात्पुरुषोत्तमादन्यस्य न सम्भवति । तथाहि ६ "अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा" ७ "तत्सृष्ट्वा । तदेवानुप्राविशत्। तदनुप्रविश्य। सच्च त्यच्चाभवत्" इत्यादीन्यौपनिषदानि वाक्यानि

१. बृ ५-७ ॥

२. बृ. ५-७-२३. एषत इति स्थाने सत इति माध्यन्दिनपाठः ॥

३. बृ. ५ ७-२३ ॥

४. बृ. ५-७-१ ॥ ५. बृ. ५-७-३ ॥

६. तै. आरण्य. ३-११, अनु. २०॥ ७. तै. आन. ६ ॥

परमात्मन एव सर्वस्य प्रशासितृत्वं सर्वस्याऽऽत्मत्वमित्यादीनि वदन्ति। तथा सुबालोपनिषदि १ "नैवेह किञ्चनाग्र आसीदमूलमनाधारमिमाः प्रजाः प्रजायन्ते दिव्यो देव एको नारायणः। चक्षुश्च द्रष्टव्यं च नारायणः। श्रोत्रं च श्रोतव्यं च नारायणः" इत्यारभ्य १ "अन्तश्शरीरे निहितो गुहायामज एको नित्यः यस्य पृथिवी शरीरं यः पृथिवीमन्तरे सञ्चरन् यं पृथिवी न वेद यस्यापश्शरीरम्" इत्यादि, १ "यस्य मृत्युश्शरीरं यो मृत्युमन्तरे सञ्चरन्यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति परस्यैव ब्रह्मणस्सर्वात्मत्वं सर्वशरीरत्वं सर्वस्य नियन्तृत्वं च प्रतिपाद्यते। स्वाभाविकं चामृतत्वं परमात्मन एव धर्मः। न च परस्यात्मनः करणायत्तं द्रष्टृत्वादिकम्; अपितु स्वभावत एव सर्वज्ञत्वात्सत्यसङ्कल्पत्वाच्च स्वत एव। यथाच श्रुतिः २ "पश्यत्यचक्षुस्स शृणोत्यकर्णः अपाणिपादो जवनो ग्रहीता" इति। न च दर्शनश्रवणादिशब्दाश्चक्षुरादिकरणजन्मनो ज्ञानस्य वाचकाः; अपितु रूपादिसाक्षात्कारस्य। सच रूपादिसाक्षात्कारः कर्मतिरोहितस्वाभाविकज्ञानस्य जीवस्य चक्षुरादिकरणजन्मा; परस्यतु स्वतएव। ३ "नान्योऽतोऽस्ति द्रष्टा" इत्येतदपि पूर्ववाक्योदितान्नियन्तुर्द्रष्टुरन्यो द्रष्टा नास्तीति वदति। "यं पृथिवी न वेद" "यमात्मा न वेद" इत्येवमादिभिर्वाक्यैः पृथिव्यात्मादिनियाम्यैरनुपलभ्यमान एव नियमतीति यत्पूर्वमुक्तम्, तदेव ३ "अदृष्टो द्रष्टा अश्रुतश्श्रोता" इति निगमय्य ३ "नान्योऽतोऽस्ति द्रष्टा" इत्यादिना तस्य नियन्तुर्नियन्त्रन्तरं निषिध्यते। ४ "एष त आत्मा" * "स त आत्मा" इति च त इति व्यतिरेकविभक्तिनिर्दिष्टस्य जीवस्यात्मतयोपदिश्यमानोऽन्तर्यामी न प्रत्यगात्मा भवितुमर्हति ॥ १६ ॥

## न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च ।१।२।२०॥

स्मार्तं प्रधानम्। शारीरः जीवः। स्मार्तं च शारीरश्च नान्तर्या-

१ सुबाल० ७। ख॥ २ श्वे० ३। १९॥
३ बृ० ५। ७। २३॥ ४ बृ० ५। ७; *माध्यन्दिन पाठः॥

मीं, अतद्धर्माभिलापात्—तयोरसम्भावितधर्माभिलापात्। स्वभावत एव सर्वस्य द्रष्टृत्वम्, सर्वस्य नियन्तृत्वम्, सर्वस्याऽऽत्मत्वम्, स्वत एवामृतत्वं च तयोर्न सम्भावनागन्धमर्हति। एतदुक्तं भवति—यथा स्मार्तमचेतनं सर्वज्ञत्वनियन्तृत्वसर्वात्मत्वादिकं नार्हति, तथा जीवोऽपि, अतद्धर्मत्वात्-इति॥

अमीषां गुणानां परमात्मन्यन्वयः, प्रत्यगात्मनि व्यतिरेकश्च सूत्रद्वयेन दर्शितः॥ २०॥

निरपेक्षं च हेत्वन्तरमाह—

## उभयेऽपि हि भेदेनैनमधीयते । १ । २ २१ ॥

उभये—माध्यन्दिनाः काण्वाश्च, अन्तर्यामिणो नियम्यत्वेन वागादिभिरचेतनैस्समम् एनं शारीरमपि विभज्याधीयते—१ "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इति माध्यन्दिनाः, २"यो विज्ञाने तिष्ठन्" इत्यादि च काण्वाः, परमात्मनियाम्यतया तस्माद्विलक्षणत्वेनैनमधीयत इत्यर्थः। अतोऽन्तर्यामी प्रत्यगात्मनो विलक्षणोऽपहतपाप्मा परमात्मा नारायण इति सिद्धम्॥ २१॥

इति श्रीशारीरकमीमांसाभाष्ये अन्तर्याम्यधिकरणम्॥ ४॥

---

( श्रीशारीरकमीमांसाभाष्ये अदृश्यत्वादिगुणकाधिकरणम्॥ )

## अदृश्यत्वादिगुणको धर्मोक्तेः । १ । २ । २२॥

आथर्वणिका अधीयते-३"अथ परा यया तदक्षरमधिगम्यते। यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादम्। नित्यं विभुं

---

१. बृ. ५-७-२२ ॥ २. बृ. ५-७-२२. माध्यन्दिनपाठः॥
३. मुण्ड. १-१-५, ६॥

सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" इति; तथोत्तरत्र १ "अक्षरात्परतः परः" इति। तत्र सन्दिह्यते-किमिहादृश्यत्वादिगुणकमक्षरमक्षरात्परतः परश्च प्रकृतिपुरुषौ; अथोभयत्र परमात्मैव-इति। किं प्राप्तम् ? प्रकृतिपुरुषाविति । कुतः ? अस्याक्षरस्य २ "अदृष्टो द्रष्टा" इत्यादाविव न द्रष्टृत्वादिश्चेतनधर्मविशेष इह श्रूयते, २ "अक्षरात्परतः परः" इति च सर्वस्माद्विकारात्परभूतादक्षरादस्मात्परः चेतनः समष्टिपुरुषः प्रतिपाद्यते। एतदुक्तं भवति-रूपादिमत्स्थूलरूपाचेतनपृथिव्यादिभूताश्रयं दृश्यत्वादिकं प्रतिषिध्यमानं पृथिव्यादिसजातीयसूक्ष्मरूपाचेतनमेवोपस्थापयति, तच्च प्रधानमेव। तस्मात्परत्वं च समष्टिपुरुषस्यैव प्रसिद्धम्। तदधिष्ठितं च प्रधानं महदादिविशेषपर्यन्तं विकारजातं प्रसूत इति तत्र दृष्टान्ता उपन्यस्यन्ते ३ "यथोर्णनाभिस्सृजते गृह्णते च यथा पृथिव्यामोषधयस्सम्भवन्ति। यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम्' इति। अतोऽस्मिन् प्रकरणे प्रधानपुरुषावेव प्रतिपाद्येते-इति ॥

एवं प्राप्ते ब्रूमः-अदृश्यत्वादिगुणको धर्मोक्तेः-अदृश्यत्वादिगुणकोऽक्षरात्परतः परश्च परमपुरुष एव; कुतः ? तद्धर्मोक्तेः ४ "यस्सर्वज्ञस्सर्ववित्" इत्यादिना सर्वज्ञत्वादिकास्तस्यैव धर्मा उच्यन्ते; तथा हि ५ "यया तदक्षरमधिगम्यते" इत्यादिना अदृश्यत्वादिगुणकमक्षरमभिधाय २ "अक्षरात्सम्भवतीह विश्वम्" इति तस्माद्विश्वसम्भवं चाभिधाय ५ "यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" इति भूतयोनेरक्षरस्य सर्वज्ञत्वादिः प्रतिपाद्यते। पश्चात् २ "अक्षरात्परतः परः" इति च प्रकृतमदृश्यत्वादिगुणकं भूतयोन्यक्षरं सर्वज्ञमेव परत्वेन व्यपदिश्यते। अतः २ "अक्षरात्परतः परः" इत्यक्षरशब्दः पञ्चम्यन्तः प्रकृतमदृश्यत्वादिगुणकमक्षरं नाभिधत्ते, तस्य सर्वज्ञस्य विश्वयोनेस्सर्वस्मात्परत्वेन तस्मादन्यस्य परत्वासम्भवात्। अतोऽत्राक्षरशब्दो भूतसूक्ष्ममचेतनं ब्रूते ॥ २२ ॥

१. मुण्ड. २-१-२ ॥ २. बृ ५-७-२३ ॥
३. मुण्ड. १-१-७॥ ४. मुण्ड. १-१-६॥
५. मुण्ड. १-१-५॥

इतश्च न प्रधानपुरुषौ--

## विशेषणाभेदव्यपदेशाभ्याञ्च नेतरौ ।१।२।२३॥

विशिनष्टि हि प्रकरणं—प्रधानाच्च पुरुषाच्च भूतयोन्यक्षरं व्यावर्तयतीत्यर्थः; एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनादिभिः । तथा ताभ्यामक्षरस्य भेदश्च व्यपदिश्यते १"अक्षरात्परतः परः" इत्यादिना । तथाहि --२"स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह" इति सर्वविद्याप्रतिष्ठाभूता ब्रह्मविद्या प्रक्रान्ता; परविद्यैव च सर्वविद्याप्रतिष्ठा; तामिमां सर्वविद्याप्रतिष्ठां विद्यां चतुर्मुखाथर्वादिगुरुपरम्परयाऽङ्गिरसा प्राप्तां जिज्ञासुः ३"शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इति ब्रह्मविद्यायास्सर्वविद्याश्रयत्वाद्ब्रह्मविज्ञानेन सर्वं विज्ञातं भवतीति कृत्वा ब्रह्मस्वरूपमनेन पृष्टम् ४"तस्मै स होवाच द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च" इति । ब्रह्मप्रेप्सुना द्वे विद्ये वेदितव्ये--ब्रह्मविषये परोक्षापरोक्षरूपे द्वे विज्ञाने उपादेये इत्यर्थः तत्र परोक्षं शास्त्रजन्यं ज्ञानम् , अपरोक्षं योगजन्यम् , तयोर्ब्रह्मप्राप्त्युपायभूतमपरोक्षं ज्ञानम् ; तच्च भक्तिरूपापन्नम् ,५"यमेवैष वृणुते तेन लभ्यः" इत्यत्रैव विशेष्यमाणत्वात् , तदुपायश्चागमजन्यं विवेकादिसाधनसप्तकानुगृहीतं ज्ञानम् , ६"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतेः । आह च भगवान्पराशरः ७"तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने । आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते" इति । ८"तत्रापरा ऋग्वेदो यजुर्वेदः" इत्यादिना ८"धर्मशास्त्राणि" इत्यन्तेन आगमोत्थं ब्रह्मसाक्षात्कारहेतुभूतं परोक्षज्ञानमुक्तम् । साङ्गस्य सेतिहासपुराणस्य सधर्मशास्त्रस्य समी-

१. मुण्ड. २-१-२॥
२. मुण्ड. १-१-१॥
३. मुण्ड. १-१-३॥
४. मुण्ड. १-१-४॥
५. मुण्ड. ३-२-३॥
६. बृ० ६।४।२२॥
७. वि० पु० ६।५।६०
८. मुण्ड० १।१।५॥

मांसस्य वेदस्य ब्रह्मज्ञानोत्पत्तिहेतुत्वात् १ "अथ परा यया तदक्षर-मधिगम्यते" इत्युपासनाख्यं ब्रह्मसाक्षात्काररलक्षणं भक्तिरूपापन्नं ज्ञानम् "यत्तदद्रेश्यमग्राह्यम्" इत्यादिना परोक्षापरोक्षरूपज्ञानद्वय-विषयस्य परस्य ब्रह्मणस्स्वरूपमुच्यते २ "यथोर्णनाभिस्सृजते गृह्णते च" इत्यादिना । अथोक्तस्वरूपात्परस्माद्ब्रह्मणोऽक्षरात्कृत्स्नस्य चेतना-चेतनात्मकप्रपञ्चस्योत्पत्तिरुक्ता; विश्वमिति वचनाच्चाचेतनमात्रस्य; ३"तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणो मनस्सत्यं लोकाः कर्मसु चामृतम्' इति ब्रह्मणो विश्वोत्पत्तिप्रकार उच्यते; तपसा–ज्ञानेन, ४ 'यस्य ज्ञानमयं तपः" इति वक्ष्यमाणत्वात्; चीयते-उपचीयते; ५"बहु स्याम्" इति सङ्कल्परूपेण ज्ञानेन ब्रह्म सृष्ट्यु-न्मुखं भवतीत्यर्थः । ततोऽन्नमभिजायते-अद्यत इत्यन्नम्, विश्वस्य भोक्तृवर्गस्य भोग्यभूतं भूतसूक्ष्ममव्याकृतं परस्माद्ब्रह्मणो जायत इत्यर्थः; प्राणमनः प्रभृति च स्वर्गापवर्गरूपफलसाधनभूतकर्मपर्यन्तं सर्वं विकारजातं तस्मादेव जायते । ४"यस्सर्वज्ञस्सर्ववित्" इत्यादिना सृष्ट्युपकरणभूतं सार्वज्ञ्यसत्यसङ्कल्पत्वादिकमुक्तम् । सर्वज्ञात्सङ्कल्पा-त्परस्माद्ब्रह्मणोऽक्षरादेतत् कार्याकारं ब्रह्म नामरूपविभक्तं भोक्तृभोग्य-रूपं च जायते। ६"तदेतत्सत्यम्" इति परस्य ब्रह्मणो निरुपाधिक-सत्यत्वमुच्यते । ६"मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि । तान्याचरत नियतं सत्यकामाः" इति सार्वज्ञ्य-सत्यसङ्कल्पत्वादिकल्याणगुणाकरमक्षरं पुरुषं स्वतस्सत्यं कामयमा-नास्तत्प्राप्तये फलान्तरेभ्यो विरक्त ऋग्यजुस्सामाथर्वसु कविभिर्दृष्टानि वर्णाश्रमोचितानि त्रेताग्निषु बहुधा सन्ततानि कर्माण्याचरतेति ६'एष वः पन्था' इत्यारभ्य ७'एष वः पुण्यस्सुकृतो ब्रह्मलोकः' इत्यन्तेन कर्मानुष्ठानप्रकारं, श्रुतिस्मृतिचोदितेषु कर्मस्वेकनरकर्मवैधुर्येऽपीतरे-

१. मुण्ड. १-१-५ ॥　　२. मुण्ड. १-१-७ ॥
३. मुण्ड. १-१-८ ॥　　४. मुण्ड. १-१-९ ॥
५. छा. ६-२-३, तै. आन. ६॥　　६. मुण्ड. १ २-१.
७. मुण्ड. १ २-१ ॥

षा मनुष्ठितानामपि निष्फलत्वम्, अयथानुष्ठितस्य चाननुष्ठितसमत्वम् अभिधाय १"प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यू ते पुनरेवापि यन्ति", इत्यादिना फलाभिसन्धिपूर्वकत्वेन ज्ञानविधुरतया चावरं कर्माचरतां पुनरावृत्तिमुक्त्वा २"तपश्श्रद्धे ये ह्युपवसन्ति" इत्यादिना पुनरपि फलाभिसन्धिरहितं ज्ञानिनानुष्ठितं कर्म ब्रह्म प्राप्तये भवतीति प्रशस्य ३"परीक्ष्य लोकान्" इत्यादिना केवलकर्मफलेषु विरक्तस्य यथोदितकर्मानुगृहीतं ब्रह्मप्राप्त्युपायभूतं ज्ञानं जिज्ञासमानस्य च आचार्योपसदनं विधाय ४"तदेतत्सत्यं यथा सुदीप्तात्" इत्यादिना ५"सोऽविद्याग्रन्थिं विकिरतीह सोम्य" इत्यन्तेन पूर्वोक्तस्याक्षरस्य भूतयोनेः परस्य ब्रह्मणः परमपुरुषस्यानुक्तैस्स्वरूपगुणैस्सह सर्वभूतान्तरात्मतया विश्वशरीरत्वेन विश्वरूपत्वम्, तस्माद्विश्वसृष्टिं च विस्पष्टमभिधाय ६"आविस्सन्निहितम्" इत्यादिना तस्यैवाक्षरस्याव्याकृतात्परतोऽपि पुरुषात्परभूतस्य परस्य ब्रह्मणः परमव्योम्नि प्रतिष्ठितस्यानवधिकातिशयानन्दस्वरूपस्य हृदयगुहायामुपासनप्रकारम् उपासनस्य च परभक्तिरूपत्वमुपासीनस्याविद्याविमोकपूर्वकं ब्रह्मासमं ब्रह्मानुभवफलं चोपदिश्योपसंहृतम् । अत एवं विशेषणाद्भेदव्यपदेशाच्च नास्मिन्प्रकरणे प्रधानपुरुषौ प्रतिपाद्येते ॥

भेदव्यपदेशोऽपि हि ताभ्यां परस्य ब्रह्मणोऽत्र विद्यते । ७"दिव्यो ह्यमूर्तः पुरुषस्सबाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात्परतः परः" इत्यादिभिः अक्षराद्व्याकृतात्परो यस्समष्टिपुरुषः तस्मादपि परभूतोऽदृश्यत्वादिगुणकोऽक्षरशब्दाभिहितः परमात्मेत्यर्थः । अश्नुत इति वा, न क्षरतीति वाऽक्षरम् । तदव्याकृतेऽपि स्वविकारव्याप्तया वा महदादिवन्नामान्तराभिलापयोग्यक्षरणाभावाद्वाऽक्षरत्वं कथञ्चिदुपपद्यते ॥ २३ ॥

१. मुण्ड. १-२-७ ॥
२. मुण्ड. १-२-११ ॥
३. मुण्ड. १-२-१२ ॥
४. मुण्ड. २-१-१ ॥
५. मुण्ड. २-१-१० ॥
६. मुण्ड. २-२-१ ॥
७. मु २-१-२.

## रूपोपन्यासाच्च । १ । २ । २४ ।

१"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशश्श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" इतीदृशं रूपं सर्वभूतान्तरात्मनः परमात्मन एव सम्भवति; अनश्च परमात्मा ॥ २४ ॥

इति श्रीशारीरकमीमांसाभाष्ये अदृश्यत्वादिगुणकाधिकरणम् ॥ ५ ॥

---

—*( श्रीशारीरकमीमांसाभाष्ये वैश्वानराधिकरणम् ॥६॥ )*—

## वैश्वानरस्साधारणशब्दविशेषात् । १ । २ । २५ ॥

इदमामनन्ति च्छन्दोगाः २"आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि" इति प्रक्रम्य ३"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति । तत्र सन्देहः—किमयं वैश्वानर आत्मा, परमात्मेति शक्यनिर्णयः, उत न-इति । किं प्राप्तम् ? अशक्यनिर्णय इति । कुतः ? वैश्वानरशब्दस्य चतुर्ष्वर्थेषु प्रयोगदर्शनात्—जाठराग्नौ तावत् ४"अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यावेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैनं घोषं शृणोति" इति; महाभूततृतीये च ५"विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्" इति देवतायां च ६"वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनामभिश्रीः" इति; परमात्मनि च ७"तदात्मन्येव हृदयेऽग्नौ वैश्वानरे प्रास्यत्" इति, ८"स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते" इति च । वाक्योपक्रमादिषूपलभ्यमानान्यपि लिङ्गानि सर्वानुगुणतया नेतुं शक्यानीति ॥

---

१. मु. २-१-४ ॥ २. छा. ५-११-६ ॥
३. छा. ५-१८-१ ॥ ४. बृ. ७-६-१ ॥
५. ६. यजु. का. १-५-११ ॥ ऋ।।।-सं- २६।७।
७. अष्टक १. प्रश्न-११ अनु-८ ॥ ८. प्रश्नो १-७ ॥

एवं प्राप्तेऽभिधीयते—वैश्वानरस्साधारणशब्दविशेषात्—वैश्वानरः पर एवात्मा, कुतः? साधारणशब्दविशेषात् विशेष्यत इति विशेषः—साधारणस्य वैश्वानरशब्दस्य परमात्मासाधारणैर्धर्मैर्विशेष्यमाणत्वादित्यर्थः। तथाहि—औपमन्यवादयः पञ्चेमे महर्षयस्समेत्य [1]"को न आत्मा किं ब्रह्म" इति विचार्य "[2]उद्दालको ह वै भगवन्तोऽयमारुणिस्सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम" इत्युद्दालकस्य वैश्वानरात्मविज्ञानमवगम्य तमभ्याजग्मुः। स चोद्दालक एतान्वैश्वानरात्मजिज्ञासूनभिलक्ष्यात्मनश्च तत्राकृत्स्नवेदित्वं मत्वा [3]"तान् होवाच अश्वपतिर्वै भगवन्तोऽयं कैकयस्सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम" इति। ते चोद्दालकषष्ठास्तमश्वपतिमभ्याजग्मुः। स च तान्महर्षीन्यथार्हं पृथगभ्यर्च्य [4]"न मे स्तेनः" इत्यादिना [4]"यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि" इत्यन्तेनाऽऽत्मनो व्रतस्थतया प्रतिग्रहयोग्यतां ज्ञापयन्नेव ब्रह्मविद्भिरपि प्रतिषिद्धपरिहरणीयतां विहितकर्मकर्तव्यतां च प्रज्ञाप्य [5]"यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्तः" इत्यवोचत्। ते च मुमुक्षवो वैश्वानरमात्मानं जिज्ञासमानास्तमेवात्मानमस्माकं ब्रूहीत्यवोचन्। तदेवं [3]"को न आत्मा किं ब्रह्म" इति जीवात्मनामात्मभूतं ब्रह्म जिज्ञासमानैस्तज्ज्ञमन्विच्छद्भिर्वैश्वानरात्मज्ञसकाशमागम्य पृच्छ्यमानो वैश्वानरात्मा परमात्मेति विज्ञायते, आत्मब्रह्मशब्दाभ्यामुपक्रम्य पश्चात्सर्वत्रात्मवैश्वानरशब्दाभ्यां व्यवहाराच्च ब्रह्मशब्दस्थाने निर्दिश्यमानो वैश्वानरशब्दो ब्रह्मैवाभिधत्त इति विज्ञायते; किञ्च [5]"स सर्वेषु लोकेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" [6]"तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति च वक्ष्यमाणं वैश्वानरात्मविज्ञानफलं वैश्वानरात्मनं परं ब्रह्मेति ज्ञापयति ॥ २५ ॥

1 छा० ५ । ११ । १ ॥ 2 छा० ५ । ११ । २ ॥
3 छा० ५ । ११ । ४ ॥ 4 छा० ५ । ११ । ५ ॥
5 छा० ५ । १८ । १ ॥ 6 छा० ५ । २४ । ३ ॥

इतश्च वैश्वानरः परमात्मा—

## स्मर्यमाणमनुमानं स्यादिति ।१।२।२६॥

द्यु प्रभृति पृथिव्यन्तमवयवविभागेन वैश्वानरस्य रूपमिहोपदिश्यते। तच्च श्रुतिस्मृतिषु परमपुरुषरूपतया प्रसिद्धम्। तदिह तदेवेदमिति स्मर्यमाणं—प्रत्यभिज्ञायमानं वैश्वानरस्य परमपुरुषत्वे अनुमानं—लिङ्गमित्यर्थः; इतिशब्दः प्रकारवचनः; इत्थंभूतं रूपं प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वेऽनुमानं स्यात्। श्रुतिस्मृतिषु हि परमपुरुषस्येत्थं रूपं प्रसिद्धम्। यथा आथर्वणे १ "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशश्श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" इति। अग्निरिह द्युलोकः, २ "असौ वै लोकोऽग्निः" इति श्रुतेः। स्मरन्ति च मुनयः ३ "द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे। दिशश्श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता" इति, ४ "यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः। सूर्यश्चक्षुर्दिशश्श्रोत्रं तस्मै लोकात्मने नमः" इति च। इह च द्युप्रभृतयो वैश्वानरस्य मूर्धाद्यवयवत्वेनोच्यन्ते; तथा हि—तैरौपमन्यवप्रभृतिभिर्महर्षिभिः ५ "आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि" इति पृष्टः केकयस्तेभ्यो वैश्वानरात्मानमुपदिदिक्षु-र्विशेषप्रश्नान्यथानुपपत्त्या वैश्वानरात्मन्येतैः किञ्चित् ज्ञातं किञ्चिदज्ञातमिति विज्ञाय ज्ञाताज्ञातांशबुभुत्सया तानेकैकं पप्रच्छ। तत्र "औपमन्यव कं त्वमात्मानमुपास्से" इति पृष्टे ६ "दिवमेव भगवो राजन्" इति तेन चोक्ते दिवि तस्य पूर्णवैश्वानरात्मबुद्धिं निवर्तयन्वैश्वानरस्य द्यौर्मूर्धेति चोपदिशंस्तस्या वैश्वानरांशभूताया दिवः सुतेजा इति गुणनामधेयं प्राचिख्यपत्। एवं सत्ययज्ञादिभिरादित्यवाय्वाकाशाप्पृथिवीनामेकैकेनैकैकमुपास्यमानतया कथितानां 'विश्व-

१ मु० २ १-४ २ तृ० ८-२-६ ३.
४ भारते-शान्तिपर्व-राजधर्म ४७-७७ ५ छा० ५-११-६
६ छा० ५-१२-१

रूपः, पृथग्वर्त्मा, बहुलो, रयिः, प्रतिष्ठा, इत्येकैकगुणनामधेयानि वैश्वानरात्मनश्चक्षुःप्राणसन्देहवस्तिपादावयवत्वं चोपदिष्टम्। सन्देहो मध्यकाय उच्यते। अत एवम्भूतद्युमूर्धत्वादिविशिष्टं परमपुरुषस्यैव रूपमिति वैश्वानरः परमपुरुष एव ॥ २६ ॥

पुनरप्यानिर्णयमेवाशंक्य परिहरति—

## शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेतिचेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते १।२।२७॥

यदुक्तं वैश्वानरः परमात्मेति निश्चीयत इति, तन्न, शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च जाठरस्याप्यग्नेरिह प्रतीयमानत्वात्। शब्दस्तावद्वाजिनां वैश्वानरविद्याप्रकरणे १ "स एषोऽग्निर्वैश्वानरः" इति वैश्वानरसमानाधिकरणतयाऽग्निरिति श्रूयते; अस्मिन्प्रकरणे च २ "हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः" इति वैश्वानरस्य हृदयादिस्थस्याग्नित्रयकल्पनं क्रियते। ३ "तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहा" इत्यादिना प्राणाहुत्याधारत्वं च वैश्वानरस्यावगम्यते। तथा वैश्वानरस्यास्मिन्पुरुषेऽन्तःप्रतिष्ठानं वाजसनेयिनस्समामनन्ति ४ "स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद" इति। अतोऽग्निशब्दसामानाधिकरण्यादग्नित्रेतापरिकल्पनात्प्राणाहुत्याधारभावादन्तःप्रतिष्ठानाच्च वैश्वानरस्य जाठरत्वमपि प्रतीयत इति नैकान्ततः परमात्मत्वमिति चेत्—

तन्न, तथा दृष्ट्युपदेशात्—पूर्वोक्तस्य त्रैलोक्यशरीरस्य परस्य ब्रह्मणो वैश्वानरस्य जाठराग्निशरीरतया तद्विशिष्टस्योपासनोपदेशात्। अग्निशब्दादिभिर्हि न केवलो जाठरः प्रतिपाद्यते; अपितु जाठराग्निविशिष्टः परमात्मा। कथमिदमवगम्यत इति चेत्—असम्भवात्—जाठ-

१ प्रश्न १-७, अर्थनिर्देशोऽयम् ॥ २ छा ५-१८-२
३ छा० ५-१९-१ ४

रस्य केवलस्य त्रैलोक्यशरीरत्वासम्भवात्। त्रैलोक्यशरीरतया प्रतिपन्नवैश्वानरसमानाधिकरणो जाठरविषयतया प्रतीयमानोऽग्निशब्दो जाठरशरीरतया तद्विशिष्टं परमात्मानमेवाभिदधातीत्यर्थः। यथोक्तं भगवता १ "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" इति जाठरानलशरीरो भूत्वेत्यर्थः। अतस्तद्विशिष्टस्योपासनमत्रोपदिश्यते। किञ्च पुरुषमपि चैनमधीयते वाजसनेयिनः २ "स एषोऽग्निर्वैश्वानरो यत्पुरुषः" इति; नहि जाठरस्य केवलस्य पुरुषत्वम्, परमात्मन एव हि निरुपाधिकं पुरुषत्वम्, यथा ३ "सहस्रशीर्षा पुरुषः" ३ "पुरुष एवेदं सर्वम्" इत्यादौ॥२७॥

## अत एव न देवता भूतञ्च ।१।२।२८॥

उक्तेभ्य एव हेतुभ्यो देवतायाश्च तृतीयस्य महाभूतस्यापि न वैश्वानरत्वप्रसङ्गः॥ २८॥

## साक्षादप्यविरोधं जैमिनिः ।१।२।२९॥

वैश्वानरसमानाधिकरणस्याग्निशब्दस्य जाठराग्निशरीरतया तद्विशिष्टस्य परमात्मनो वाचकत्वम्, तथैव परमात्मन उपास्यत्वं चोक्तम्। जैमिनिस्त्वाचार्यो वैश्वानरशब्दवदग्निशब्दस्यापि परमात्मन एव साक्षात् अव्यवधानेन वाचकत्वे न कश्चिद्विरोध इति मन्यते॥

एतदुक्तं—भवति—यथा वैश्वानरशब्दस्साधारणोऽपि परमात्मासाधारणधर्मविशेषितो विश्वेषां नराणां नेतृत्वादिना गुणेन परमात्मानमेवाभिदधातीति निश्चीयते; एवमग्निशब्दोऽप्यग्रनयनादिना येनैव गुणेन योगाज्ज्वलने वर्तते, तस्यैव गुणस्य निरुपाधिकस्य काष्ठागतस्य परमात्मनि सम्भवादस्मिन्प्रकरणे परमात्मासाधारणधर्मविशेषितः परमात्मानमेवाभिधत्त इति॥२९॥

३ "यस्त्वेतमेवं प्रादेशमात्रमभिविमानम्" इत्यपरिच्छिन्नस्य परस्य ब्रह्मणो द्युप्रभृतिपृथिव्यन्तप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वं कथमुपपद्यते—तत्राह—

---

१ गी० १२-१४ २. ३ पुरुषम्
३ छा० ५-१८-१

भवति–नहि देवदत्तादिशब्दवदिन्द्रादिशब्दा वैदिका व्यक्तिविशेषमात्रे सङ्केतपूर्वकाः प्रवृत्ताः; अपि तु स्वभावत एव गवादिशब्दवदाकृति-विशेषवाचित्वेन। ततश्चैकस्यामिन्द्रव्यक्तौ विनष्टायामन एव वैदिकादिन्द्रशब्दान्मनसि विपरिवर्तमानादवगततद्वाच्यभूतेन्द्राद्यर्थाकारो धाता तदाकारमेवापरमिन्द्रं सृजति; यथा कुलालो घटशब्दान्मनसि विपरिवर्तमानात्तदाकारमेव घटम्–इति। कथमिदमवगम्यते ? प्रत्यक्षानुमानाभ्यां—श्रुतिस्मृतिभ्यामित्यर्थः। श्रुतिस्तावत् १"वेदेन रूपे व्याकरोत्सतासती प्रजापतिः" इति; तथा २"स भूरिति व्याहरत् स भूमिमसृजत स भुव इति व्याहरत् सोऽन्तरिक्षमसृजत" इत्यादि। वाचकशब्दपूर्वकं तत्तदर्थसंस्थानं स्मरन् तत्तत्संस्थानविशिष्टं तंतमर्थं सृष्टवानित्यर्थः। स्मृतिरपि ३"अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा। आदौ वेदमयी दिव्या यतस्सर्वाः प्रसूतयः" इति;४"सर्वेषां तु स नामानि कर्माणिच पृथक्पृथक्। वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे" इति। संस्थाः संस्थानानि रूपाणीति यावत्; तथा ५"नामरूपंच भूतानां कृत्यानांच प्रपञ्चनम्। वेदशब्देभ्य एवादौ देवादीनां चकार सः" इति। अतो देवादीनां विग्रहवत्त्वेऽपि वैदिकशब्दानामानर्थक्यं, वेदस्यादिमत्त्वंच न प्रसज्यते ॥ २७ ॥

## अत एव च नित्यत्वम्। १। ३। २८ ॥

यत एवेन्द्रवसिष्ठादिशब्दानां देवर्षिवाचिनां तत्तदाकारवाचित्वं, तत्तच्छब्देन तत्तदर्थस्मृतिपूर्विकाच तत्तदर्थसृष्टिः; तत एव ३"मन्त्रकृतो वृणीते" ४"नम ऋषिभ्यो मन्त्रकृद्भ्यः" ५"अग्रं सो अग्निरिति विश्वामित्रस्य सूक्तं भवति" इत्यादिभिर्वसिष्ठादीनां मन्त्रकृत्त्वकाण्डकृत्त्वऋषित्वादौ प्रतीयमानेऽपि वेदस्य नित्यत्वमुपपद्यते। एभिरेव ३"मन्त्रकृतो वृणीते" इत्यादिभिर्वेदशब्दैस्तत्तत्काण्ड-

---

१. अष्ट. २. प्रश्न. ६. अनु. २. पं. ७॥ २. अष्ट. २. प्रश्न. २. अनु. ४. पं. २२॥
३. मनु. अ. १. श्लो. २१ ॥ ४.
५. वि. पु. अं. १. अ. ५. श्लो. ६२॥ ६.
७ आरण. प्रश्न. ७. अनु. १. पं. १ ॥ ८. यजु. का. ५. प्र. २ अनु. ३. पं. ३॥

सूक्तमन्त्रकृतामृषीणामाकृतिशक्त्यादिकं परामृश्य तत्तदाकारान् तत्तच्छक्तियुक्तांश्च सृष्ट्वा प्रजापतिस्तानेव तत्तन्मन्त्रादिकरणे नियुङ्क्ते। तेऽपि प्रजापतिना आहितशक्तयस्तत्तदनुगुणं तपस्तप्त्वा नित्यसिद्धान्पूर्वपूर्ववसिष्ठादिदृष्टान् तानेव मन्त्रादीननधीत्यैव स्वरतो वर्णतश्चास्खलितान्पश्यन्ति। अतश्च वेदानां नित्यत्वमेषां च मन्त्रकृत्त्वमुपपद्यते ॥ २८ ॥

अथ स्यात्– नैमित्तिकप्रलयादिष्विन्द्राद्युत्पत्तौ वेदशब्देभ्यः पूर्वपूर्वेन्द्रादिस्मरणेन प्रजापतिना देवादिसृष्टिरुपपद्यतां नाम; प्राकृतप्रलये तु स्रष्टुः प्रजापतेर्भूताद्यहङ्कारपरिणामशब्दस्यच विनष्टत्वात्कथं प्रजापतेश्शब्दपूर्विका सृष्टिरुपपद्यते; कथन्तरां विनष्टस्य वेदस्य नित्यत्वम्; अतो वेदनित्यत्ववादिना देवादीनां विग्रहवत्त्वाभ्युपगमेऽपि लोकव्यवहारस्य प्रवाहानादिताऽऽश्रयणीयेति। अत्रोत्तरं पठति—

## समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ।१।३।२९॥

कृत्स्नोपसंहारे जगदुत्पत्त्यावृत्तावपि पूर्वोक्तात्समाननामरूपत्वादेव न कश्चिद्विरोधः। तथाहि—स भगवान्पुरुषोत्तमः प्रलयावसानसमये पूर्वसंस्थानं जगत्स्मरन् १ "बहु स्याम्" इति सङ्कल्प्य भोग्यभोक्तृजातं स्वस्मिन् शक्तिमात्रावशेषं प्रलीनं विभज्य महदादिब्रह्माण्डं हिरण्यगर्भपर्यन्तं यथापूर्वं सृष्ट्वा वेदांश्च पूर्वानुपूर्वीविशेषसंस्थितानाविष्कृत्य हिरण्यगर्भायोपदिश्य पूर्ववदेव देवाद्याकारजगत्सर्गे तं नियुज्य स्वयमपि तदन्तरात्मतयाऽवतस्थे। अतो यथोक्तं सर्वमुपपन्नम्। एतदेव च वेदस्यापौरुषेयत्वं नित्यत्वं च, यत्पूर्वपूर्वोच्चारणक्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव क्रमेणोच्चार्यत्वम्; तदस्मासु सर्वेश्वरेऽपि समानम्। इयांस्तु विशेषः—संस्कार-

१. छा. ६-२-३ ॥

नपेक्षमेव स्वयमेवानुसन्धत्ते पुरुषोत्तमः। कुत इदं यथोक्तमवगम्यत इति चेत्—तत्राह—दर्शनात् स्मृतेश्च । दर्शनं तावत् १"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति। स्मृतिरपि मानवी २"आसीदिदं तमोभूतम्" इत्यारभ्य "सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु वीर्यमपासृजत् ॥ तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः" इति । तथा पौराणिकी ३"तस्य सुप्तस्य नाभौ पद्मम जायत। तस्मिन्पद्मे महाभाग वेदवेदाङ्गपारगः ॥ ब्रह्मोत्पन्नस्स तेनोक्तः प्रजास्सृज महामते" ; तथा ४"परो नारायणो देवस्तस्माज्जातश्चतुर्मुखः" इति। तथा ५"आदिसर्गमहं वक्ष्ये" इत्यारभ्योच्यते—६"सृष्ट्वा नारं तोयमन्तस्स्थितोऽहं येन स्यान्मे नाम नारायणेति। कल्पेकल्पे तत्र शयामि भूयस्सुप्तस्य मे नाभिजं स्याद्यथाऽब्जम् ॥ एवंभूतस्य मे देवि नाभिपद्मे चतुर्मुखः । उत्पन्नस्स मया चोक्तः प्रजास्सृज महामते" इति ॥

अतो देवादीनामप्यर्थित्वसामर्थ्ययोगाद्ब्रह्मविद्यायामधिकारोऽस्तीति सिद्धम् ॥ २६ ॥

इति श्रीशारीरकमीमांसाभाष्ये देवताधिकरणम् ॥ ७ ॥

---

—*( श्रीशारीरकमीमांसाभाष्ये मध्वधिकरणम् )*—

—*:( पूर्वपक्ष सू० ):*—

## मध्वादिष्वसम्भवादनधिकारं जैमिनिः।१।३।३०॥

ब्रह्मविद्यायां देवादीनामप्यधिकारोऽस्तीत्युक्तम्; इदमिदानीं

---

१ श्वे. ६-१८ ॥ २ मनु. १-५-८, ९ ॥
३. ४.
५. ६.

चिन्त्यते येषूपासनेषु या देवता एवोपास्यास्तेषु तासामधिकारोऽस्ति न इति, किं प्राप्तम् ? नास्त्यधिकारस्तेषु मध्वादिष्विति जैमिनिर्मन्यते; कुतः असम्भवात्—नह्यादित्यवस्वादिभिरुपास्या आदित्यवस्वादयोऽन्ये सम्भवन्ति । नच वस्वादीनां सतां वस्वादित्वं प्राप्यं भवति, प्राप्तत्वात्; मधुविद्यायामृग्वेदादिप्रतिपाद्यकर्मनिष्पाद्यस्य रश्मिद्वारेण प्राप्तस्य रसस्याश्रयतया लब्धमधुव्यपदेशस्यादित्यस्यांशानां वस्वादिभिर्भुज्यमानानामुपास्यत्वं वस्वादित्वंच प्राप्यं श्रूयते १"असौ वा आदित्यो देवमधु" इत्युपक्रम्य २"तद्यत्प्रथममसृतं तद्वसव उपजीवन्ति" इत्युक्त्वा ३"स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति" इत्यादिना ॥ ३० ॥

## ज्योतिषि भावाच्च ।१।३।३१।

४"तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इति ज्योतिषिपरस्मिन्ब्रह्मणि उपासनं देवानां श्रूयते । देवमनुष्योभयसाधारणे परब्रह्मोपासने देवानामुपासकत्वकथनं देवानामितरोपासननिवृत्तिं द्योतयति । अत एषु वस्वादीनामनधिकारः ॥ ३१ ॥

—*( सिद्धान्त सू० )*—

इति प्राप्तेऽभिधीयते—

## भावं तु बादरायणोऽस्ति हि ।१।३।३२॥

आदित्यवस्वादीनामपि तेष्वधिकारभावं भगवान्बादरायणो मन्यते । अस्ति ह्यादित्यवस्वादीनामपि स्वावस्थब्रह्मोपासनेन वस्वादि-

---

१. छा. ३-१-१ ॥ २. छा. ३-६-१ ॥
३. छा. ३-६ ३ ॥ ४. बृ. ६-४-१४ ॥

त्वप्राप्तिपूर्वकब्रह्मप्रेप्सासम्भवः । इदानी वस्वादीनामपि सतां कल्पान्तरेऽपि वस्वादित्वप्राप्तिश्चापेक्षिता भवति । अत्र हि कार्यकारणोभयावस्थब्रह्मोपासनं विधीयते १"असौ वा आदित्यो देवमधु" इत्यारभ्य २"अथ तत ऊर्ध्वं उदेत्य" इत्यतः प्रागादित्यवस्वादिकार्यविशेषावस्थं ब्रह्मोपास्यमुपदिश्यते; २"अथ तत ऊर्ध्वं उदेत्य" इत्यादिना आदित्यान्तरात्मतयाऽवस्थितं कारणावस्थमेव ब्रह्मोपास्यमुपदिश्यते। तदेवं कार्यकारणोभयावस्थं ब्रह्मोपासीनः कल्पान्तरे वस्वादित्वं प्राप्य तदन्ते कारणं परं ब्रह्मैवाप्नोति । ३"न ह वा अस्मा उदेति न निम्रोचति सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद" इति कृत्स्नाया मधुविद्याया ब्रह्मोपनिषत्त्वश्रवणाद्ब्रह्मप्राप्तिपर्यन्तवस्वादित्वफलस्य श्रवणाच्च वस्वादिभोग्यभूतादित्यांशस्य विधीयमानमुपासनं तदवस्थस्यैव ब्रह्मण इत्यवगम्यते । अत एवंविधमुपासनमादित्यवस्वादीनामपि सम्भवति । एवञ्च ब्रह्मण एवोपास्यत्वात् ४"तं देवा ज्योतिषां ज्योतिः" इत्यप्युपपद्यते । तदाह वृत्तिकारः ५"अस्ति हि मध्वादिषु सम्भवो ब्रह्मण एव सर्वत्र निचाय्यत्वात्" इति ॥

इति श्रीशारीरकमीमांसाभाष्ये मध्वधिकरणम् ॥ ८ ॥

---

—*( श्रीशारीरकमीमांसाभाष्ये अपशूद्राधिकरणम् )*—

## शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि । १ । ३ । ३३ ॥

ब्रह्मविद्यायां शूद्रस्याप्यधिकारोऽस्ति नवेति विचार्यते; किं

---

१. छा. ३-१-१ ॥ २. छा. ३-११-१ ॥
३. छा. ३-११-३ ॥ ४. बृ. ६-४-१६ ॥
५. बोधायनवृत्तिः ॥

युक्तम् ? अस्तीति। कुतः ? अर्थित्वसामर्थ्यप्रयुक्तत्वादधिकारस्य, शूद्रस्यापि तत्सम्भवात् । यद्यप्यग्निविद्यासाध्येषु कर्मस्वनग्निविद्यत्वाच्छूद्रस्यानधिकारः; तथापि मनावृत्तिमात्रत्वाद्ब्रह्मोपासनस्य तत्राधिकारोऽस्त्येव, शास्त्रीयक्रियापेक्षत्वेऽप्युपासनस्य तत्तद्वर्णाश्रमोचितक्रियाया एवापेक्षितत्वाच्छूद्रस्यापि स्ववर्णोचितपूर्ववर्णशुश्रूषैव क्रिया भविष्यति। १ "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः इत्यप्यग्निविद्यासाध्ययज्ञादिकर्मानधिकार एव न्यायसिद्धोऽनूद्यते। नन्वनधीतवेदस्याश्रुतवेदान्तस्य ब्रह्मस्वरूपतदुपासनप्रकारानभिज्ञस्य कथं ब्रह्मोपासनं सम्भवति ? उच्यते—अनधीतवेदस्याश्रुतवेदान्तवाक्यस्यापीतिहासपुराणश्रवणेनापि ब्रह्मस्वरूपतदुपासनज्ञानं सम्भवति। अस्तिच शूद्रस्यापीतिहासपुराणश्रवणानुज्ञा २ "श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः" इत्यादौ। दृश्यन्तेचेतिहासपुराणेषु विदुरादयो ब्रह्मनिष्ठाः। तथोपनिषत्स्वपि संवर्गविद्यायां शूद्रस्यापि ब्रह्मविद्याधिकारः प्रतीयते—शुश्रूषुं हि जानश्रुतिमाचार्यो रैक्वश्शूद्रेत्यामन्त्र्य तस्मै ब्रह्मविद्यामुपदिशति—३ "आजहारेमाश्शूद्रानेनैव मुखेनालापयिष्यथाः" इत्यादिना। अतश्शूद्रस्याप्यधिकारस्सम्भवति ॥

## सिद्धान्त।

इति प्राप्त उच्यते—न शूद्रस्याधिकारस्सम्भवति, सामर्थ्याभावात्; नहि ब्रह्मस्वरूपतदुपासनप्रकारमजानतस्तदङ्गभूतवेदानुवचनयज्ञादिष्वनधिकृतस्योपासनोपसंहारसामर्थ्यसम्भवः; असमर्थस्य चार्थित्वसद्भावे ऽप्यधिकारो न सम्भवति; असामर्थ्यं च वेदाध्ययनाभावात्; यथैव हि त्रैवर्णिकविषयाध्ययनविधिसिद्ध-

१. यजु. का. ७-१-१-१ ॥ २. भारते. शान्ति. मोच ॥
३. छा. ४-२-५ ॥

स्वाध्यायसम्पाद्यज्ञानलाभेन कर्मविधयो ज्ञानतदुपायादीनपरान् स्वीकुर्वन्ति; तथा ब्रह्मोपासनविधयोऽपि। अतोऽध्ययनविधिसिद्ध-स्वाध्यायाधिगतज्ञानस्यैव ब्रह्मोपासनोपायत्वाच्छूद्रस्य ब्रह्मोपासन-सामर्थ्यासम्भवः। इतिहासपुराणे अपि वेदोपबृंहणं कुर्वती पत्रो-पायभावमनुभवतः; न स्वातन्त्र्येण; शूद्रस्येतिहासपुराणश्रवणानुज्ञानं पापक्षयादिफलार्थम्; नोपासनार्थम्। विदुरादयस्तु भवान्तराधि-गतज्ञानाप्रमोषात् ज्ञानवन्तः प्रारब्धकर्मवशाच्चेदृशजन्मयोगिन इति तेषां ब्रह्मनिष्ठत्वम्।

यच्च—संवर्गविद्यायां शुश्रूषोः शूद्रेति सम्बोधनं शूद्रस्याधि-कारं सूचयति—इति; तत्रेत्याह—शुगस्य तदनादरश्रवणात्तदाद्रव-णात्सूच्यते हि—शुश्रूषोर्जानश्रुतेः पौत्रायणस्य ब्रह्मज्ञानवैकल्येन हंसो-क्तानादरवाक्यश्रवणात्तदैव ब्रह्मविदो रैक्वस्य सकाशं प्रत्याद्रवणा-च्छुगस्य सञ्जातेति हि सूच्यते; अतस्स शूद्रेत्यामन्त्र्यते, न चतु-र्थवर्णत्वेन। शोचतीति हि शूद्रः; १ "शुचेर्दश्च" इति रप्रत्यये धातोश्च दीर्घे चकारस्य च दकारे शूद्र इति भवति। अतश्शोचितृ-त्वमेवास्य शूद्रशब्दप्रयोगेन सूच्यते; न जातियोगः। जानश्रुतिः किल पौत्रायणो बहुद्रव्यप्रदो बह्वन्नप्रदश्च बभूव। तस्य धार्मिकाग्रेसरस्य धर्मेण प्रीतयोः कयोश्चिन्महात्मनोरस्य ब्रह्मजिज्ञासामुत्पिपादयिषतोः हंसरूपेण निशायामस्याविदूरे गच्छतोरन्यतर इतरमुवाच—२ "भो भोऽयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योति-राततं तन्मा प्रसाङ्क्षीस्तत्त्वा माप्रधाक्षीत्" इति। एवं जानश्रुति-प्रशंसारूपं वाक्यमुपश्रुत्य परो हंसः प्रत्युवाच—३ "कम्वर एनमेत-त्सन्तंसयुग्वानमिव रैक्वमात्थ" इति। कं सन्तमेनं जानश्रुतिं

१. उणादिषु ॥
२. छा. ४-१-२ ॥
३. छा. ४-१-३ ॥

सयुग्वानं रैक्वं ब्रह्मज्ञमिव गुणश्रेष्ठमेतदात्थ; स ब्रह्मज्ञो रैक्व एव लोके गुणवत्तरः; महता धर्मेण संयुक्तस्याप्यस्य जानश्रुतेरब्रह्मज्ञस्य को गुणः, यद्गुणजनितं तेजो रैक्वतेज इव मां दहेदित्यर्थः। एवमुक्तेन परेण कोऽसौ रैक्व इति पृष्टः लोके यत्किंचित्साध्वनुष्ठितं कर्म, यच्च सर्वचेतनगतं विज्ञानम्, तदुभयं यदीयज्ञानकर्मान्तर्भूतम्, स रैक्व इत्याह। तदेतद्धंसवाक्यं ब्रह्मज्ञानविधुरतया आत्मनिन्दागर्भं तद्वत्तया च रैक्वप्रशंसारूपं जानश्रुतिरुपश्रुत्य तत्क्षणादेव क्षत्तारं रैक्वान्वेषणाय प्रेष्य तस्मिन्विदित्वा आगते स्वयमपि रैक्व[1]मुपसद्य गवां षट्छतं निष्कमश्वतरी रथं च रैक्वायोपहृत्य रैक्वं प्रार्थयामास [2]"अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से" इति त्वदुपास्यां परां देवतां ममानुशाधीत्यर्थः। स च रैक्वस्स्वयोगमहिमविदितलोकत्रयो जानश्रुतेर्ब्रह्मज्ञानविधुरतानिमित्तानादरगर्भहंसवाक्यश्रवणेन शोकाविष्टतां तदनन्तरमेव ब्रह्मजिज्ञासयोद्योगं च विदित्वाऽस्य ब्रह्मविद्यायोग्यतामभिज्ञाय चिरकालसेवां विना द्रव्यप्रदानेन शुश्रूषमाणस्यास्य याचच्छक्तिप्रदानेन ब्रह्मविद्या प्रतिष्ठिता भवतीति मत्वा तमनुगृह्णन् तस्य शोकाविष्टतामुपदेशयोग्यताख्यापिकां शूद्रशब्देनामन्त्रणेन ज्ञापयन्निदमाह—[3]"अहहारे त्वा शूद्र तवैव सह गोभिरस्तु" इति। सह गोभिरयं रथस्तवैवास्तु; नैतावता मह्यं दत्तेन ब्रह्मजिज्ञासया शोकाविष्टस्य तव ब्रह्मविद्या प्रतिष्ठिता भवतीत्यर्थः। स च जानश्रुतिर्भूयोऽपि स्वशक्त्यनुगुणमेव गवादिकं धनं कन्यां च प्रदायोपससाद स रैक्वः पुनरपि तस्य योग्यतामेव ख्यापयन् शूद्रशब्देनामन्त्र्याह—[4]"आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथाः" इति। इमानि धनानि शक्त्यनुगुणान्याजहर्थ;

---

[1] मासाद्य. पा ॥ [2] छा. ४-२-२ ॥
[3] छा. ४-२-३ ॥ [4] छा. ४-२-५ ॥

अनेनैव द्वारेण चिरसेवया विनाऽपि मां त्वदभिलषितं ब्रह्मोपदेशरूपवाक्यमालापयिष्यसीत्युक्त्वा तस्मा उपदिदेश । अतश्शूद्रशब्देन विद्योपदेशयोग्यताख्यापनार्थं शोक एवास्य १ सूचितः; न चतुर्थवर्णत्वम् ॥ ३३ ॥

## क्षत्रियत्वगतेश्च ।१।३।३४॥

२"बहुदायी" इति दानपतित्वेन "२बहुपाक्यः" इत्यादिना २"सर्वत एवमेतदन्नमत्स्यन्ति" इत्यन्तेन बहुतरपकान्नप्रदायित्वप्रतीतेः ३"सहसञ्जिहान एव क्षत्तारमुवाच" इति क्षत्तृप्रेषणाद्बहुग्रामप्रदानावगतजनपदाधिपत्याच्चास्य जानश्रुतेः क्षत्रियत्वप्रतीतेश्च न चतुर्थवर्णत्वम् ॥ ३४ ॥

तदेवमुपक्रमगताख्यायिकायां क्षत्रियत्वप्रतीतिरुक्ता; उपसंहारगताख्यायिकायामपि क्षत्रियत्वमस्य प्रतीयत इत्याह--

## उत्तरत्र चैत्ररथेन लिङ्गात् ।१।३।३५॥

अस्य जानश्रुतेरुपदिश्यमानायामस्यामेव संवर्गविद्यायामुत्तरत्र कीर्त्यमानेनाभिप्रतारिनाम्ना चैत्ररथेन क्षत्रियेणास्य क्षत्रियत्वं गम्यते। कथम्? ४"अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे" इत्यादिना ५"ब्रह्मचारिन्नेदमुपास्महे" इत्यन्तेन कापेयाभिप्रतारिणोर्भिक्षमाणस्य ब्रह्मचारिणश्च संवर्गविद्यासम्बन्धित्वं प्रतीयते । तेष्वभिप्रतारी क्षत्रियः, इतरौ ब्राह्मणौ; अतोऽस्यां विद्यायां ब्राह्मणस्य तदितरेषु च क्षत्रियस्यैवान्वयो दृश्यते; न शूद्रस्य । अतोऽस्यां विद्यायामन्वितादेकाद्ब्राह्मणाद-

१ सूचितो भवति. पा ॥ २ छा. ४-१-१ ॥
३ छा. ४-१-५ ॥ ४ छा. ४-३-५ ॥
५ छा. ४-३-७ ॥

न्यस्य जानश्रुतेरपि क्षत्रियत्वमेव युक्तम् ; न चतुर्थवर्णत्वम् । नन्व-स्मिन्प्रकरणेऽभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च न श्रुतम् ; तत्कथ-मस्याभिप्रतारिणश्चैत्ररथत्वम् ? कथं वा क्षत्रियत्वम् ? तत्राह— लिङ्गात्—इति । १"अथह शौनकं च कापेयमभिप्रतारिणं च काक्षसे-निम्" इत्यभिप्रतारिणः कापेयसाहचर्याल्लिङ्गादस्याभिप्रतारिणः कापे-यसम्बन्धः प्रतीयते; अन्यत्र च २"एतेन वै चैत्ररथं कापेया अयाज-यन्" इति कापेयसम्बन्धिनश्चैत्ररथत्वं श्रूयते; तथा चैत्ररथस्य क्षत्रि-यत्वं ३"तस्माच्चैत्ररथो नामैकः क्षत्रपतिरजायत" इति; अतोऽभिप्र-तारिणश्चैत्ररथत्वं क्षत्रियत्वं च गम्यते ॥ ३५ ॥

तदेवं न्यायविरोधिनि शूद्रस्याधिकारे लिङ्गं नोपलभ्यत इत्युक्तम् , इदानीं न्यायसिद्धश्शूद्रस्यानधिकारश्श्रुतिस्मृतिभिरनुगृ-ह्यत इत्याह—

## संस्कारपरामर्शात्तदभावाभिलापाच्च । १ । ३ । ३६ ॥

ब्रह्मविद्योपदेशेषूपनयनसंस्कारः परामृश्यते—४ "उप त्वा नेष्ये" ५ "तं होपनिन्ये" इत्यादिषु । शूद्रस्य चोपनयनादिसंस्कारा-भावोऽभिलप्यते—६ "न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति" ७ "चतुर्थो वर्ण एकजातिर्न च संस्कारमर्हति" इत्यादिषु ॥३६॥

## तदभावनिर्धारणे च प्रवृत्तेः । १ । ३ । ३७ ॥

१ "नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर" इति शुश्रूषोर्जाबालस्य शूद्रत्वाभावनिर्धारणे सत्येव विद्योपदेशप्रवृत्तेश्च न शूद्रस्याधिकारः ॥ ३७ ॥

---

१ छा. ४-२-२
२ ताण्ड्य. २०-१२-५ ॥
३. शतपथ. ११-५-३-१३ ॥
४. छा. ४-४-५ ॥
५. आपस्त. श्रौत ॥
६. मनु. १०-१२६ ॥
७. गौत. १०-अ. ४-सू ॥

## श्रवणाध्ययनार्थप्रतिषेधात् । १ । ३ । ३८ ॥

शूद्रस्य वेदश्रवणतदध्ययनतदर्थानुष्ठानानि प्रतिषिध्यन्ते "पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम्" "तस्माच्छूद्रो बहुपशुरयज्ञीयः" इति। बहुपशुः पशुसदृश इत्यर्थः। अनुपशृण्वतोऽध्ययनतदर्थज्ञानतदर्थानुष्ठानानि न सम्भवन्ति; अतस्तान्यपि प्रतिषिद्धान्येव ॥ ३८ ॥

## स्मृतेश्च । १ । ३ । ३९ ॥

स्मर्यते च श्रवणादिनिषेधः १ "अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः" इति, २ "न चास्योपदिशेद्धर्मं नचास्य व्रतमादिशेत्" इति च; अतश्शूद्रस्यानधिकार इति सिद्धम् ॥ ३९ ॥

ये तु निर्विशेषचिन्मात्रं ब्रह्मैव परमार्थः; अन्यत्सर्वं मिथ्याभूतम्; बन्धश्चापारमार्थिकः; स च वाक्यजन्यवस्तुयाथात्म्यज्ञानमात्रनिवर्त्यः; तन्निवृत्तिरेव मोक्षः—इति वदन्ति; तैर्ब्रह्मज्ञाने शूद्रादेरनधिकारो वक्तुं न शक्यते; अनुपनीतस्य अनधीतवेदस्याश्रुतवेदान्तवाक्यस्यापि यस्मात्कस्मादपि निर्विशेषचिन्मात्रं ब्रह्मैव परमार्थोऽन्यत्सर्वं तस्मिन्परिकल्पितं मिथ्याभूतमिति वाक्याद्वस्तुयाथात्म्यज्ञानोत्पत्तेः, तावतैव बन्धनिवृत्तेश्च। न च तत्त्वमस्यादिवाक्येनैव ज्ञानोत्पत्तिः कार्या, न वाक्यान्तरेणेति नियन्तुं शक्यम्; ज्ञानस्यापुरुषतन्त्रत्वात्, सत्यां सामग्र्यामनिच्छतोऽपि ज्ञानोत्पत्तेः। न च वेदान्तवाक्येन वस्तुयाथात्म्यज्ञाने सति बन्धनिवृत्तिर्भवतीति शक्यं वक्तुम्, येनकेनापि वस्तुयाथात्म्यज्ञाने सति भ्रान्तिनिवृत्तेः;

---

१. गौत. ध. २-१२-२ ॥ २. मनु. ४-८० ॥

पौरुषेयादपि निर्विशेषचिन्मात्रं ब्रह्म परमार्थोऽन्यत्सर्वं मिथ्याभूतमिति वाक्यात् ज्ञानोत्पत्तेस्तावतैव भ्रमनिवृत्तेश्च। यथा पौरुषेयादप्याप्तवाक्याच्छुक्तिकारजतादिभ्रान्तिर्ब्राह्मणस्य शूद्रादेरपि निवर्तते, तद्वदेव शूद्रस्यापि वेदवित्सम्प्रदायागतवाक्याद्वस्तुयाथात्म्यज्ञानेन जगद्भ्रमनिवृत्तिरपि भविष्यति; "नचास्योपदिशेद्धर्मम्" इत्यादिना वेदविदश्शूद्रादिभ्यो न वदन्तीति च न शक्यं वक्तुम्, तत्त्वमस्यादिवाक्यावगतब्रह्मात्मभावानां वेदशिरसि वर्तमानतया दग्धाखिलाधिकारत्वेन निषेधशास्त्रकिङ्करत्वाभावात्, अतिक्रान्तनिषेधैर्वा कैश्चिदुक्ताद्वाक्याच्छूद्रादेः ज्ञानमुत्पद्यत एव। न च वाच्यं-- शुक्तिकादौ रजतादिभ्रमनिवृत्तिवत्पौरुषेयवाक्यजन्यतत्त्वज्ञानसमनन्तरं शूद्रस्य जगद्भ्रमो न निवर्तत इति; तत्त्वमस्यादिवाक्य श्रवणसमनन्तरं ब्राह्मणस्यापि जगद्भ्रमानिवृत्तेः। निदिध्यासनेन द्वैतवासनायां निरस्तायामेव तत्त्वमस्यादिवाक्यं निवर्तकज्ञानमुत्पादयतीति-चेत्-- पौरुषेयमपि वाक्यं शूद्रादेस्तथैवेति न कश्चिद्विशेषः। निदिध्यासनं हि नाम ब्रह्मात्मत्वभावाभिधायि वाक्यं यदर्थप्रतिपादनयोग्यम्, तदर्थभावना; सैव विपरीतवासनां निवर्तयतीति दृष्टार्थत्वं निदिध्यासनविधेरपि, वेदानुवचनादीन्यपि विविदिषोत्पत्तावेवोपयुज्यन्ते इति शूद्रस्यापि विविदिषायां जातायां पौरुषेयवाक्यान्निदिध्यासनादिभिर्विपरीतवासनायां निरस्तायां ज्ञानमुत्पत्स्यते; तेनैवापारमार्थिको बन्धो निवर्तिष्यते; अथवा तर्कानुगृहीतात्प्रत्यक्षादनुमानाच्च निर्विशेषस्वप्रकाशचिन्मात्रप्रत्यग्वस्तुन्यज्ञानसाक्षित्वं, तत्कृतविविधविचित्रज्ञातृज्ञेयविकल्परूपं कृत्स्नं जगच्चाध्यस्तमिति निश्चित्यैवम्भूतपरिशुद्धप्रत्यग्वस्तुन्यनवरतभावनया विपरीतवासनां निरस्य तदेव प्रत्यग्वस्तु साक्षात्कृत्य शूद्रादयोऽपि विमोक्ष्यन्त इति मिथ्या-

भूतविचित्रैश्वर्यविचित्रसृष्ट्याद्यलौकिकानन्तविशेषावलम्बिना वेदान्तवाक्येन न किञ्चित्प्रयोजनमिह दृश्यत इति शूद्रादीनामेव ब्रह्मविद्यायामधिकारस्सुशोभनः। अनेनैव न्यायेन ब्राह्मणादीनामपि ब्रह्मवेदनसिद्धेरुपनिषद्य तपस्विनी दत्तजलाञ्जलिस्स्यात्। नच वाच्यं नैसर्गिकलाकव्यवहारे भ्राम्यतोऽस्य केनचिदयं लौकिकव्यवहारो भ्रमः, परमार्थस्त्वेवमिति समर्पिते सत्येव प्रत्यक्षानुमानवृत्तबुभुत्सा जायत इति तत्समर्पिका श्रुतिरप्यास्थेयेति; यतो भवभयभीतानां साङ्ख्यादय एव प्रत्यक्षानुमानाभ्यां वस्तुनिरूपणं कुर्वन्तः प्रत्यक्षानुवृत्तबुभुत्सां जनयन्ति; बुभुत्सायां च जातायां प्रत्यक्षानुमानभ्यामेव विविक्तस्वभावाभ्यां नित्यशुद्धस्वप्रकाशाद्वितीयकूटस्थचैतन्यमेव सत्, अन्यत्सर्वं तस्मिन्नध्यस्तमिति सुविवेचम्। एवम्भूते स्वप्रकाशे वस्तुनि श्रुतिसमधिगम्यं विशेषान्तरं च नाभ्युपगम्यते; अध्यस्तातद्रूपनिवर्तिनी हि श्रुतिरपि त्वन्मते। न च सत आत्मन आनन्दरूपताज्ञानायोपनिषदास्थेया, चिद्रूपताया एव सकलेतरातद्रूपव्यावृत्ताया आनन्दरूपत्वात्। यस्य तु मोक्षसाधनतया वेदान्तवाक्यैर्विहितं ज्ञानमुपासनरूपम्, तच्च परब्रह्मभूतपरमपुरुषप्रीणनम्, तच्च शास्त्रैकसमधिगम्यम्, उपासनशास्त्रं चोपनयनादिसंस्कृताधीतस्वाध्यायजनितं ज्ञानं विवेकविमोकादिसाधनानुगृहीतमेव स्वोपायतया स्वीकरोति, एवंरूपोपासनप्रीतः पुरुषोत्तम उपासकं स्वाभाविकात्मयाथात्म्यज्ञानदानेन कर्मजनिताज्ञानं नाशयन्बन्धान्मोचयतीति पक्षः; तस्य यथोक्तया नीत्या शूद्रादेरनधिकार उपपद्यते॥

इति श्रीशारीकमीमांसाभाष्ये अपशूद्राधिकरणम्॥

—:( श्रीशारीरकमीमांसाभाष्ये प्रमिताधिकरणशेषः ):—

तदेवं प्रसक्तानुप्रसक्ताधिकारकथां परिसमाप्य प्रकृतस्याङ्गुष्ठप्रमितस्य भूतभव्येशितृत्वावगतपरब्रह्मभावोत्तम्भनं हेत्वन्तरमाह—

## कम्पनात् १ । ३ । ४०

१ "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति" २ " अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा " इत्यनयोर्वाक्ययोर्मध्ये ३ " यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम्। महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति। भयादस्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' इति कृत्स्नस्य जगतोऽग्निसूर्यादीनां चास्मिन्नङ्गुष्ठमात्रे पुरुषे प्राणशब्दनिर्दिष्टे स्थितानां सर्वेषां ततो निस्सृतानां तस्मात्सञ्जातमहाभयनिमित्तम् एजनं कम्पनं श्रूयते। तच्छासनानिवृत्तौ किं भविष्यतीति महतो भयाद्वज्रादिवोद्यतात्कृत्स्नं जगत्कम्पत इत्यर्थः। ३ "भयादस्याग्निस्तपति" इत्यनेनैकार्थ्यात् ३ "महद्भयं वज्रमुद्यतम्" इति पञ्चम्यर्थे प्रथमा। अयञ्च परस्य ब्रह्मणस्स्वभावः ४ " एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" ५ "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चमः" इति परस्य ब्रह्मणः पुरुषोत्तमस्यैवं विधैश्वर्यावगतेः।

इतश्चाङ्गुष्ठप्रमितः पुरुषोत्तमः—

## ज्योतिर्दर्शनात् १ । ३ । ४१ ॥

तयोरेवाङ्गुष्ठप्रमितविषययोर्वाक्ययोर्मध्ये परब्रह्मासाधारणं

१. कठ. २-४-१२ ॥ २. कठ. २-६-१७ ॥ ३. कठ. २ ६ ३,२ ॥
४. बृ. ५-८-९ ॥ ५. तै. आ. ८-१ ॥

सर्वतेजसां छादकं सर्वतेजसां कारणभूतमनुग्राहकं चाङ्गुष्ठप्रमितस्य ज्योतिर्दृश्यते—१ "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति " इति । अयमेव श्लोक आथर्वणे परं ब्रह्माधिकृत्य श्रूयते । परज्योतिष्ट्वं च सर्वत्र परस्य ब्रह्मणश्श्रूयते । यथा—२ "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" ३ "तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् " ४ "अथ यदतः परो दिवो ज्योतिर्दीप्यते " इत्यादिषु । अतोऽङ्गुष्ठप्रमितः परं ब्रह्म ॥ ४१ ॥

इति श्रीशारीरकमीमांभाष्ये प्रमिताधिकरणशेषः ॥६॥

---

—*( अर्थान्तरत्वादिव्यपदेशाधिकरणम् )*—

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् १ । ३ । ४२ ॥

छान्दोग्ये श्रूयते ५ "आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा" इति । तत्र संशयः—किमयमाकाशशब्दनिर्दिष्टो मुक्तात्मा, उत परमात्मा—इति । किं युक्तं ? मुक्तात्मेति । कुतः ? ६ "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि" इति मुक्तस्यानन्तरप्रकृतत्वात्, १"ते यदन्तरा" इति च नामरूपविनिर्मुक्तस्य तस्याभिधानात्, १"नामरूपयोर्निर्वहिता" इति च स एव पूर्वावस्थयोपलिलक्षयिषितः ; स एव हि देवादिरूपाणि नामानि च पूर्वमबिभः; तस्यैव नामरूपविनिर्मुक्ता साम्प्रतिकयवस्था १"तद्ब्रह्म तदमृतम्" इत्युच्यते । आकाशशब्दश्च तस्मिन्नप्यसङ्कुचितप्रकाशयोगादुपपद्यते । ननु दहरवाक्यशेषत्वादस्य स एव दहराका-

---

१. कठ. २-५-१५ ॥ २ छा. ८-१२-२ ॥ ३. बृ. ६-४-१६ ॥
४. छा. ३-१३-७ ॥ ५. छा. ८-१४-१ ॥ ६. छा. ८-१३-१

शोऽयमिति प्रतीयते । तस्य च परमात्मत्वं निर्णीतम् । मैवं, प्रजापतिवाक्यव्यवधानात् । प्रजापतिवाक्ये च प्रत्यगात्मनो मुक्त्यवस्थान्तं रूपमभिहितम्; अनन्तरं च १"विधूय पापम्" इति स एव मुक्तावस्थः प्रस्तुतः । अतोऽत्राकाशो मुक्तात्मा ॥

( सिद्धान्तः )

इति प्राप्त उच्यते—आकाशोऽर्थान्तरत्वादिव्यपदेशात्–इति । आकाशः परं ब्रह्म; कुतः ? अर्थान्तरत्वादिव्यपदेशात् । अर्थान्तरत्वव्यपदेशस्तावत् २"आकाशो ह वै नामरूपयोर्निर्वहिता" इति नामरूपयोर्निर्वोढृत्वं बद्धमुक्तोभयावस्थात्प्रत्यगात्मनोऽर्थान्तरत्वमाकाशस्योपपादयति । बद्धावस्थस्स्वयं कर्मवशान्नामरूपे भजमानो न नामरूपे निर्वोढुं शक्नुयात्; मुक्तावस्थस्य जगद्व्यापारासम्भवात् ३नितरां नामरूपनिर्वोढृत्वम्; ईश्वरस्य तु सकलजगन्निर्माणधुरन्धरस्य नामरूपयोर्निर्वोढृत्वं श्रुत्यैव प्रतिपन्नम् ४"अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" ५"यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" ६"सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते" इत्यादिषु । अतो निर्वाह्यनामरूपात्प्रत्यगात्मनो नामरूपयोर्निर्वोढाऽयमाकाशोऽर्थान्तरभूतः परमेव ब्रह्म । तदेवोपपादयति २"ते यदन्तरा" इति । यस्माद्यमाकाशो नामरूपे अन्तरा—ताभ्यामस्पृष्टोऽर्थान्तरभूतः, तस्मात्तयोर्निर्वोढा अपहतपाप्मत्वात्सत्यसङ्कल्पत्वाच्च निर्वहितेत्यर्थः । आदिशब्देन ब्रह्मत्वात्मत्वामृतत्वानि गृह्यन्ते । निरुपाधिकबृहत्त्वादयो हि परमात्मन एव सम्भवन्ति; तेनात्राकाशः परमेव ब्रह्म ।

१. छा. ८-१३-१ ॥ २. छा. ८-१४-१ ॥ ३. नतरां. पा. ॥
४. छा. ६-३-२ ॥ ५. मु. १-१-९ ६. तै. पु. ॥

यत्पुनरुक्तं १"धूत्वा शरीरम्" इति मुक्तोऽनन्तरप्रकृतः—इति; तत्र, १"ब्रह्मलोकमभिसम्भवामि" इति परस्यैव ब्रह्मणोऽनन्तरप्रकृतत्वात्। यद्यप्यभिसम्भवितुर्मुक्तस्याभिसम्भाव्यतया परं ब्रह्म निर्दिष्टम्, तथाप्यभिसम्भवितुर्मुक्तस्य नामरूपनिर्वोढृत्वाद्यसम्भवादभिसम्भाव्यं परमेव ब्रह्म तत्र प्रत्येतव्यम्। किञ्च आकाशशब्देन प्रकृतस्य दहराकाशस्यात्र प्रत्यभिज्ञानात्, प्रजापतिवाक्यस्याप्युपासकस्वरूपकथनार्थत्वादुपास्य एव दहराकाशः प्राप्यतयेहोपसंह्रियत इति युक्तम्। आकाशशब्दश्च प्रत्यगात्मनि न क्वचिद्दृष्टचरः। अतोऽत्राकाशः परं ब्रह्म॥

अथ स्यात्—प्रत्यगात्मनोऽर्थान्तरभूतमात्मान्तरमेव, नास्ति पेक्योपदेशात्, द्वैतप्रतिषेधाच्च; शुद्धावस्थ एव हि प्रत्यगात्मा परमात्मा परं ब्रह्म परमेश्वर इति च व्यपदिश्यते; अतः प्रकृतान्मुक्तात्मनोऽभिसम्भवितुर्नार्थान्तरमभिसम्भाव्यो ब्रह्मलोकः; अतो नामरूपयोर्निर्वहिता आकाशोऽपि स एव भवितुमर्हति—इति अत उत्तरं पठति—

## सुषुप्त्युत्क्रान्त्योर्भेदेन। १। ३। ३४॥

व्यपदेशादिति वर्तते, सुषुप्त्युत्क्रान्त्योः प्रत्यगात्मनोऽर्थान्तरत्वेन परमात्मनो व्यपदेशात् प्रत्यगात्मनोऽर्थान्तरभूतः परमात्माऽस्त्येव। तथाहि—वाजसनेयके २ "कतम ३ आत्मा योऽयं विज्ञानमयः प्राणेषु" इति प्रकृतस्य प्रत्यगात्मनस्सुषुप्त्यवस्थायामकिञ्चिज्ज्ञस्य सर्वज्ञेन परमात्मना परिष्वङ्ग आम्नायते—४"प्राज्ञेनाऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इति; तथोत्क्रान्तावपि ५ "प्राज्ञेनाऽत्मनाऽन्वारूढ उत्सर्जन्याति" इति। न च

१. छा. ८-१४-१॥ २. बृ. ६-३-७॥ ३. आत्मेति योऽयं पा॥
४. बृ. ६-३-२१॥ ५. बृ. ६-३-३५॥

स्वपत उत्क्रामतो वा किञ्चिज्ज्ञस्य तदानीमेव स्वेनैव सर्वज्ञेन सता परिष्वङ्गान्वारोहौ सम्भवतः न च क्षेत्रज्ञान्तरेण, तस्यापि सर्वज्ञत्वासम्भवात् ॥

इतश्च प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मेत्याह—

## पत्यादिशब्देभ्यः । १ । ३ । ४४ ॥

अयं परिष्वञ्जकः परमात्मा उत्तरत्र पत्यादिशब्दैर्व्यपदिश्यते-१ " सर्वस्याधिपतिस्सर्वस्य वशी सर्वस्येशानः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्। एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति...एतमेव विदित्वा मुनिर्भवति। एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" २ "स वा एष महानज आत्माऽन्नादो वसुदानः" ३ " अजरोऽमृतोऽभयो ब्रह्म" इति। एते च पतित्वजगद्विधरणत्वसर्वेश्वरत्वादयः प्रत्यगात्मनि मुक्तावस्थेऽपि न कथञ्चित्सम्भवन्ति। अतो मुक्तात्मनोऽर्थान्तरभूतो नामरूपयोर्निर्वहिताऽऽकाशः । ऐक्योपदेशस्तु सर्वस्य चिदचिदात्मकस्य ब्रह्मकार्यत्वेन तदात्मकत्वायत्त इति ४ " सर्वं खल्विदं ब्रह्म तज्जलान्" इत्यादिभिर्वाक्यैः प्रतिपाद्यत इति पूर्वमेव समर्थितम्। द्वैतप्रतिषेधश्च तत एवेत्यनवद्यम् ॥ ४३ ॥

इति श्रीशारीरकमीमांसाभाष्ये अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥

---

१. बृ. ६-४-२२ ॥ सर्वस्यवशीसर्वस्येशानस्सर्वस्याधिपतिः. पा॥

२. बृ. ६-४-२४॥ ३. बृ. ६-४-२५॥ अजरामरोमृतोभयो ब्रह्म इति

४. छा. ३-१४-१॥



श्रीमते रामानुजाय नमः

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

( प्रथमाध्ये-चतुर्थपादे-आनुमानिकाधिकरणम् ॥ १ ॥ )

---

## आनुमानिकमप्येकेषामितिचेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च । १ । ४ । १ ॥

उक्तं परमपुरुषार्थलक्षणमोक्षसाधनतया जिज्ञास्यं जगज्जन्मादिकारणं ब्रह्माचिद्वस्तुनः प्रधानादेश्चेतनाच्च बद्धमुक्तोभयावस्थाद्विलक्षणं निरस्तसमस्तहेयगन्धं सर्वज्ञं सर्वशक्ति सत्यसङ्कल्पं समस्तकल्याणगुणात्मकं सर्वान्तरात्मभूतं निरङ्कुशैश्वर्यमिति ! इदानीं कापिलतन्त्रसिद्धाब्रह्मात्मकप्रधानपुरुषादिप्रतिपादनमुखेन प्रधानकारणत्वप्रतिपादनच्छायानुसारीण्यपि कानिचिद्वाक्यानि कासुचिच्छाखासु सन्तीत्याशङ्क्य ब्रह्मैककारणत्वस्थेम्ने तन्निराक्रियते । कठवल्लीष्वाम्नायते १ " इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः " इति । तत्र सन्देहः— किं कापिलतन्त्रसिद्धमब्रह्मात्मकं प्रधानमिहाव्यक्तशब्देनोच्यते, उत

---

१. कठ. १-३-१०, ११ ॥

न—इति। किं युक्तम्? प्रधानमिति। कुतः? १"महतः परमव्यक्त-मव्यक्तात्पुरुषः परः" इति तन्त्रसिद्धतत्त्वप्रक्रियाप्रत्यभिज्ञानेन तस्यैव प्रतीतेः, १"पुरुषान्नपरं किञ्चित्सा काष्ठा सा परा गतिः" इति पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधाच्च। अतोऽव्यक्तं कारणमिति प्राप्तम्। तदिदमुक्तम्—आनुमानिकमप्येकेषामिति चेत्—इति। एकेषां शाखिनां शाखास्वानुमानिकं प्रधानमपि कारणमाम्नायत इति चेत्—

( सिद्धान्त )

अत्रोत्तरं—नेति। नाव्यक्तशब्देनाब्रह्मात्मकं प्रधानमिहाभिधीयते। कुतः? शरीररूपकविन्यस्तगृहीतेः—शरीराख्यरूपकविन्यस्तस्य अव्यक्तशब्देन गृहीतेः। आत्मशरीरबुद्धिमनइन्द्रियविषयेषु रथिरथादिभावेन रूपितेषु रथरूपणेन विन्यस्तस्य शरीरस्यात्राव्यक्तशब्देन ग्रहणादित्यर्थः। एतदुक्तं भवति—पूर्वत्र हि २"आत्मानं रथिनं विद्धि शरीरं रथमेवच। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेवच। इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्" इत्यादिना, ३"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्यन्तेन संसाराध्वनः पारं वैष्णवं पदं प्रेप्सन्तमुपासकं रथित्वेन तच्छरीरादीनिच रथरथाङ्गत्वेन रूपयित्वा, यस्यैते रथादयो वशे तिष्ठन्ति, स एवाध्वनः पारं वैष्णवं पदमाप्नोतीत्युक्त्वा, तेषु रथादिरूपितशरीरादिषु यानि येभ्यो वशीकार्यतायां प्रधानानि, तान्युच्यन्ते ४"इन्द्रियेभ्यः पराः" इत्यादिना। तत्र हयत्वेन रूपितेभ्य इन्द्रियेभ्यो गोचरत्वेन रूपिता विषयाः वशीकार्यत्वे पराः, वश्येन्द्रियस्यापि विषयसन्निधाविन्द्रि-

१. कठ. १-३-११॥  २. कठ. १-३-३॥
३. कठ. १-३-९॥  ४. कठ. १-३-१०॥

याणां दुर्निग्रहत्वात् । तेभ्योऽपि परं प्रग्रहरूपितं मनः, मनसि विषयप्रवणे विषयासन्निधानस्याप्यकिञ्चित्करत्वात् । तस्मादपि सारथित्वरूपिता बुद्धिः परा, अध्यवसायाभावे मनसोऽप्यकिञ्चित्करत्वात्। तस्या अपि रथित्वरूपित आत्मा कर्तृत्वेन प्राधान्यात्परः; सर्वस्यचास्यात्मेच्छायत्तत्वादात्मैव महानिति च विशेष्यते। तस्मादपि रथरूपितं शरीरं परम्, तदायत्तत्वाज्जीवात्मनस्सकलपुरुषार्थसाधनप्रवृत्तीनाम्। तस्मादपि परस्सर्वान्तरात्मभूतोऽन्तर्याम्यध्वनः पारभूतः परमपुरुषः, यथोक्तस्यात्मपर्यन्तस्य समस्तस्य तत्सङ्कल्पायत्तप्रवृत्तित्वात्। स खल्वन्तर्यामितयोपासनस्यापि निर्वर्तकः । १"परात्तु तच्छ्रुतेः" इति हि जीवात्मनः कर्तृत्वं परमपुरुषायत्तमिति वक्ष्यते। वशीकार्योपासननिर्वृत्त्युपायकाष्ठाभूतः परमप्राप्यश्च स एव। तदिदमुच्यते २ "पुरुषान्न परं किञ्चित्सा काष्ठा स' परा गतिः" इति। तथा चान्तर्यामिब्राह्मणे, ३"य आत्मनि तिष्ठन्" इत्यादिभिस्सर्वं साक्षात्कुर्वन्सर्वं नियमयतीत्युक्त्वा ४ "नान्योऽतोऽस्ति द्रष्टा" इति नियन्त्रन्तरं निषिध्यते । भगवद्गीतासुच ५"अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्। विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम्" इति । दैवमत्र पुरुषोत्तम एव ६"सर्वस्य चाहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनं च" इति वचनात् । तस्यच वशीकरणं तच्छरणागतिरेव। यथाह ७"ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया। तमेव शरणं गच्छ" इति। तदेवम् ८"आत्मानं रथिनं विद्धि" इत्यादिना रथ्यादिरूप-

---

१. शारी. २-३-४० ॥ २. कठ. १-३-११ ॥
३. बृ. ५-७-१२ ॥ मा. पा ॥ ४. बृ. ५-७-२३ ॥
५. गी. १८-१४ ६. गी १५-१५ ॥
७. गी. १८ ६१, ६२ ॥ ८. कठ १-३-३

कविन्यस्ता इन्द्रियादयः १"इन्द्रियेभ्यः परा ह्यर्थाः" इत्यत्र स्वशब्दैरेव प्रत्यभिज्ञायन्ते, न रथरूपितं शरीरमिति परिशेषात्तदव्यक्तशब्देनोच्यत इति निश्चीयते। अतः कापिलतन्त्रसिद्धस्य प्रधानस्य प्रसङ्ग एव नास्ति। नचात्र तत्तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञा १"इन्द्रियेभ्यः परा ह्यर्थाः" इतीन्द्रियेभ्योऽर्थानां शब्दादीनां परत्वकीर्तनात्। नहि शब्दादय इन्द्रियाणां कारणभूतास्तद्दर्शने। २"अर्थेभ्यश्च परं मनः" इत्यपि न तत्तन्त्रसङ्गतम्, अकारणत्वादेव; तथा १"बुद्धेरात्मा महान्परः" इत्यप्यसङ्गतम्, बुद्धिशब्देन महत्तत्त्वस्याभिधानाभ्युपगमात्। नहि महतो महान्परस्सम्भवति। महत आत्मशब्देन विशेषणं च न सङ्गच्छते। अतो रूपकविन्यस्तानामेव ग्रहणम्। दर्शयति च तदेव ३"एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" ४"यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेत् ज्ञान आत्मनि। ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि" इति। अजितबाह्याभ्यन्तरकरणैरस्य परमपुरुषस्य दुर्दर्शत्वमभिधाय हयादिरूपितानामिन्द्रियादीनां वशीकारप्रकारोऽयमुच्यते। ४"यच्छेद्वाङ्मनसी" वाचं मनसि नियच्छेत्—वाक्पूर्वकाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च मनसि नियच्छेदित्यर्थः। वाक्छन्दे द्वितीयायाः" ५"सुपां सुलुक्" इति लुक्। 'मनसी' इति सप्तम्याश्छान्दसो दीर्घः। ४"तद्यच्छेत् ज्ञान आत्मनि" तन्मनो बुद्धौ नियच्छेत्। ज्ञानशब्देनात्र पूर्वोक्ता बुद्धिरभिधीयते। ४"ज्ञान आत्मनि" इति व्यधिकरणे सप्तम्यौ। आत्मनि वर्तमाने ज्ञाने नियच्छेदित्यर्थः। ४"ज्ञानमात्मनि महति नियच्छेत्" बुद्धिं कर्तारि महत्यात्मनि नियच्छेत्-

---

१. कठ. १-३-१० ॥ २. कठ. १-३-१० ॥
३. कठ. १-३-१२ ॥ ४. कठ. १-३-१३ ॥
५. पाणिनि. ७-१-३९ ॥

च्छेत् । १"तद्यच्छेच्छान्त आत्मनि" तं कर्तारं परस्मिन्ब्रह्मणि सर्वान्तर्यामिणि नियच्छेत् । व्यत्ययेन तदिति नपुंसकलिङ्गता । एवम्भूतेन रथिना वैष्णवं पदं गन्तव्यमित्यर्थः ॥ १ ॥

अव्यक्तशब्देन कथं व्यक्तस्य शरीरस्याभिधानम् ? तत्राह—

## सूक्ष्मं तु तदर्हत्वात् । १ । ४ । २ ॥

भूतसूक्ष्ममव्याकृतं ह्यवस्थाविशेषमापन्नं शरीरं भवति; तदव्याकृतमिह शरीरावस्थमव्यक्तशब्देनोच्यते । तदर्हत्वात्—तस्याव्याकृतस्याविद्वस्तुन एव विकारापन्नस्य रथवत्पुरुषार्थसाधनप्रवृत्त्यर्हत्वात् ॥ २ ॥

यदि भूतसूक्ष्ममव्याकृतमभ्युपगम्यते; कापिलतन्त्रसिद्धोपादाने कः प्रद्वेषः तत्रापिहि भूतकारणमेवाव्यक्तमित्युच्यते; तत्राह—

## तदधीनत्वादर्थवत् । १ । ४ । ३ ॥

परमकारणभूतपरमपुरुषाधीनत्वात्प्रयोजनवद्भूतसूक्ष्मम् । एतदुक्तं भवति—न वयमव्यक्तं तत्परिणामविशेषांश्च स्वरूपेण नाभ्युपगच्छामः ; अपितु परमपुरुषशरीरतया तदात्मकत्वविरहेण । तदात्मकत्वेनैव हि प्रकृत्यादयस्स्वप्रयोजनं साधयन्ति; अन्यथा स्वरूपस्थितिप्रवृत्तिभेदास्तेषां न स्युः; तथाऽनभ्युपगमादेव तन्त्रसिद्धप्रक्रियानिरसनम्—इति । श्रुतिस्मृत्योर्हि जगदुत्पत्तिप्रलयवादेषु परमपुरुषमहिमवादेषु च प्रकृतिविकृतिपुरुषास्तदात्मकास्सङ्कीर्त्यन्ते; यथा २ "पृथिव्यप्सु लीयते" इत्यारभ्य "तन्मात्राणि भूतादौ लीयन्ते । भूतादिर्महति लीयते । महानव्यक्ते लीयते । अव्यक्तमक्षरे लीयते । अक्षरं तमसि लीयते । तमः परे देव एकीभवति" तथा

१. कठ. १-३-१३ ॥ २. सुबाल. २. खं ॥

१ "यस्य पृथिवी शरीरं यस्यापश्शरीरं यस्य तेजश्शरीरं यस्य वायुश्शरीरं यस्याकाशश्शरीरंयस्याहङ्कारश्शरीरं यस्य बुद्धिश्शरीरं यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युश्शरीरम् एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः", तथा २ "भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ एतद्योनीनि भूतानि सर्वाणीत्युपधारय। अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्ज। मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इति, ३ व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च" इति, ४ "प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि। परमात्मा च सर्वेषामाधारः परमेश्वरः" इति च ॥ ३ ॥

## ज्ञेयत्वावचनाच्च । १ । ४ । ४ ॥

यदि तन्त्रसिद्धमिहाव्यक्तमविवक्षिष्यत्, ज्ञेयत्वमवक्ष्यत; '५ व्यक्ताव्यक्तज्ञविज्ञानात् मोक्षं वदद्भिस्तान्त्रिकैस्तेषां सर्वेषां ज्ञेयत्वाभ्युपगमात्, न चास्य ज्ञेयत्वमुच्यते; अतो न तन्त्रसिद्धस्येह ग्रहणम् ॥ ४ ॥

## वदतीतिचेन्न प्राज्ञो हि प्रकरणात् । १ । ४ । ५ ॥

६ "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते', इत्यव्यक्तस्य ज्ञेयत्वमनन्तरमेव वदतीयं श्रुतिरितिचेत्—तन्न, प्राज्ञः—परमपुरुष एव ह्यत्र श्लोके निचाय्यत्वेन प्रतिपाद्यते "विज्ञानसार-

१. सुबाल. ७. खं ॥
२. गी. ७-४, ५, ६, ७ ॥
३. वि. १-२-१८ ॥
४. वि. ६-४-३९, ४० ॥
५. सांख्यतत्त्वकारिका ॥
६. कठ. १-३-१५ ॥

यंस्तु मनः प्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" १ "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति प्राज्ञस्यैव प्रकृतत्वात्। अत एव २ "पुरुषान्न परं किञ्चित्" इति न पञ्चविंशकपुरुषातिरिक्तनत्त्वनिषेधः। तस्य च परमपुरुषस्याशब्दत्वादयो धर्माः ३"तत्तदद्रेश्यमग्राह्यम्" इत्यादिश्रुतिप्रसिद्धाः । ३ "महतः परम्" इत्यपि ४ " बुद्धेरात्मा महान्परः " इति पूर्वप्रकृताज्जीवात्मनः परत्वमेवोच्यते ॥ ५ ॥

## त्रयाणामेवचैवमुपन्यासः प्रश्नश्च । १ । ४ । ६ ॥

अस्मिन्प्रकरणे ह्युपायोपेयोपेतॄणां त्रयाणमेव चैवमुपन्यासः— ज्ञेयत्वेनोपन्यासः, तद्विषयश्च प्रश्नो दृश्यते,नान्यस्याव्यक्तादेः। तथाहि नचिकेता मुमुक्षुस्सन्मृत्युप्रदत्ते वरत्रये प्रथमेन वरेणात्मनः पुरुषार्थयोग्यतापादिनीमात्मनि पितुस्सुमनस्कतां प्रतिलभ्य द्वितीयेन वरेण मोक्षोपायभूतां नाचिकेताग्निविद्यां वव्रे—५ "सत्वमग्निं स्वर्ग्यमध्येषि मृत्योप्रब्रूहि तं श्रद्दधानाय मह्यम्। स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण" इति। स्वर्गशब्देनात्र परमपुरुषार्थलक्षणो मोक्षोऽभिधीयते, ५ " अमृतत्वं भजन्ते " इति तत्रस्थस्य जननमरणाभावश्रवणादुत्तरत्र क्षयिफलकर्मनिन्दादर्शनाच्च; ६ "त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू" इति च प्रतिवचनात्। तृतीयेन वरेण मोक्षस्वरूपप्रश्नद्वारेणोपेयस्वरूपमुपेतृस्वरूपमुपायभूतकर्मानुगृहीतोपासनस्वरूपं च पृष्टम्—७" येयं प्रेते विचिकित्सा

१. कठ. १-३-१२ ॥
२. कठ. १-३-११ ॥
३. मु. १-६ ॥
४. कठ. १-३-१० ॥
५. कठ. १-१-१३ ॥
६. कठ. १-१-१७ ॥
७. कठ. १-१-२० ॥

मनुष्ये अस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ” इति। एवं मोक्षे पृष्टे तदुपदेशयोग्यतां परीक्ष्योपदिदेश—१ “ तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति” इति। तदेवं सामान्येनोपदिष्टे नचिकेताः प्रीतस्सन् १ “देवं मत्वा” इत्युपास्यतया निर्दिष्टस्य प्राप्यभूतस्य देवस्य १ “ अध्यात्मयोगाधिगमेन” इति वेदितव्यतया निर्दिष्टस्य प्राप्तुः प्रत्यगात्मनश्च १ “मत्वा धीरो हर्षशोकौ जहाति” इति निर्दिष्टस्य ब्रह्मोपासनस्य च स्वरूपविशोधनाय पुनः पप्रच्छ—२ "अन्यत्रधर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताद्भव्याच्च यत्तत्पश्यसि तद्वद” इति। एवं सकलेतरातीतानागतवर्तमानसाध्यसाधनसाधकविलक्षणे त्रये पृष्टे प्रथमं प्रणवं प्रशस्य तद्वाच्यं प्राप्यस्वरूपं, तदन्तर्गतं च प्राप्तृस्वरूपं वाचकरूपं चापायं पुनरपि सामान्येन व्याचयन्प्रणवं तावदुपादिदेश—३ सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्’ इति। एवमुपदिश्य पुनरपि प्रणवं प्रशस्य प्रथमन्तावत्प्राप्तुः प्रत्यगात्मनस्स्वरूपमाह—४ "न जायते म्रियते वा विपश्चित्’ इत्यादिना। प्राप्यस्य परस्य ब्रह्मणो विष्णोस्स्वरूपम् ५ "अणोरणीयान्” इत्यादिना ६ "क इत्था वेद यत्र सः" इत्यन्तेनोपदिशन्मध्ये ७ “ नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ” इत्यादिनोपायभूतस्योपासनस्य भक्तिरूपतामप्याह। ८ "ऋतं पिबन्तौ” इति

१. कठ. १-२-१२ ॥ २. कठ. १-२-१४ ॥
३. कठ १-२-१५ ॥ ४. कठ. १-२-१८ ॥
५. कठ. १-२-२० ॥ ६. कठ. १-२-२५ ॥
७. कठ. १-२-२३ ॥ ८. कठ. १-३-१ ॥

चोपास्यस्योपासकेन सहावस्थानात्सूपासतामुक्त्वा १ "आत्मानं रथिनं विद्धि" इत्यादिना २ " दुर्गं पथस्तत्कवयो वदन्ति" इत्यन्तेनोपासनप्रकारमुपासीनस्य च वैष्णवपरमपदप्राप्तिमभिधाय ३ "अशब्दमस्पर्शम्" इत्यादिनोपसंहृतम्। अतस्त्रयाणामेवात्र ज्ञेयत्वेनोपन्यासः प्रश्नश्च; तस्मान्नेह तान्त्रिकस्याव्यक्तस्य ग्रहणम् ॥

## महद्वच्च । १ । ४ । ७ ॥

यथा ४ " बुद्धेरात्मा महान्परः" इत्यत्रात्मशब्दसामानाधिकरण्यान्न तन्त्रसिद्धं महत्तत्त्वं गृह्यते; एवमव्यक्तमप्यात्मनः परत्वेनाभिधानान्न कापिलतन्त्रसिद्धं गृह्यत इति स्थितम् ॥ ७ ॥

इति श्रीशारीरकमीमांसाभाष्ये आनुमानिकाधिकरणम् ॥ १ ॥

—:( श्रीशारीरकमीमांसाभाष्ये चमसाधिकरणम् ):—

## चमसवदविशेषात् । १ । ४ । ८ ॥

अत्रापि तन्त्रसिद्धप्रक्रिया निरस्यते, न ब्रह्मात्मकानां प्रकृतिमहदहङ्कारादीनां स्वरूपम्, श्रुतिस्मृतिभ्यां ब्रह्मात्मकानां तेषां प्रतिपादनात्। यथा आथर्वणिका अधीयते—५ "विकारजननीमज्ञामष्टरूपमजां ध्रुवाम्। ध्यायते ऽध्यासिता तेन तन्यते प्रेर्यते पुनः। सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत्। गौरनाद्यन्तवती सा जनित्री भूतभाविनी। सिताऽसिता च रक्ता च सर्वकामदुघा विभोः। पिबन्त्येनामविषमामविज्ञाताः कुमारकाः। एकस्तु पिबते देवः स्वच्छन्दोत्र वशानुगाम्। ध्यानक्रियाभ्यां भगवान्भुङ्क्तेऽसौ प्रसभं विभुः। सर्वसाधारणीं

१. कठ. १-३-३ ॥ २. कठ. १-३-१४ ॥ ३. कठ. १-३-१५ ॥
४. कठ. १-३-१० ॥ ५. मन्त्रिकोपनिषदि.

दोग्ध्रीं पीड्यमानानां तु यज्वभिः" १ "चतुर्विंशतिसङ्ख्यातमव्यक्तं व्यक्तमुच्यते" इति । अत्र प्रकृत्यादीनां स्वरूपमभिहितम्; यदात्मकश्चैते प्रकृत्यादयः; स परमपुरुषोऽपि १ "तं पड्विंशकमित्याहुस्सप्तविंशम-थापरे। पुरुषं निर्गुणं साङ्ख्यमथर्वशिरसो विदुः" इति प्रतिपाद्यते; अपरे चाथर्वणिकाः १ "अष्टौ प्रकृतयष्षोडश विकाराः" इत्यधीयते; श्वेताश्वतराश्चैवं प्रकृतिपुरुषेश्वरस्वरूपमामनन्ति २ संयुक्तमेतत्क्षरम-क्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः । अनीशश्चात्मा बध्यते भोक्तृ भावात् ज्ञात्वा देवं मुच्यते सर्वपापैः" २ "ज्ञाज्ञौ द्वावजावीशनीशा-वजा ह्येका भोक्तृभोगार्थयुक्ता । अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत्" ३ "क्षरं प्रधानममृताक्षरं हरः क्षरात्माना-वीशते देव एकः । तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमा-यानिवृत्तिः" ४ "छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति । अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्नि-रुद्धः । मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्" इति तथोत्तरत्रापि ५ "प्रधानक्षेत्रज्ञपतिर्गुणे-शस्संसारमोक्षस्थितिबन्धहेतुः" इति । स्मृतिरपि ६ "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि। विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्। कार्यकारण कर्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यते। पुरुषः प्रकृतिस्थोऽपि भुङ्क्ते प्रकृतिजान् गुणान् । कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु" ७ "सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः । निबध्नन्ति महाबाहो देहे देहिनमव्ययम्"; तथा

१. मन्त्रिकोपनिषदि ॥　२. श्वे. १-८, ६ ॥　३. श्वे. १-१० ॥
४. श्वे. ४-६-१० ॥　५. श्वे. ६-१६ ॥
६. गी. १३-१६, २०, २१ ॥　७. गी १४-५ ॥

१"सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्। कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्॥ प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः। भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्" २"मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम्। हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते" इति। तस्माद्-ब्रह्मात्मकत्वेन कापिलतन्त्रसिद्धाः प्रकृत्यादयो निरस्यन्ते। श्वेताश्व-तरोपनिषदि श्रूयते ३ "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजास्सृ-जमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगा-मजोऽन्यः" इति। तत्र सन्देहः—किमस्मिन्मन्त्रे केवला तन्त्रसिद्धा प्रकृतिरभिधीयते, उत ब्रह्मात्मिका—इति। किं युक्तम्? केवलेति। कुतः? ३"अजामेकाम्" इत्यस्याः प्रकृतेरकार्यत्व श्रवणात्, ३"बह्वीः प्रजास्सृजमानां सरूपाः" इति स्वातन्त्र्येण सरूपाणां बह्वीनां प्रजानां स्रष्टृत्वश्रवणाच्च—इति॥

एवं प्राप्तेऽभिधीयते—चमसवदविशेषात्—न जायत इत्य-जेत्यजात्वमात्रप्रतिपादनात्तन्त्रसिद्धाब्रह्मात्मकाजाग्रहणे विशेषाप्रतीतेः; चमसवत्—यथा ४"अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः" इत्यस्मिन्मन्त्रे चमसस्य भक्षणसाधनत्वमात्रं चमसशब्देन प्रतीयत इति न तावन्मा-त्रेण चमसविशेषप्रतीतिः, यौगिकशब्दानामर्थप्रकरणादिभिर्विनाऽर्थ-विशेषनिश्चयायोगात्; तत्र ५"यथेदं तच्छिरः एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः" इत्यादिना वाक्यशेषेण शिरसश्चमसत्वनिश्चयः; तथाऽ-त्राप्यर्थप्रकरणादिभिरेवाजा निर्णेतव्या; नचात्र तन्त्रसिद्धाजाग्रहण-हेतवोऽर्थप्रकरणादयो दृश्यन्ते; नचास्यास्स्वातन्त्र्येण स्रष्टृत्वं प्रतीयते, "बह्वीः प्रजास्सृजमानाम्" इति स्रष्टृत्वमात्रप्रतीतेः। अतोऽनेन मन्त्रेण नाब्रह्मात्मिकाऽजाऽभिधीयते ॥८॥

१. गी. ९-७, ८॥ २. गी. ९. १०॥ ३. श्वे. ४-५॥
४. बृ ४-२-३॥

ब्रह्मात्मकाजाग्रहण एव विशेषहेतुरस्तीत्याह—

**ज्योतिरुपक्रमा तु तथाह्यधीयत एके।१।४।९॥**

तुशब्दोऽवधारणार्थः; ज्योतिरुपक्रमैवैषाऽजा; ज्योतिः ब्रह्म १"तं देवा ज्योतिषां ज्योतिः" २"अथ यदतः परो दिवो ज्योतिर्दीप्यते" इत्यादिश्रुतिप्रसिद्धेः। ज्योतिरुपक्रमा ब्रह्मकारणिकेत्यर्थः। तथाह्यधीयत एके—हीति हेतौ, यस्मादस्या अजाया ब्रह्मकारणकत्वमेके शाखिनः तैत्तिरीया अधीयते—३"अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः" इति हृदयगुहायामुपास्यत्वेन सन्निहितं ब्रह्माभिधाय "सप्त प्राणाः प्रभवन्ति तस्मात्" इत्यादिना सर्वेषां लोकानां ब्रह्मादीनां च तत उत्पत्तिमभिधाय सर्वकारणीभूताऽजा तत उत्पन्नाऽभिधीयते ४"अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति। सर्वस्य तद्व्यतिरिक्तस्य वस्तुजातस्य तत उत्पत्त्या तदात्मकत्वोपदेशे प्रक्रियमाणेऽभिधीयमानत्वात्प्राणसमुद्रपर्वतादिवदेषाऽप्यजा बह्वीनां सरूपाणां प्रजानां स्रष्ट्री कर्मवश्येनाऽऽत्मना भुज्यमाना अन्येन विदुषाऽऽत्मना त्यज्यमाना च ब्रह्मण उत्पन्ना ब्रह्मात्मिकाऽवगन्तव्येत्यर्थः। अतो वाक्यशेषाच्चमसविशेषवच्छाखान्तरीयादेतत्सरूपात्प्रत्यभिज्ञायमानार्थाद्वाक्याग्नियमिताऽजा ब्रह्मात्मिकेति निश्चीयते। इहापि प्रकरणोपक्रमे ५"किं कारणं ब्रह्म" इत्यारभ्य ६"ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्" इति परब्रह्मशक्तिरूपाया अजाया अवगतेः, उपरिष्टाच्च ७"अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया

१. बृ. ४-४-१६॥ २. छा. ३-१३-७॥ ३. तै—नारा. १२॥
४. तै. नारा. १२॥ ५. श्वे. १-१॥ ६. श्वे. १-३॥
७. श्वे. ४-९॥

सन्निरुद्धः" १"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" १"यो योनिर्योनिमधितिष्ठत्येकः" इति च तस्या एव प्रतीतेर्नास्मिन्मन्त्रे नन्त्रसिद्धस्वतन्त्रप्रकृतिप्रतिपत्तिगन्धः ॥

कथं तर्हि ज्योतिरुपक्रमाया लोहितशुक्लकृष्णरूपाया अस्याः प्रकृतेरजात्वम्, अजाया वा कथं ज्योतिरुपक्रमात्वमित्यत्राह—

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ।१।४।१०॥

प्रसक्ताशङ्कानिवृत्त्यर्थश्चशब्दः । अस्याः प्रकृतेरजात्वं ज्योतिरुपक्रमात्वं च न विरुध्यते; कुतः? कल्पनोपदेशात् । कल्पनं क्लृप्तिः सृष्टिः; जगत्सृष्ट्युपदेशादित्यर्थः । यथा २"सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति कल्पनं सृष्टिः । अत्रापि ३ "अस्मान्मायी सृजते विश्वमेतत्" इति जगत्सृष्टिरुपदिश्यते । स्वेनाविभक्तादस्मात्सूक्ष्मावस्थात्कारणान्मायि सर्वेश्वरस्सर्वं जगत्सृजतीत्यर्थः । अनेन कल्पनोपदेशेनास्याः प्रकृतेः कार्यकारणरूपेणावस्थाद्वयान्वयोऽवगम्यते। सा हि प्रलयवेलायां ब्रह्मतापन्ना अविभक्तनामरूपा सूक्ष्मरूपेणावतिष्ठते; सृष्टिवेलायां तद्भूतसत्त्वादिगुणा विभक्तनामरूपाऽव्यक्तादिशब्दवाच्या तेजोबन्नादिरूपेण च परिणता लोहितशुक्लकृष्णाकारा चावतिष्ठते । अतः कारणावस्थाऽजा, कार्यावस्था ज्योतिरुपक्रमेति न विरोधः । मध्वादिवत्—यथेश्वरेणादित्यस्य कारणावस्थायामेकस्यैवावस्थितस्य कार्यावस्थायामृग्यजुस्सामाथर्वप्रतिपाद्यकर्मनिष्पाद्यरसाश्रयतया वस्वादिदेवताभोग्यत्वाय मधुत्वकल्पनमुदयास्तमयकल्पनं च न विरुध्यते । तदुक्तं मधुविद्यायाम् ४ "असौ वा आदित्यो देवमधु" इत्यारभ्य ५"अथ तत ऊर्ध्व उदेत्य नैवोदेता

१. श्वे. ४-१०, ११ ॥ २. तै. नारा. १-१३ ॥
३. श्वे. ४-९ ॥ ४. छा. ३-१-१ ॥ ५. छा. ३-११-१ ॥

नास्तमेतैकल एव मध्ये स्याता" इत्यन्तेन। एकलः एकस्वभावः। अतोऽनेन मन्त्रेण ब्रह्मात्मिकाऽजैवाभिधीयते, न कापिलतन्त्रसिद्धेति सिद्धम् ॥

अन्ये त्वस्मिन्मन्त्रे तेजोबन्नलक्षणाऽजैकाभिधीयत इति ब्रुवते। तं प्रष्टव्याः—किं तेजोबन्नान्येव तेजोबन्नात्मिकाऽजैका; उत तेजोबन्नरूपं ब्रह्मैव; किं वा तेजोबन्नकारणभूता काचित्---इति। प्रथमे कल्पे तेजोबन्नानामनेकत्वात् "अजामेकाम्" इति विरुध्यते। न च वाच्यं तेजोबन्नानामनेकत्वेऽपि त्रिवृत्करणेनैकत्वापत्तिरिति। त्रिवृत्करणेऽपि बहुत्वानपगमात्, १ "इमास्तिस्रो देवताः" २ "तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इति प्रत्येकं त्रिवृत्करणोपदेशात्। द्वितीयः कल्पो विकल्प्यः किं तेजोबन्नरूपेण विकृतं ब्रह्मैवाजैका; किंवा स्वरूपेणावस्थितमविकृतमिति। प्रथमः कल्पो बहुत्वानपायादेव निरस्तः। द्वितीयेऽपि ३ "लोहितशुक्लकृष्णाम्" इति विरुध्यते। स्वरूपेणावस्थितं ब्रह्म तेजोबन्नलक्षणमिति वक्तुमपि न शक्यते तृतीये कल्पेऽप्यजाशब्देन तेजोबन्नानि निर्दिश्य तैस्तत्कारणावस्थोपस्थापनीयेत्यास्थेयम्। ततो वरमजाशब्देन तेजोबन्नकारणावस्थायाः श्रुतिसिद्धाया एवाभिधानम्। यत्पुनरस्याः प्रकृतेरजाशब्देन च्छागत्वपरिकल्पनमुपदिश्यत इति; तदप्यसङ्गतम्, निष्प्रयोजनत्वात्। यथा ४ "आत्मानं रथिनं विद्धि" इत्यादिषु ब्रह्मप्राप्त्युपायताख्यापनाय शरीरादिषु रथादिरूपणं क्रियते; यथा-चादित्ये वस्वादीनां भोग्यत्वख्यापनाय मधुत्वकल्पनं क्रियते; तद्वदस्यां प्रकृतौ च्छागत्वपरिकल्पनं कोपयुज्यते; न केवलमुपयोगाभाव एव, विरोधश्च; कृत्स्नजगत्कारणभूतायाः स्वस्मिन्ननादिकालसम्ब-

१. छा. ६-३-२ ॥ २. छा. ६-३-३ ॥
३. श्वे. ४. ५॥ ४. कठ. १. ३. ३ ॥

द्धानां सर्वेषामेव चेतनानां निखिलसुखदुःखोपभोगापवर्गसाधनभूतायः अचेतनायाः अत्यल्पप्रजासर्गकरागन्तुकसङ्गमचेतनविशेषैकरूपात्यल्पप्रयोजनसाधनस्वपरित्यागाहेतुभूतस्वसम्बन्धिपरित्यागसमर्थचेतनविशेषरूपच्छागस्वभावख्यापनाय तद्रूपत्वकल्पनं विरुद्धमेव। १ "अजामेकाम्" १ "अजो ह्येकः" १ "अजोऽन्यः" इत्यत्राजाशब्दस्य विरूपार्थकल्पनं च न शोभनम्। सर्वत्र च्छागत्वं परिकल्प्यत इति चेत् १ "जहात्येनां भुक्तभोगामजोऽन्यः इति विदुष आत्यन्तिकप्रकृतिपरित्यागं कुर्वतोऽनेनवाऽन्येनवा पुनरपि सम्बन्धयोग्यच्छागत्वपरिकल्पनमत्यन्तविरुद्धम् ॥ १० ॥

इति श्रीशारीरकमीमांसाभाष्ये चमसाधिकरणम् ॥ २ ॥

---

—( श्रीशारीरकमीमासांभष्ये संख्योपसंग्राधिकरणम् ॥३॥)—

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च।
## १ । ४ । ११ ॥

वाजसनेयिनस्समामनन्ति २ " यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेवम्मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम् " इति। कियमं मन्त्रः कापिलतन्त्रसिद्धतत्त्वप्रतिपादनपरः, उत नेति सन्दिह्यते। किं युक्तम्? तन्त्रसिद्धतत्त्वप्रतिपादनपर इति कुतः? पञ्चशब्दविशेषितात्पञ्चजनशब्दात्पञ्च विंशतितत्त्वप्रतीतेः । एतदुक्तं भवति २ " पञ्चजनाः " इति समासस्समाहारविषयः । पञ्चानां जनानां समूहाः पञ्चजनाः; 'पञ्चपूल्य' इतिवत्। पञ्च जनाइति लिङ्ग-

---

१. श्वे. ४. ५ ॥ २. बृ. ६-४-१७॥

व्यत्ययश्छान्दसः । तें च समूहाः कतीत्यपेक्षायां पञ्चजनशब्दविशेषणेन प्रथमेन पञ्चशब्देन समूहाः पञ्चेति प्रतीयन्ते, यथा पञ्च पञ्चपूल्य इति । अतः १ "पञ्च पञ्चजनाः" इति पञ्चविंशतिपदार्थावगतौ ते कतम इत्यपेक्षायां मोक्षाधिकारान्मुमुक्षुभिः ज्ञातव्यतया स्मृतिप्रसिद्धाः प्रकृत्यादय एव ज्ञायन्ते । २ " मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः " इति हि कापिलानां प्रसिद्धिः अतस्तन्त्रसिद्धतत्त्वप्रतिपादनपरः ॥

( सिद्धान्तः )

इति प्राप्ते प्रचक्ष्महे—न सङ्ख्योपसङ्ग्रहादपि—इति ३ "पञ्च पञ्चजनाः" इति पञ्चविंशतिसङ्ख्योपसङ्ग्रहादपि न तन्त्रसिद्धतत्त्वप्रतीतिः। कुतः ? नानाभावात्—एषां पञ्चसङ्ख्याविशेषितानां पञ्चजनानां तन्त्रसिद्धेभ्यस्तत्त्वेभ्यः पृथग्भावात् ३ "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इत्येतेषां यच्छब्दनिर्दिष्टब्रह्माश्रयतया ब्रह्मात्मकत्वं हि प्रतीयते ३ "तमेवम्मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्" इत्यत्र तमिति परामर्शेन यच्छब्दनिर्दिष्टं ब्रह्मेत्यवगम्यते । अतस्तेभ्यः पृथग्भूताः पञ्चजना इति न तन्त्रसिद्धा एते। अतिरेकाच्च—तन्त्रसिद्धेभ्यस्तत्त्वेभ्योऽत्र तत्त्वातिरेकोऽपि भवति; यच्छब्दनिर्दिष्ट आत्मा आकाशश्चात्रातिरिच्येते । अतः ४ "तं षड्विंशकमित्याहुस्सप्तविंशमथापरे" इति श्रुतिप्रसिद्धसर्वतत्त्वाश्रयभूतस्सर्वेश्वरः परमपुरुषोऽत्राभिधीयते 'न सङ्ख्योपसङ्ग्रहादपि' इत्यपिशब्दस्य ३ "पञ्च पञ्चजनाः" इत्यत्र पञ्चविंशतितत्त्वप्रतिपत्तिरेव न

१. बृ. ६-४-१७॥          २. सांख्यतत्त्वकारिका ॥
३. बृ. ६-४-१७ ॥          ४. मन्त्रिकोपनिषद् ॥

सम्भवतीत्यभिप्रायः। कथम्? पञ्चभिरारब्धसमूहपञ्चकासम्भवात्; नहि तन्त्रसिद्धतत्त्वेषु पञ्चसु पञ्चस्वनुगतं यत्सङ्ख्यानिवेशनिमित्तं ज्ञात्याद्यस्ति; नच वाच्यं—पञ्च कर्मेन्द्रियाणि, पञ्च ज्ञानेन्द्रियाणि, पञ्च महाभूतानि, पञ्च तन्मात्राणि, अविशिष्टानि पञ्च—इत्यवान्तर-सङ्ख्यानिवेशायनिमित्तमस्त्येव-इति; आकाशस्य पृथङ्निर्देशेन पञ्च-भिरारब्धमहाभूतसमूहासिद्धेः। अतः १ "पञ्चजनाः" इत्ययं समासो न समाहारविषयः; अयं तु २ "दिक्सङ्ख्ये संज्ञायाम्" इति संज्ञा-विषयः; अन्यथा पञ्चजनाः इति लिङ्गव्यत्ययश्च। पञ्चजना नाम केचित्सन्ति; तेच पञ्चसङ्ख्यया विशेष्यन्ते, पञ्च पञ्चजनाः इति; सप्त सप्तर्षय इतिवत्॥ ११॥

के पुनस्ते पञ्चजनाः इत्यत आह—

## प्राणादयो वाक्यशेषात्। १। ४। १२॥

३ "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः" इति वाक्यशेषाद्ब्रह्माश्रयाः प्राणादय एव पञ्च पञ्चजनाः इति विज्ञायन्ते॥ १२॥

अथ स्यात्—काण्वानां माध्यन्दिनानां च ४ "यस्मिन् पञ्च पञ्चजनाः" इत्ययं मन्त्रस्समानः; ३ "प्राणस्य प्राणम्" इत्यादिवा-क्यशेषे काण्वानामन्नस्य पाठो न विद्यते; तेषां पञ्च पञ्चजनाः प्राणा-दय इति न शक्यं वक्तुम्—इति; अत्रोत्तरम्

## ज्योतिषैकेषामसत्यन्ने। १। ४। १३॥

एकेषां काण्वानां पाठे असत्यन्ने ज्योतिषा पञ्चजनाः इन्द्रिया-णीति ज्ञायन्ते; तेषां वाक्यशेषः प्रदर्शनार्थः। एतदुक्तं भवति—

१. बृ. ६-४-१६॥ २. पाणिनि-२-१-५०॥
३. बृ. ६-४-१८॥ ४. बृ. ६ ४ १७॥

१ "यस्मिन् पञ्च पञ्चजनाः" इत्यस्मात्पूर्वस्मिन्मन्त्रे २ "तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इति ज्योतिषां ज्योतिष्ट्वे ब्रह्मण्यभिधीयमाने ब्रह्माधीनस्वकार्याणि कानिचिज्ज्योतींषि प्रतिपन्नानि; तानि च विषयाणां प्रकाशकानीन्द्रियाणीति १ "यस्मिन् पञ्च पञ्चजनाः" इत्यनिर्धारितविशेषनिर्देशेनावगम्यन्ते इति ३ "प्राणस्य" इति प्राणशब्देन स्पर्शनेन्द्रियं गृह्यते, वायुसम्बन्धित्वात्स्पर्शनेन्द्रियस्य मुख्यप्राणस्य ज्योतिश्शब्देन प्रदर्शनायोगात्। चक्षुष इति चक्षुरिन्द्रियम्, श्रोत्रस्येति श्रोत्रेन्द्रियम्, अन्नस्येति घ्राणरसनयोस्तन्त्रेणोपादानम्, अन्नशब्दोदितपृथिवीसम्बन्धित्वाद्घ्राणेन्द्रियमनेन गृह्यते; अद्यतेऽनेनेत्यन्नमिति रसनेन्द्रियमपि गृह्यते। मनस इति मनः। घ्राणरसनयोस्तन्त्रेणोपादानमिति पञ्चत्वमप्यविरुद्धम्। प्रकाशकानि मनःपर्यन्तानीन्द्रियाणि पञ्चजनशब्दनिर्दिष्टानि तदविरोधाय घ्राणरसनयोस्तन्त्रेणोपादानम्। तदेवम् १ "यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इति पञ्चजनशब्दनिर्दिष्टानीन्द्रियाण्याकाशशब्द प्रदर्शितानि महाभूतानि च ब्रह्मणि प्रतिष्ठितानीति सर्वतत्त्वानां ब्रह्माश्रयत्वप्रतिपादनान्न तन्त्रसिद्धपञ्चविंशतितत्त्वप्रसङ्गः। अतस्सर्वत्र वेदान्ते सङ्ख्योपसङ्ग्रहे तदभावे वा न कापिलतन्त्रसिद्धतत्त्वप्रतीतिरिति स्थितम् ॥

इति श्रीशारीरकमीमांसाभाष्ये सङ्ख्योपसङ्ग्रहाधिकरणम् ॥

---

१. बृ. ६-४-१७ ॥ २. बृ. -४-१६ ॥ ३. बृ. ६-४-१८ ॥

( श्रीशारीरकमीमांसाभाष्ये तत्स्वाभाव्यापत्त्यधिकरणम् ॥ )

## तत्स्वाभाव्यापत्तिरुपपत्तेः । ३ । १ । २२ ॥

इष्टादिकारिणो भूतसूक्ष्मपरिष्वक्तास्सानुशयाश्चन्द्रमसोऽवरोहन्तीत्युक्तम् , अवरोहप्रकारश्च[1] "अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशम् आकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति अभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति" इति वचनात् । 'यथेतमनेवञ्च' इत्युक्तम् ; तत्रास्याकाशादिप्रतिपत्तौ देवमनुष्यादिभाववदाकाशादिभावः, उत * तत्सादृश्यापत्तिमात्रमिति विशये श्रद्धावस्थस्य सोमभाववदविशेषादाकाशादिभावः—

( सिद्धान्तः )

इति प्राप्ते तत्स्वाभाव्यापत्तिरेवेत्युच्यते । तत्स्वाभाव्यापत्तिः--तत्सादृश्यापत्तिरित्यर्थः । कुत एतत्? उपपत्तेः सोमभावमनुष्यभावादौ हि सुखदुःखोपभोगाय तद्भावः; अत्र त्वाकाशादौ सुखदुःखोपभोगाभावात्तद्भावानुपपत्तेस्तदापत्तिवचनं तत्संसर्गकृततत्सादृश्यापत्त्यभिप्रायम् ॥२२॥

इति श्रीशारीरकमीमांसाभाष्ये तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥

---

( श्रीशारीरकमीमांसाभाष्ये नातिचिराधिकरणम् ॥ ७ ॥ )

## नातिचिरेण विशेषात् । ३ । १ । २३ ॥

आकाशप्राप्तिप्रभृति यावद्व्रीह्यादिप्राप्ति किं तत्रतत्र नातिचिरं नियमः, उतानियम इति विशये नियमहेत्वभावादनियमः—

---

१. छा. ५-१०-५ ॥ * तत्सादृश्यमात्रम्, तत्स्वाभाव्यापत्तिमात्रम् , पा ॥

( सिद्धान्तः )

इति प्राप्ते उच्यते–नातिचिरेण–इति । कुतः?विशेषात्–उत्तरत्र व्रीह्यादिप्राप्तौ१ "अतो वै खलु दुर्निष्प्रपतरम्" इति विशिष्य कृच्छ्रनिष्क्रमणत्वाभिधानात् पूर्वत्र ह्याकाशादिप्राप्तावचिरनिष्क्रमणं गम्यते । दुर्निष्प्रपतरमिति च्छान्दसस्तशब्दलोपः; दुर्निष्प्रपतरं–दुःखनिष्क्रमणतरमित्यर्थः ।

इति श्रीशारीरकमीमांसाभाष्ये नातिचिराधिकरणम् ॥ ५ ॥

---

( श्रीशारीरकमीमांसाभाष्ये अन्याधिष्ठिताधिकरणम् ॥ ६ ॥ )

---

## अन्याधिष्ठिते पूर्ववदभिलापात् । ३ । १ । २४ ॥

अवरोहन्तो जीवाः व्रीह्यादिभावेन जायन्त इति श्रूयते १"मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्ते" इति । ते किमन्यैर्भोक्तृभिर्व्रीह्यादिशरीरैरधिष्ठितान्व्रीह्यादीनाश्लिष्यन्ति; उत ते भोक्तारो व्रीह्यादिशरीरा जायन्त इति विशये २ "जायन्ते" इति वचनाद्देवो जायते मनुष्यो जायत इतिवद्व्रीह्यादिशरीरा एव––

( सिद्धान्तः )

इति प्राप्त उच्यते–अन्याधिष्ठिते इति । जीवान्तरेणाधिष्ठिते व्रीह्यादिशरीरे तेषां संश्लेषमात्रमेव । कुतः?पूर्ववदभिलापात्–आकाशादिमेघपर्यन्तवत्केवलतद्भावाभिलापात् । यत्र हि भोक्तृत्वमभिप्रेतम् ; तत्र तत्साधनभूतं कर्माभिलप्यते१ "रमणीयचरणाः" "कपूयचरणाः" इति।इह चाकाशादिवन्नाभिलप्यते कर्म, फलप्रदाने प्रवृत्तस्य स्वर्गोपभोग्यफलस्यैष्टादेः कर्मणः स्वर्गोपभोगादेव समाप्तत्वात् , अनारब्धस्य १"रमणीयचरणाः

---

१. छा. ५-१०-६ ॥ २. छा. ५-१०-६-७ ॥

""कपूयचरणाः" इति वक्ष्यमाणत्वात्, मध्ये कर्मान्तराभावाच्च। अत आकाशादिभाववचनवद्व्रीह्यादिभावेन जन्मवचनमौपचारिकम् ॥२४॥

## अशुद्धमितिचेन्न शब्दात्। ३। १। २५॥

नैतदस्ति—यदन्याधिष्ठिते व्रीह्यादिशरीरे संश्लेपमात्रम्, भोक्तृत्व-हेत्वभावान्न व्रीह्यादिभावेन जन्म—इति भोक्तृत्वहेतुसद्भावात् स्वर्गो-पभोग्यफलमिष्टादिकर्मैवाशुद्धम्-पापमिश्रम, अग्नीषोमीयादिहिंसायुक्त-त्वात्। हिंसा च १"न हिंस्यात्सर्वा भूतानि" इति निषिद्धत्वात्पापमेव। चात्र यदाहवनीयादिवदुत्सर्गापवादभावस्सम्भवति, भिन्नविषयत्वात्। अग्नीषोमीयहिंसाविधिर्हिंसायाः क्रतूपकारकत्वं बोधयति; १"न हिंस्यात्" इति तु हिंसायाः प्रत्यवायफलत्वम्। अथोच्येत-अग्नीषोमीयादिषु वि-हितः प्रवृत्तेर्न तद्विषयं निषेधविधिरास्कन्दति, रागप्राप्तविषयत्वात्तस्येति; नै॰ म्, इहापि रागप्राप्तेरविशिष्टत्वात्। २"स्वर्गकामो यजेत"इत्येवमादौ हि कामिनः कर्तव्यतया यागाद्युपदेशाद्यागादेः स्वर्गादिसाधनत्वमवगम्य फ-लरागत एव यागादौ प्रवर्तते। अग्नीषोमीयादिष्वपि तेषां फलसाधनभू-तस्य यागादेरुपकारकत्वं शास्त्रादवगम्य रागादेव प्रवर्तते। लौकिक्यामपि हिंसायां केनचित्प्रमाणेन हिंसायाः स्वसमीहितसाधनत्वमवगम्य रागा-त्प्रवर्तत इति न कश्चन विशेषः। तथा नित्येष्वपि कर्मसु ३"सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखम्" इत्यादिवचनात्फलसाधनत्वमवगम्य रागादेव प्रवृत्तिरिति तेषामप्यशुद्धियुक्तत्वम्। अत इष्टादीनां पापमिश्र-त्वेनाशुद्धियुक्तानां स्वर्गेऽनुभाव्यं फलं स्वर्गेऽनुभूय हिंसांशस्य फलं व्री-ह्यादिस्थावरभावेनानुभूयते। स्थावरभावं च पापफलं स्मरन्ति ४"शरी-रजैः कर्मदोषैर्याति स्थावरतां नरः" इति। अतो व्रीह्यादिभावेन भोगाया-नुशयिनो जायन्त इति चेन्न तन्न, कुतः? शब्दात्-अग्नीषोमीयादेस्संज्ञपन-

१. ॥ २. यजु. २-१-१ ॥ ३. आपस्तम्ब. २-१-२-२ ॥ ४. मनु. १२-९ ॥

स्य स्वर्गलोकप्राप्तिहेतुतया हिंसात्वाभाव शब्दात् । पशोर्हि संज्ञपननिमित्तां स्वर्गलोकप्राप्तिंवदन्तं शब्दमामनन्ति १ 'हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेति" इत्यादिकम् । अतिशयिताभ्युदयसाधनभूतो व्यापारोऽल्पदुःखदोऽपि न हिंसा; प्रत्युत रक्षणमेव । तथा च मन्त्रवर्णः २ "न वा उ एतन्म्रियसे न रिष्यसि देवान् इदेपि पथिभिस्सुगेभिः । यत्र यन्ति सुकृतो नापि दुष्कृतस्तत्र त्वा देवस्सविता दधातु" इति । चिकित्सकं च तादात्विकाल्पदुःखकारिणमपि रक्षकमेव वदन्ति, पूजयन्ति च तज्ज्ञाः ॥

## रेतस्सिग्योगोऽथ । ३ । १ २६ ॥

इतश्चौपचारिकं व्रीह्यादिजन्मवचनम्, व्रीह्यादिभाववचनानन्तरं ३"यो यो ह्यन्नमत्ति यो रेतस्सिञ्चति तद्भूय एव भवति" इति रेतस्सिग्भावोऽनुशयिनां श्रूयमाणो यथा तद्योगमात्रं प्रतिपादयति; तद्वद्व्रीह्यादिभावोऽपीत्यर्थः ॥ २६ ॥

## योनेश्शरीरम् । ३ । १ । २७ ॥

योनिप्राप्तेः पश्चादेवानुशयिनां शरीरप्राप्तिः, तत्रैव सुखदुःखोपभोगसद्भावात् । ततः प्रागाकाशादिप्राप्तिप्रभृति तद्योगमात्रमेवेत्यर्थः ॥

इति श्रीशारीरकमीमांसाभाष्ये अन्याधिष्ठिताधिकरणम् ॥ ६ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

तृतीयस्याध्यायस्य प्रथमः पादः ॥ १ ॥

---

१. ॥ २. यजु २-का, ६ प्र, ६ अनु. ४६ प. ॥ ३. छा. ५-१०-६ ॥

|| श्रीमते रामानुजाय नमः ||

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

—( तृतीयाध्याये -द्वितीयः पादः-सन्ध्याधिकरणम् || )—



## सन्ध्ये सृष्टिराह हि । ३ । २ । १ ॥

एवं कर्मानुरूपगमनागमनजन्मादियोगेन जाग्रतो जीवस्य दुःखित्वं ख्यापितम्; इदानीमस्य स्वप्नावस्था परीक्ष्यते । स्वप्नमधिकृत्य श्रूयते १"न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथस्सृजते न तत्रानन्दा मुदः प्रमुदो भवन्ति अथानन्दान् मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति अथ वेशान्ताः पुष्करिण्यः स्रवन्त्यस्सृजते स हि कर्ता" इति । तत्र संशयः-किमियं रथादिसृष्टिर्जीवेनैव क्रियते; अहोस्विदीश्वरेण—इति । किंयुक्तम्? सन्ध्ये सृष्टिर्जीवेनेति । कुतः? सन्ध्यं-स्वप्नस्थानमुच्यते, २"सन्ध्यं तृतीयं स्वप्नस्थानम्" इति वचनात्; सा तु जीवेनैव क्रियते १"सृजते स हि कर्ता" इत्याह हि । स्वप्नदृग्जीव एव तत्र प्रतीयते ॥ १ ॥

## निर्मातारं चैके पुत्रादयश्च । ३ । २ । २ ॥

किञ्च-एनं जीवं स्वप्ने कामानां निर्मातारमेके शाखिनोऽधीयते ३"य एषु सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः" इति; पुत्रादयश्च तत्र काम्यमानतया कामशब्देन निर्दिश्यन्ते, नेच्छामात्रम्; पूर्वत्र हि४"स-

---

१. बृ. ६-३-१० ॥-२. ॥-३. कठ. २-२-८ ॥-४. कठ. १-१-२१ ॥

र्वान् कामान् छन्दतः प्रार्थयस्व" १"शतायुषः पुत्रपौत्रान् वृणीष्व"इति पुत्रादय एव कामाः प्रकृताः। अतो रथादीन् जीवः स्वप्ने सृजति,जीवस्य च सत्यसङ्कल्पत्वं प्रजापतिवाक्ये श्रुतम् ; अत उपकरणाद्यभावेऽपि सृष्टि- रुपपद्यते ॥ २ ॥

—( सिद्धान्तः )—

इति प्राप्तेऽभिधीयते—

## मायामात्रं तु कार्त्स्न्येनानभिव्यक्त- स्वरूपत्वात् । ३ । २ । ३ ॥

तुशब्दः पक्षं व्यावर्तयति; स्वप्न रथपुष्करिण्याद्यर्थजातं मायामात्रं परमपुरुषसृष्टमित्यर्थः । मायाशब्दो ह्याश्चर्यवाची २' जनकस्य कुले जाता देवमायेव निर्मिता'' इत्यादिषु तथा दर्शनात् । अत्रापि ३ "न तत्र रथा न रथायोगा न पन्थानः"-सकलेतरपुरुषानुभाव्यतया न भवन्तीत्यर्थः,३"अथ रथान्रथयोगान्पथः सृजते"-स्वप्नदृगनुभाव्यतया तत्कालमात्रावसानान् सृजत इत्याश्चर्यरूपत्वमेवाह । एवंविधाश्चर्यरूपा सृष्टिस्सत्यसङ्कल्पस्य परमपुरुषस्यैवोपपद्यते, न जीवस्य तस्य सत्यसङ्कल्पत्वादियुक्तस्यापि संसारदशायां कार्त्स्न्येनानभिव्यक्तस्वरूपत्वान्न जीवस्य तथाविधाश्चर्यसृष्टिरुपपद्यते । ४' कामंकामं पुरुषो निर्मिमाणः" इति च परमपुरुषमेव निर्मातारमाह—४"य एषु सुप्तेषु जागर्ति"४"तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिन् लोकाश्श्रितास्सर्वे तदु नात्येति कश्चन" इत्युपक्रमोपसंहारयोः परमपुरुषासाधारणस्वभावप्रतीतेः । ३' अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्ता" इति च तया श्रुत्यैकार्थ्यात्परमपुरुषमेव कर्तारमाह ॥ ३ ॥

१. कठ १-१-२३ ॥—२. श्रीरामायणे. बालकाण्डे. १-२७ ॥—३. बृ. ६-३-१० ॥—४. कठ. २-५-८ ॥

स्वाभाविकं चेज्जीवस्यापहतपाप्मत्वादिकम्, कुतस्तन्नाभिव्यज्यत इत्यत आह—

# पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ । ३ । २ । ४ ॥

तुशब्दश्शङ्काव्यावृत्त्यर्थः; पराभिध्यानात्—परमपुरुषसङ्कल्पात्, अस्य जीवस्य स्वाभाविकं रूपं तिरोहितम्; अनादिकर्मपरम्परया कृतापराधस्य ह्यस्य स्वाभाविकं कल्याणरूपं परमपुरुषस्तिरोधापयति; ततः तत्सङ्कल्पादेव हि अस्य जीवस्य बन्धमोक्षौ श्रुतौ १"यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति" १"एष ह्येवानन्दयाति" २"भीषाऽस्माद्वातः पवते" इत्यादिषु ॥ ४ ॥

# देहयोगाद्वा सोऽपि । ३ । २ । ५ ॥

सोऽपि तिरोभावो देहयोगद्वारेण वा भवति, सूक्ष्माचिच्छक्तियोगद्वारेण वा; सृष्टिकाले देहावस्थेनाचिद्वस्तुना संयोगाद्भवति, प्रलयकाले नामरूपविभागानर्हातिसूक्ष्माचिद्वस्तुयोगात्। अतोऽनभिव्यक्तस्वरूपत्वात्स्वप्ने जीवो न रथादीन् सङ्कल्पमात्रेण स्रष्टुं शक्नोति। ३"तस्मिँल्लोकाश्श्रितास्सर्वे तदु नात्येति कश्चन" इति सर्वेषु सुप्तेषु जागरणं सर्वलोकाश्रयत्वमित्यादयो हि परमपुरुषस्यैव सम्भवन्ति। अतो जीवानामल्पाल्पकर्मानुगुणफलानुभवार्थं तावन्मात्रकालावसानान् तदेकानुभाव्यानर्थानुत्पादयति ॥ ५ ॥

# सूचकश्च हि श्रुतेराचक्षते च तद्विदः । ३ । २ । ६ ॥

इतश्च स्वाप्ना अर्था न जीवसङ्कल्पपूर्वकाः; यतः स्वप्नोऽभ्युदया-

१. तै. आन. ७-१ ॥—२. तै. आन. ८-१ ॥—३. कठ. २-८ ॥ ४. छा. ५ २ ६ ॥—५ ॥

नभ्युदययोस्सूचकः श्रुतेरवगम्यते१ "यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने" इति; २ "अथ स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति" इत्यादेश्च। स्वप्नाध्यायविदश्च स्वप्नं शुभाशुभयोस्सूचकमाचक्षते। सूचकत्वं च स्वसङ्कल्पायत्तस्य नोपपद्यते;तथाचाशुभस्यानिष्टत्वाच्छुभस्य सूचकमेव सृष्ट्वा पश्येत्। अतः स्वप्ने सृष्टिरीश्वरेणैव कृता ॥ ६ ॥

इति श्रीशारीरकमीमांसाभाष्ये सन्ध्याधिकरणम् ॥ १ ॥

---

( श्रीशारीरकमीमांसाभाष्ये तदभावाधिकरणम् ॥ २ ॥ )

---

## तदभावो नाडीषु तच्छ्रुतेरात्मनिच । ३ । २।७॥

इदानीं सुषुप्तिस्थानं परीक्ष्यते; इदमाम्नायते ३ "यत्रैतत्सुप्तस्समस्तस्सम्प्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सृप्तो भवति" इति; तथा ४ "अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते" इति; तथा-५ "यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति" इति। एवं नाड्यः पुरीतद्ब्रह्म च सुषुप्तिस्थानत्वेन श्रूयन्ते; किमेषां विकल्पः समुच्चयो वेति विशये निरपेक्षत्वप्रतीतेः युगपदनेकस्थानवृत्त्यसम्भवाच्च विकल्पः—

—( सिद्धान्तः )—

इति प्राप्त उच्यते-तदभावः-इति। तदभावः-स्वप्नाभावः: सुषुप्तिः नाडीषु पुरीतत्यात्मनि च भवति, एषां स्थानानां समुच्चय इत्यर्थः। कुतः?

१. छा. ५-२-८ ॥ २ ॥ ३. छा. ८-६-३ ॥ ४. बृ. ४-१-१६ ॥
५. छा. ६-८-१ ॥

तच्छ्रुतेः-त्रयाणां स्थानत्वश्रुतेः । न च कार्यभेदेन समुच्चये सम्भवति पाक्षिकबाधगर्भविकल्पो न्याय्यः । सम्भवति च प्रासादखट्वापर्यङ्कवन्नाड्यादीनां कार्यभेदः । तत्र नाडीपुरीततौ प्रासादखट्वास्थानीयौ; ब्रह्म तु पर्यङ्कस्थानीयम् । अतो ब्रह्मैव साक्षात्सुषुप्तिस्थानम् ॥ ७ ॥

## अतः प्रबोधोऽस्मात् । ३ । २ । ८ ॥

यतो ब्रह्मैव साक्षात्सुषुप्तिस्थानम्, अतः अस्मात्-ब्रह्मणः एषां जीवानां प्रबोधः श्रूयमाण उपपद्यते-१ "सत आगम्य न विदुः सत आगच्छामहे" इत्यादिषु ॥ ८ ॥

इति श्रीशारीरकमीमांसाभाष्ये तदभावाधिकरणम् ॥ २ ॥

---

(श्रीशारीरकमीमांसाभाष्ये कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥३॥)

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः । ३ । २ । ९ ॥

किं सुषुप्त एव प्रबोध समये उत्तिष्ठति, उतान्य इति संशये अस्य सकलोपाधिविनिर्मुक्तस्य ब्रह्मणि सम्पन्नस्य मुक्तादविलक्षणत्वेन प्राचीनशरीरेन्द्रियादिसम्बन्धाभावादन्यः—

—( सिद्धान्तः )—

इति प्राप्त उच्यते-स एव तु इति । तुशब्दः पक्षं व्यावर्तयति, स एवोत्तिष्ठति; कुतः? कर्मानुस्मृतिशब्दविधिभ्यः । कर्म तावत्-सुषुप्तेन पूर्वकृतं पुण्यपापरूपं तत्त्वज्ञानात्प्राक्तेनैव भोक्तव्यम् । अनुस्मृतिरपि-य एवाहं सुप्तः, स एव प्रबुद्धोऽस्मीति । शब्दोऽपि-सुषुप्तप्रबुद्धस्सएवेति दर्शयति-१"त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तथा भवन्ति" इति । विधयश्च मोक्षार्थास्सुषुप्तस्य मुक्तत्वेऽनर्थकास्स्युः । नचासौ सर्वोपाधिविनिर्मुक्त

---

१. छा. ६-१० २ ॥

आविर्भूतस्वरूपः—१"तद्यत्रैतत्सुप्तः" इति सुषुप्तं प्रकृत्य १"नाह खल्व यमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाश मेवापीतो भवति नाहमत्र भोग्यं पश्यामि" इति वचनात्। मुक्तस्य च २"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" ३ "स तत्र पर्येति जक्षत्क्रीडन्रममाणः"४"स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति" ५"सर्वं हि पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति सर्वज्ञत्वादि श्रूयते। अतस्सुप्तस्संसरन्नेव आयस्तसर्वकरणो ज्ञानभोगाद्यशक्तो विश्रमस्थानं परमात्मानमुपसम्पद्याश्वस्तः पुनर्भोगायोत्तिष्ठति ॥ ६ ॥

इति श्रीशारीरकमीमांसाभाष्ये कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥३॥

---

( श्रीशारीरकमीमांसाभाष्ये मुग्धाधिकरणम् ॥ ४ ॥ )

---

## मुग्धेऽर्धसम्पत्तिः परिशेषात् । ३ । २ । १० ॥

मुग्धमधिकृत्य चिन्त्यते; किमियं मूर्च्छा सुषुप्त्यादिष्वन्यतमावस्था, उतावस्थान्तरमिति विशये सुषुप्त्यादीनामन्यतमावस्थायामेव मूर्च्छाप्रसिद्ध्युपपत्तेरवस्थान्तरकल्पने प्रमाणाभावादन्यतमावस्था—

—( सिद्धान्तः )—

इति प्राप्त उच्यते—मुग्धेऽर्धसम्पत्तिः-इति। मुग्धे पुरुषे या तस्या वस्था, सा मरणायार्धसम्पत्तिः। कुतः? परिशेषात्— न तावत्स्वप्नजागरौ, ज्ञानाभावात्; निमित्तवैरूप्यादाकारवैरूप्याच्च न सुषुप्तिमरणे। निमित्तं हि मूर्च्छाया अभिघातादिः। पारिशेष्यान्मरणायार्धसम्पत्तिर्मूर्च्छा। मरणं हि सर्वप्राणदेहसम्बन्धोपरतिः; सूक्ष्मप्राणदेहसम्बन्धावस्थितिर्मूर्च्छा ॥

इति श्रीशारीरकमीमांसाभाष्ये मुग्धाधिकरणम् ॥ ४ ॥

---

१. छा. ८-११-२ ॥ २, छा. ८-३-४ ॥ ३.छा.८-१२-३ ॥ ४.छा. ७-२५-२ ॥ ५. छा. ७-२६-२ ॥

( श्रीशारीरकमीमांसाभाष्ये उभयलिङ्गाधिकरणम् ॥ ५ ॥ )

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ३।२।११

दोषदर्शनाद्वैराग्योदयाय जीवस्यावस्थाविशेषा निरूपिताः, इदानीं ब्रह्मप्राप्तितृष्णाजननाय प्राप्यस्य ब्रह्मणो निर्दोषत्वकल्याणगुणात्मकत्वप्रतिपादनायारभते। तत्र जागरस्वप्नसुषुप्तिमुग्ध्युत्क्रान्तिषु स्थानेषु तत्तत्स्थानप्रयुक्ता जीवस्य ये दोषाः, ते तदन्तर्यामिणः परस्य ब्रह्मणोऽपि तत्रतत्रावस्थितस्य सन्ति, नेति विचार्यते। किं युक्तम्? सन्तीति। कुतः? तत्तदवस्थशरीरेऽवस्थानात्। ननु १"सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्" २"स्थित्यदनाभ्यांच" इत्यादिषु परस्याकर्मवश्यत्वेन दोषाभाव उक्तः, तत्कथमकर्मवश्यस्य परस्य ब्रह्मणस्तत्तत्स्थानसम्बन्धाद्दोष उच्यते; इत्थमुच्यते—कर्माण्यपि देहसम्बन्धमापादयन्त्यपुरुषार्थजननानि भवन्ति—इति ३"देहयोगाद्वा" इत्यत्रोक्तम्; तच्च देहसम्बन्धस्यापुरुषार्थत्वेन भवति; इतरथा कर्माण्येव दुःखं जनयिष्यन्ति; किं देहसम्बन्धेन; अतोऽकर्मवश्यत्वे सत्यपि नानाविधाशुचिदेहसम्बन्धोऽपुरुषार्थ एव; अतस्तन्नियमनार्थं स्वेच्छया तत्प्रवेशेऽप्यपुरुषार्थसम्बन्धोऽवर्जनीयः; पूयशोणितादिमज्जनं हि स्वेच्छाकारितमप्यपुरुषार्थ एव। अतो यद्यपि जगदेककारणं सर्वज्ञत्वादिकल्याणगुणाकरं च ब्रह्म, तथापि ४" यः पृथिव्यां तिष्ठन् " ४ ' य आत्मनि तिष्ठन् " ४"यश्चक्षुषि तिष्ठन्" ४" यो रेतसि तिष्ठन् " इत्यादिवचनात् तत्रतत्रावस्थितस्य तत्तत्सम्बन्धरूपापुरुषार्थास्सन्ति—इति॥

( सिद्धान्तः )

एवं प्राप्ते प्रचक्ष्महे—न स्थानतोऽपि परस्य—इति। न पृथिव्या-

१. शारी. १-२-८ ॥—२. शारी. १-३-६ ।—३. शारी. ३-१-४ ॥ —४. बृ. ५ ७-३, २२, १८, २३ ॥

त्मादिस्थानतोऽपि परस्य ब्रह्मणः अपुरुपार्थगन्धस्सम्भवति । कुतः ? उभयलिङ्गं सर्वत्र हि—यतः सर्वत्र श्रुतिस्मृतिपु परं ब्रह्म उभयलिङ्गम उभयलक्षणमभिधीयते, निरस्तनिखिलदोपत्वकल्याणगुणाकरत्वलक्षणो-पेतमित्यर्थः । १"अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपि-पासस्सत्यकामस्सत्यसङ्कल्पः" २"समस्तकल्याणगुणात्मकोऽसौ स्वश-क्तिलेशाद्धृतभूतसर्गः" २"तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैक-राशिः। परः पराणां सकला न यत्र क्लेशादयस्सन्ति परावरेशे" ३'समस्तहेयरहितं विष्णवाख्यं परमं पदम्" इत्यादिश्रुतिस्मृतिभ्यः उभ-यलक्षणं हि ब्रह्मावगतम् ॥ ११ ॥

## भेदादितिचेन्न प्रत्येकमतद्वचनात् । ३ । २ । १२ ।

यथा जीवस्य प्रजापतिवाक्यावगतापहतपाप्मत्वाद्युभयलिङ्गस्यापि देवादिदेहयोगरूपावस्थाभेदादपुरुपार्थयोगः, तथाऽन्तर्यामिणः परस्या-पि स्वतोऽपहतपाप्मत्वाद्युभयलिङ्गस्य तत्तद्देवादिशरीरयोगरूपावस्थाभे-दादपुरुपार्थयोगोऽवर्जनीय इति चेत्-तन्न, प्रत्येकमतद्वचनात्—४"यः पृथिव्यां तिष्ठन्" ४"य आत्मनि तिष्ठन्" इत्यादिपु प्रतिपर्यायं ५"स त आत्माऽन्तर्याम्यमृतः" इत्यन्तर्यामिणोऽमृतत्ववचनेन तत्रतत्र स्वेच्छया नियमनं कुर्वतस्तत्तत्सम्बन्धप्रयुक्तापुरुपार्थप्रतिपेधात् । जीवस्य तु तत्स्व-रूपं तिरोहितमिति ६'पराभिध्यानात्तु तिरोहितम्" इत्यत्रोक्तम् । ननु स्वेच्छया कुर्वतोऽपि तत्तद्वस्तुस्वभावायत्तापुरुपार्थसम्बन्धोऽवर्जनीय इ-त्युक्तम्; नैतद्युक्तम्, नह्यचिद्वस्त्वपि स्वभावतोऽपुरुपार्थस्वरूपम्; कर्म-वश्यानां तु कर्मस्वभावानुगुण्येन परमपुरुपसङ्कल्पादेकमेव वस्तु कालभे-

१. छा. ८-१-५ ॥ — २. वि, पु. ६-५-८४, ८५ ॥ — ३. वि. पु. १-२२-५३ ॥—४. बृ. ५-७-३, २२ ॥—५. बृ. ५-७-३, २३ ॥—६. शारी. ३-२-५ ॥

देन पुरुषभेदेन च सुखाय दुःखाय च भवति; वस्तुस्वरूपप्रयुक्ते तु ताद्रूप्ये सर्वं सर्वदा सर्वस्य सुखायैव दुःखायैव वास्यात्; नचैवं दृश्यते; तथाचोक्तं–१"नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम। वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च। कोपाय च यतस्तस्माद्वस्तु वस्त्वात्मकं कुतः। तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते। तदेव कोपाय यतः प्रसादाय च जायते। तस्माद्दुःखात्मकं नास्ति न च कंचित्सुखात्मकम्" इति। अतो जीवस्य कर्मवश्यत्वात्तत्तत्कर्मानुगुण्येन तत्तद्वस्तुसम्बन्ध एवापुरुषार्थस्स्यात्; परस्य तु ब्रह्मणः स्वाधीनस्य स एव सम्बन्धस्तत्तद्विचित्रनियमनरूपलीलारसायैव स्यात्॥ १२॥

## अपिचैवमेके। ३। २। १३॥

अपिच एके शाखिनः एकस्मिन्नेव देहसंयोगे जीवस्यापुरुषार्थं परस्य तु तदभावं नियमनरूपैश्वर्यायत्तदीप्तियोगं च स्वशब्देनाधीयते–२"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति॥

अथ स्यात्–३"अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति ब्रह्मात्मकजीवानुप्रवेशपूर्वकं नामरूपव्याकरणमिति ब्रह्मणोऽपि तदात्मभूतस्य देवमनुष्यादिरूपत्वं तन्नामभाक्त्वंचास्ति, ततश्च४"ब्राह्मणो यजेत" इत्यादिविधिनिषेधशास्त्रगोचरत्वेन कर्मवश्यत्वमवर्जनीयमिति; तत्राह–

## अरूपवदेव हि तत्प्रधानत्वात्। ३। २। १४॥

देवादिशरीरानुप्रवेशे तेन रूपेण युक्तमप्यरूपवदेव तत् ब्रह्म-रूपरहिततुल्यमेव; जीववच्छरीरित्वनिबन्धनं कर्मवश्यत्वमस्य न विद्यत इ-

१. वि. पु. २-६. ४६-४७-४८॥—२. मु. ३-१-१॥—३. छा. ६-३-२॥ –४॥

त्यर्थः । कुतः ? निर्वाहकत्वेन प्रधानत्वात् । १"आकाशो ह वै नामरूपयो-र्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति सर्वानुप्रवेशेऽपि नामरूपकार्यास्पर्शेन नामरूपयोर्निर्वोढृत्वमेव ब्रह्मणः प्रतिपादयति । ननु तच्छरीरकत्वेन तदन्तर्यामित्वे कथमरूपवदिति रूपसम्बन्धरहिततुल्यत्वमुच्यते? इत्थं-यथा जीवस्य तत्तज्जन्यसुखदुःखभाक्त्वेन तत्तद्रूपसम्बन्धः, तथा तदभावात्परस्यारूपवत्त्वम्। विधिनिषेधशास्त्राण्यपि कर्मवश्यमेवाधिकुर्वन्ति;तस्मादरूपतुल्यमेव परं ब्रह्म । ततश्चान्तर्यामिरूपेणावस्थितमपि ब्रह्म निरस्तनिखिल-दोषत्वकल्याणगुणाकरत्वरूपोभयलिङ्गमेव ॥ १४ ॥

ननु च २ "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिभिर्निर्विशेषप्रकाशैकस्वरूपं ब्रह्मावगम्यते, अन्यत्तु सर्वज्ञत्वसत्यसङ्कल्पत्वजगत्कारणत्वसर्वान्तरात्मत्वसत्यकामत्वादिकं ३"नेतिनेति" इत्यादिभिः प्रतिषिध्यमानत्वेन मिथ्याभूतमित्यवगन्तव्यम् ; तत्कथं कल्याणगुणाकरत्वनिरस्तनिखिलदोषत्वरूपोभयलिङ्गत्वं ब्रह्मण इति; अत आह—

## प्रकाशवच्चावैयर्थ्यात् । ३ । २ । १५ ॥

यथा २ "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिवाक्यावैयर्थ्यात्प्रकाशस्वरूपत्वं ब्रह्मणोऽभ्युपगम्यते ; तथा सत्यसङ्कल्पत्वसर्वज्ञत्वजगत्कारणत्वसर्वात्मकत्वनिरस्तनिखिलाविद्यादिदोषत्वाद्यभिधायिवाक्यावैयर्थ्या-दुभयलिङ्गमेव ब्रह्म ॥ १५ ॥

## आह च तन्मात्रम् । ३ । २ । १६ ॥

किञ्च २" सत्यं ज्ञानमनन्तम् " इत्यादिवाक्यं ब्रह्मणः प्रकाशस्वरूपतामात्रं प्रतिपादयति, नान्यत्सत्यसङ्कल्पत्वादिकं वाक्यान्तरावगतं निषेधति; ३ " नेतिनेति " इति च निषेधविषयोऽनन्तरमेव वक्ष्यते ॥

## दर्शयति चाथो अपि स्मर्यते । ३ । २ । १७ ॥

१. छा. ८-१४-१ ॥—२. तै. आन. १-१ ॥—३. बृ. ४-३-६ ॥

दर्शयति च वेदान्तगणः कल्याणगुणाकरत्वं निरस्तनिखिलदोषत्वं च १ "तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम्। स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता नचाधिपः। न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"२ "यस्सर्वज्ञस्सर्ववित यस्य ज्ञानमयं तपः" ३ "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः" ३ "स एको ब्रह्मण आनन्दः"४ "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति ५ "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" इत्यादि। स्मर्यते च ६ "यो मामजमनादिं च वेत्ति लोकमहेश्वरम्" ७ "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" ८ "मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम्। हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते" ९ "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" १० "सर्वज्ञस्सर्वकृत्सर्वशक्तिज्ञानबलर्धिमान्। अन्यूनश्चाप्यवृद्धिश्च स्वाधीनो नादिमान्वशी। क्लमतन्द्रीभयक्रोधकामादिभिरसंयुतः। निरवद्यः परः प्राप्तेर्निरधिष्ठोऽक्षरः क्रमः" इत्यादिः। अतस्सर्वत्रावस्थितस्यापि ब्रह्मण उभयलिङ्गत्वात्तत्तत्स्थानप्रयुक्ता दोषा न परं ब्रह्म स्पृशन्ति ॥ १७ ॥

## अत एवचोपमा सूर्यकादिवत् । ३ । २ । १८ ॥

यतो नानाविधेषु स्थानेषु स्थितस्यापि परस्य ब्रह्मणो न तत्प्रयुक्तदोषभाक्त्वम्, अत एव जलदर्पणादिप्रतिबिम्बितसूर्यादिवत्परमात्मा तत्रतत्रावस्थितोऽपि निर्दोष इति शास्त्रैरुपमा क्रियते-११ "आकाशमेकं हि यथा घटादिषु पृथग्भवेत्। तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान्।

१, श्वे, ६-७-८ ॥-२, मु, १-१-९ ॥-३, तै. आ, ८-४ ॥-४, तै, आ. ९-१ ॥-५, श्वे, ६-१९ ॥-६, गी, १०-३ ॥-७, गी, १०-४२ ॥-८, गी, ९-१० ॥-९, गी, १५-१७ ॥-१०, वि, पु, ५-१-४७-४८-४९ ॥-११, याज्ञवल्क्य, प्रायश्चित्त अध्यात्मप्र. १४४ ॥

एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इत्यादिषु ॥ १८ ॥

अत्र चोदयति—

## अम्बुवदग्रहणात्तु न तथात्वम् । ३ । २ । १९ ॥

तुशब्दोऽक्षर्यं द्योतयति। अम्बुवदिति सप्तम्यन्तात् वतिः। अम्बुदर्पणादिषु यथा सूर्यमुखादयो गृह्यन्ते; न तथा पृथिव्यादिषु स्थानेषु परमात्मा गृह्यते। अम्ब्वादिषु हि सूर्यादयो भ्रान्त्या तत्रस्था इव गृह्यन्ते, न परमार्थतस्तत्रस्थाः। इह तु २"यः पृथिव्यां तिष्ठन्" २ "योऽप्सु तिष्ठन्" २ 'य आत्मनि तिष्ठन्" इत्येवमादिना परमार्थत एव परमात्मा पृथिव्यादिषु स्थितो गृह्यते। अतस्सूर्यादेरम्बुदर्पणादिप्रयुक्तदोषाननुपङ्गस्तत्रतत्र स्थित्यभावादेव। अतो न तथात्वं--दार्ष्टान्तिकस्य न दृष्टान्ततुल्यत्वमित्यर्थः ॥ १९ ॥

परिहरति -

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च । ३ । २ । २० ॥

पृथिव्यादिस्थानान्तर्भावात्स्थानिनः परस्य ब्रह्मणः स्वरूपतो गुणतश्च पृथिव्यादिस्थानगतवृद्धिह्रासादिदोषभाक्त्वमात्रं सूर्यादिदृष्टान्तेन निवर्त्यते। कथमिदमवगम्यते? उभयसामञ्जस्यादेवम्—उभयदृष्टान्तसामञ्जस्यादेवमिति निश्चीयते। १"आकाशमेकंहि यथाघटादिषु पृथग्भवेत्" "जलाधारेष्विवांशुमान्" इति दीपवत्स्वनेकेषु वस्तुषु वस्तुतोऽवस्थितस्याकाशस्य, वस्तुतोऽनवस्थितस्यांशुमतश्चोभयस्य दृष्टान्तस्योपादानं हि परमात्मनः पृथिव्यादिगतदोषभाक्त्वनिवर्तनमात्रे प्रतिपाद्ये समञ्जसं भवति।

---

१. याज्ञवल्क्य. प्रायश्चित्त. अध्यात्मप्र. १४४ ॥—२. बृ. ५-७-३, ४, २२ ॥

घटकरकादिषु यथा वृद्धिह्रासभाक्षु पृथक्पृथक्संयुज्यमानमप्याकाशं वृद्धिह्रासादिदोषैर्न स्पृश्यते; यथा च जलाधारेषु विषमेषु दृश्यमानोंऽशुमान् तद्गतवृद्धिह्रासादिभिर्न स्पृश्यते; तथाऽयं परमात्मा पृथिव्यादिषु नानाकारेष्वचेतनेषु चेतनेषु च स्थितस्तत्तद्गतवृद्धिह्रासादिदोषैरसंस्पृष्टस्सर्वत्र वर्तमानोऽप्येक एवास्पृष्टदोषगन्धः कल्याणगुणाकर एव । एतदुक्तं भवति -यथा जलादिषु वस्तुतोऽनवस्थितस्यांशुमतो हेत्वभावाज्जलादिदोषानभिष्वङ्गः, तथा पृथिव्यादिष्ववस्थितस्यापि परमात्मनो दोषप्रत्यनीकाकारतया दोषहेत्वभावान्न दोषसम्बन्धः-इति । दर्शनाच्च-दृश्यते चैवं सर्वात्मना साधर्म्याभावेऽपि विवक्षितांशसाधर्म्याद्दृष्टान्तोपादानं, सिंह इव माणवक इत्यादौ । अतः स्वभावतो निरस्तनिखिलाज्ञानादिदोषगन्धस्य समस्तकल्याणगुणाकरस्य पृथिव्यादिस्थानतोऽपि न दोषसम्भवः ॥२०॥

अथ स्यात्-१"द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तमेव च" इति प्रकृत्य समस्तं स्थूलसूक्ष्मरूपं प्रपञ्चं ब्रह्मणो रूपत्वेन परामृश्य २"तस्य ह वा एतस्य पुरुषस्य रूपं यथा माहारजनं वासः" इत्यादिना आकारविशेषं चाभिधाय ३"अथात आदेशो नेतिनेति नह्येतस्मादितिनेत्यन्यत्परमस्ति" इति सर्वं प्रकृतं ब्रह्मणः प्रकारमितिशब्देन परामृश्य तत्सर्वं प्रतिषिध्य सर्वविशेषाधिष्ठानं सन्मात्रमेव ब्रह्म; विशेषास्त्वेवंविधं स्वस्वरूपमजानता ब्रह्मणा कल्पिता इति दर्शयति; अतः कथमुभयलिङ्गत्वं ब्रह्मण इति—अत्राह—

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततोब्रवीति च भूयः । ३ । २ । २१ ॥

नैतदुपपद्यते—यद्ब्रह्मणः प्रकृतविशेषवत्त्वं ३"नेतिनेति" इति प्रतिषिध्यत-इति, तथा सति भ्रान्तजल्पितायमानत्वात् । न हि ब्रह्मणो विशेषणतया प्रमाणान्तराप्रज्ञातं सर्वं तद्विशेषणत्वेनोपदिश्य पुनस्तदेवा-

१. बृ. ४-३-१ ॥—२. बृ. ४-३-६ ॥ – ३. बृ. ४-३-६ ॥

नुन्मत्तः प्रतिषेधति। यद्यपि निर्दिश्यमानेषु केचन पदार्थाः प्रमाणान्तरप्रसिद्धाः; तथापि तेषां ब्रह्मणः प्रकारत्वमप्रज्ञातमेव, इतरेषां तु स्वरूपं ब्रह्मणः प्रकारत्वं चाज्ञातम्। अतस्तेषामनुवादासम्भवादत्रैवोपदिश्यन्ते। अतस्तन्निषेधो नोपपद्यते। यस्मादेवं; तस्मात्प्रकृतैतावत्त्वं ब्रह्मणः प्रतिषेधतीदं वाक्यम्। ये ब्रह्मणो विशेषाः प्रकृताः; तद्विशिष्टतया ब्रह्मणः प्रतीयमानेयत्ता १"नेतिनेति" इति प्रतिषिध्यते। नेतिनेति—नैवं नैवम्, उक्तप्रकारमात्रविशिष्टं न भवति ब्रह्म; उक्तप्रकारविशिष्टतया या ब्रह्मण इयत्ता प्रकृता; साऽत्र इतिशब्देन परामृश्यत इत्यर्थः। यतश्च निषेधानन्तरं ब्रह्मणो भूयो गुणजातं ब्रवीति, अतश्च प्रकृतविशेषणयोगित्वमात्रं ब्रह्मणः प्रतिषेधति। ब्रवीति हि भूयो गुणजातं-१"न ह्येतस्मादितिनेत्यन्यत्परमस्त्यथ नामधेयं सत्यस्यसत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्" इति। अयमर्थः—इति नेति यद्ब्रह्म प्रतिपादितम्, तस्मादेतस्मादन्यद्वस्तु परं नह्यस्ति, ब्रह्मणोऽन्यन् स्वरूपतो गुणतश्चोत्कृष्टं नास्तीत्यर्थः। तस्य च ब्रह्मणः सत्यस्य सत्यमिति नामधेयम्। तस्य च निर्वचनं १"प्राणा वै सत्यं तेषामेष सत्यम्" इति। प्राणशब्देन प्राणसाहचर्याज्जीवाः परामृश्यन्ते; ते तावत्सत्यम्, वियदादिवत्स्वरूपान्यथाभावरूपपरिणामाभावात्; तेषामेष सत्यम्-तेभ्योऽप्येष परमपुरुषस्सत्यम्, जीवानां कर्मानुगुण्येन ज्ञानसङ्कोचविकासौ विद्येते; परमपुरुषस्य त्वपहतपाप्मनस्तौ न विद्येते; अतस्तेभ्योऽप्येष सत्यम्। अतश्चैवं वाक्यशेषोदितगुणजातयोगात् १"नेतिनेति" इति ब्रह्मणस्सविशेषत्वं न प्रतिषिध्यते; अपि तु पूर्वप्रकृतेयत्तामात्रम्। अत उभयलिङ्गमेव परं ब्रह्म ॥ २१ ॥

ब्रह्मणः प्रमाणान्तरागोचरत्वेन तत्सम्बन्धितया मूर्तामूर्तादिरूपानुवादेन तन्निषेधासम्भवात्प्रकृतेयत्ताप्रतिषेध उक्तः; तदेव प्रमाणान्तरागोचरत्वं द्रढयति—

१. बृ. ४-३-६ ॥—

## तदव्यक्तमाह हि । ३ । २ । २२ ॥

तत्—ब्रह्म प्रमाणान्तरेण न व्यज्यते. आह हि शास्त्रं १"न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्" २"न चक्षुषा गृह्यते नापि वाचा" इत्यादि ॥

हेत्वन्तरं चाह—

## अपि संराधने प्रत्यक्षानुमानाभ्याम् । ३ । २ । २३ ॥

अपि च संराधने-सम्यक्प्रीणने भक्तिरूपापन्ने निदिध्यासन एवास्य साक्षात्कारः; नान्यत्रेति श्रुतिस्मृतिभ्यामवगम्यते । ३"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् २"ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः" इति श्रुतिः । स्मृतिरपि ४"नाहं वेदैर्न तपसा न दानेन न चेज्यया" ४"भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप" इति । भक्तिरूपापन्नमेवोपासनं संराधनम्-तस्य प्रीणनमिति पूर्वमेवोक्तम् । अतो निदिध्यासनाय ब्रह्मस्वरूपमुपदिशत् ५"द्वे वाव ब्रह्मणः" इत्यादिशास्त्रं ब्रह्मणो मूर्तामूर्तरूपद्वयादिविशिष्टतां प्रागसिद्धां नानुवदितुं क्षमम् ॥ २३ ॥

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् । ३ । २ । २४ ।

इतश्च प्रकृतैतावत्त्वमेव प्रतिषेधति; न मूर्तामूर्तादिविशिष्टत्वम्; यतस्साक्षात्कृतपरब्रह्मस्वरूपाणां वामदेवादीनां दर्शने प्रकाशादिवत् ज्ञानानन्दादिस्वरूपवन्मूर्तादिप्रपञ्चविशिष्टताया अपि ब्रह्मगुणत्वावैशे-

१. तै. नारा. १-अनु. १० ॥—२. मु. ३-१-८ ॥—३. मु. ३-२-३ ।—४. गी. ११-५३. ५४ ॥—५ बृ. ४-३-१ ॥

प्यं प्रतीयते-१"तद्धेतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च" इत्यादि। ब्रह्मस्वरूपभूतप्रकाशानन्दादिश्च तेषां वामदेवादीनां संराधनात्मके कर्मण्यभ्यासादुपलभ्यते। तद्वद्याभ्यस्तसंराधनानां तेषां मूर्तामूर्तादिविशिष्टत्वमप्यविशेषेण प्रतीयत इत्यर्थः ॥ २४ ॥

उक्तं ब्रह्मण उभयलिङ्गत्वमुपसंहरति—

## अतोऽनन्तेन तथाहि लिङ्गम् । ३ । २ । २५ ॥

अतः—उक्तैर्हेतुभिर्ब्रह्मणः अनन्तेन कल्याणगुणगणेन विशिष्टत्वं सिद्धम्। तथा हि सत्युभयलिङ्गं ब्रह्मोपपन्नं भवति ॥ २५ ॥

इति श्रीशारीरकमीमांसाभाष्ये उभयलिङ्गाधिकरणम् ॥ ५ ॥

---

( श्रीशारीरकमीमांसाभाष्ये अहिकुण्डलाधिकरणम् ॥६॥ )

---

## उभयव्यपदेशात्त्वहिकुण्डलवत् । ३ । २ ।२६ ॥

मूर्तामूर्तात्मकस्य अचित्प्रपञ्चस्य ब्रह्मणो रूपत्वं २"द्वे वाव ब्रह्मणो रूपे" इत्यादिनोपदिश्यते। ३"अथात आदेशो नेतिनेति" इति मूर्तामूर्तादिवस्तुरूपतया ब्रह्मण इयत्ता प्रतिषिध्यते। ३"नह्येतस्मादितिनेत्यन्यत्परमस्ति" इति ब्रह्मणोऽन्यदुत्कृष्टं नह्यस्तीति प्रतिपादितम्। तदुपपादनाय ३"अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्" इति प्राणशब्दनिर्दिष्टेभ्यश्चेतनेभ्योऽप्येष सत्यमिति कदाचिदपि ज्ञानादिसङ्कोचाभावादुक्तम्। तथा ४"प्रधानक्षेत्रज्ञपतिर्गुणेशः" ५"पतिं विश्वस्याऽऽत्मेश्वरं" ७"नित्यो नित्यानां चेतनश्चेतनानाम्" इत्यादिश्रुतेश्चायमर्थोऽवगम्यते।

---

१. बृ. ३-४-१० ॥—२. ३ . बृ. २-३ १।६ ॥—४. श्वे. ६-१६ ॥—
५- तै. ना. ११-अनु. ॥—६. श्वे. ६-१३ ॥

तस्याचिद्वस्तुनो ब्रह्मरूपत्वप्रकार इदानीं चिन्त्यते, ब्रह्मणो निर्दोषत्वसिद्ध्यर्थम्–किमस्याचिद्वस्तुनो ब्रह्मरूपत्वमहिकुण्डलन्यायेन, उत प्रभाप्रभावतोरिवैकजातियोगेन, उत जीवस्येव विशेषणविशेष्यतयांशांशिभावेन-इति। इह स्थाप्यमानं विशेषणविशेष्यभावमङ्गीकृत्य १"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" २"तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यत्र सूक्ष्मचिदचिद्वस्तुविशिष्टाद्ब्रह्मणः स्थूलचिदचिद्वस्तुविशिष्टस्योत्पत्तिरनन्यत्वं चोक्तम्। किं युक्तम्? अहिकुण्डलवदिति; कुतः? उभयव्यपदेशात् ३"ब्रह्मैवेदं सर्वम्" ४"आत्मैवेदं सर्वम्" इति तादात्म्यव्यपदेशात्, ५"हन्ताहमिमास्तिस्रो देवताः" अनेन जीवेनाऽत्मनाऽनुप्रविश्य" इत्यादिभेदव्यपदेशाच्च अहेः कुण्डलभाव*ऋजुभाववत्, तस्यैव ब्रह्मणस्संस्थानविशेषा एवाचिद्वस्तूनि ।२६॥

## प्रकाशाश्रयवद्वा तेजस्त्वात् । ३ । २ । २७ ॥

वाशब्दः पक्षव्यावृत्त्यर्थः; ब्रह्मस्वरूपस्यैवाचिद्रूपेणावस्थाने भेदश्रुतयो ब्रह्मणोऽपरिणामित्ववादिन्योऽपि बाधिता भवेयुः; अतो यथा तेजस्त्वेन प्रभातदाश्रययोरपि तादात्म्यम्; एवमचित्प्रपञ्चस्य ब्रह्मणो रूपत्वमित्यर्थः ॥ २७ ॥

## पूर्ववद्वा । ३ । २ । २८ ॥

वाशब्दः पक्षद्वयव्यावृत्त्यर्थः; एकस्यैव द्रव्यस्यावस्थाविशेषयोगे ब्रह्मस्वरूपस्यैवाचिद्द्रव्यरूपत्वादुक्तदोषादनिर्मोक्षः। अथ प्रभातदाश्रययोरिवाचिद्ब्रह्मणोर्ब्रह्मत्वजातियोगमात्रम्; एवं तर्ह्यश्वत्वगोत्ववद्ब्रह्मापीश्वरे चिदचिद्वस्तुनोश्चानुवर्तमानं सामान्यमिति सकलश्रुतिस्मृतिव्यवहारविरोधः। पूर्ववदेव ६"अंशो नानाव्यपदेशात्" ७"प्रकाशादिवत्तु नैवं परः"

---

१. शारी. १-४-२३ ॥—२. शारी. २-१-१५ ॥—३. बृ. ४-५-१ ॥—४. छा. ७-२५-२ ॥—५. छा. ६-३-२ ॥—*रज्जु. पा ॥—६. शारी. २-३-४२ ॥— ७, शारी. २-३-४५ ॥

इति जीववत्पृथक्सिद्ध्यनर्हविशेषणत्वेनाचिद्वस्तुनो ब्रह्मांशत्वम्; विशिष्टवस्त्वेकदेशत्वेनाभेदव्यवहारो मुख्यः, विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन भेदव्यवहारो मुख्यः, ब्रह्मणो निर्दोषत्वं च रक्षितम्। तदेवं प्रकाशजातिगुणशरीराणां मणिव्यक्तिगुण्यात्मनः = प्रत्यपृथक्सिद्धिलक्षणविशेषणतया यथांशत्वम्; तथेह जीवस्याचिद्वस्तुनश्च ब्रह्म प्रत्यंशत्वम् ॥२८

## प्रतिषेधाच्च । ३ । २ । २९ ॥

१"स वा एष महानज आत्माऽजरोऽमरः२"नास्य जरयैतज्जीर्यति' इत्यादिभिः ब्रह्मणोऽचिद्धर्मप्रतिषेधाच्च विशेषणविशेष्यत्वेनैवांशांशिभाव इत्यर्थः। अतस्सूक्ष्मचिदचिद्वस्तुविशिष्टं कारणभूतं ब्रह्म, स्थूलचिदचिद्वस्तुविशिष्टं कार्यभूतं ब्रह्मेति कारणात्कार्यस्यानन्यत्वम्, कारणभूतब्रह्मविज्ञानेन कार्यस्य ज्ञाततेत्यादि सर्वमुपपन्नम्; ब्रह्मणो निर्दोषत्वं च रक्षितम्। ब्रह्मणो निर्दोषत्वेन कल्याणगुणाकरत्वेनचोभयलिङ्गत्वमपि सिद्धम् ॥ २६ ॥

इति श्रीशारीरकमीमांसाभाष्ये अहिकुण्डलाधिकरणम् ॥ ६ ॥

———

( श्रीशारीरकमीमांसाभाष्ये पराधिकरणम् ॥ ७ ॥ )

——:o:——

## परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः । ३ । २ । ३०

इदानीमस्मात्परस्माज्जगन्निमित्तोपादानरूपपरमकारणात्परब्रह्मणः परमपि किञ्चित्तत्वमस्तीति कैश्चिद्धेत्वाभासैराशङ्क्य निराक्रियते, अस्योपास्यस्य निर्दोषत्वानवधिकातिशयासंख्येयकल्याणगुणाकरत्वस्थेम्ने। त-

१. बृ. ६-४-२५ ॥—२. छा. ८-१-५ ॥—

त्रेयमाशङ्का-यदिदं परं ब्रह्मोभयलिङ्गम्, एतस्मान्निखिलजगत्कारणात्परमपि किञ्चित्तत्त्वमस्ति। कथम्? १'अथ य आत्मा स सेतुर्विधृतिः' इत्यस्य परस्य सेतुत्वव्यपदेशात्। सेतुशब्दस्य च लोके कूलान्तरप्राप्तिहेतौ प्रसिद्धेरितोऽन्यदनेन प्राप्तव्यमस्तीति गम्यते। तथा २"एतं सेतुं तीर्त्वाऽन्धस्सन्ननन्धो भवति"इति तरितव्यता चास्याभिधीयते,अतश्चान्यत्प्राप्यमस्ति। उन्मानव्यपदेशाच्च-उन्मितं-परिमितम् इदं परं ब्रह्म, ३"चतुष्पाद्ब्रह्म"४"षोडशकलम्"इत्युन्मानव्यपदेशात्। सचायमुन्मानव्यपदेशस्तेन सेतुना प्राप्यस्यानुन्मितस्यास्तितां द्योतयति। तथा सम्बन्धव्यपदेशश्च सेतुसेतुमतोः प्रापकत्वप्राप्यत्वलक्षणो दृश्यते, ५ "अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्" ६'अमृतस्यैष सेतुः" इति। अतश्च परात्परमस्ति। भेदेन च परात्परं व्यपदिश्यते, ७ "परात्परं पुरुषमुपैति" ८ "परात्परं यन्महतो महान्तम्" इतिच। तथा ९"तेनेदं पूर्णं पुरुषेण सर्वम्" १०"ततो यदुत्तरतरं तद्रूपमनामयम्" इति। अत एभ्यो हेतुभ्यः परस्माद्ब्रह्मणः परमपि किञ्चिदस्तीति गम्यत इति॥ ३०॥

—( सिद्धान्तः )—

एवं प्राप्तेऽभिधीयते—

## सामान्यात्तु। ३। २। ३१॥

तुशब्दः पक्षं व्यावर्तयति; यत्तावदुक्तं सेतुव्यपदेशात्परापरमस्तीति; तन्नोपपद्यते। न ह्ययमत्र किञ्चित्प्राप्यं प्रति सेतुरुच्यते, ११"एषां लोकानामसम्भेदाय" इति सेतुसामान्येन सर्वलोकासङ्करकरत्वश्रुतेः। सिनोति-बध्नाति स्वस्मिन् सर्वं चिदचिद्वस्तुजातमसङ्कीर्णमिति सेतुरुच्यते।

१. छा. ८-४-१॥ २. छा. ८-४-२॥ ३. छा. ३-१८-२॥ ४.प्रश्न ६-१॥ ५. श्वे. ६-१९॥ ६. मु. २-२-५॥ ७. मु. ३-२-८॥ ८. तै. नारा. १-५.॥ ९. श्वे. ३-९.॥ १०. श्वे. ३-१०॥ ११.छा.८-४-१,२

१"एतं सेतुं तीर्त्वा" इति तरतिश्च प्राप्तिवचनः। यथा 'वेदान्तं तरति' इति ॥ ३१ ॥

## बुद्ध्यर्थः पादवत् । ३ । २ । ३२ ॥

योऽयं २"चतुष्पाद्ब्रह्म" ३"षोडशकलम्" ४ 'पादोऽस्यविश्वा भूतानि" इत्युन्मानव्यपदेशः; स बुद्ध्यर्थः--उपासनार्थः, ५"सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिभिर्जगत्कारणस्य ब्रह्मणोऽपरिच्छिन्नत्वावगमात्स्वत उन्मितत्वासम्भवात्। जगत्कारणत्वं हि तस्यैव श्रूयते ६"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" ७"सोऽकामयत बहु स्यां प्रजायेयेति" इति। अतो यथा ८"वाक्पादः प्राणः पादः चक्षुः पादो मनः पादः" इत्यादिना ब्रह्मणो वागादिपादव्यपदेश उपासनार्थः एवमयमपि ॥ ३२ ॥

स्वयमनुन्मितस्य कथमुपासनार्थतयाऽप्युन्मानसम्भवः; तत्राह—

## स्थानविशेषात्प्रकाशादिवत् । ३ । २ । ३३ ॥

प्रतिपन्नवागादिस्थानविशेषरूपोपाधिभेदात्तत्सम्बन्धितयोन्मितत्वानुसन्धानं सम्भवति; यथा प्रकाशाकाशादेर्विततस्य वातायनघटादिस्थानभेदैः परिच्छिन्नयानुसन्धानसम्भव इत्यर्थः ॥ ३३ ॥

## उपपत्तेश्च । ३ । २ । ३४ ॥

यदुक्तम्-९"अमृतस्यैषसेतुः" इति प्राप्यप्रापकसम्बन्धव्यपदेशात्प्रापकात्परं प्राप्यमस्तीति; तन्न, प्राप्यस्य परमपुरुषस्य स्वप्राप्तौ स्वस्यैवोपायत्वोपपत्तेः। १०' नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इत्यनन्योपायत्वश्रवणात् ॥ ३४ ॥

---

१. छा. ८-४-१, २ ॥ २. छा. ३-१८-२ ॥ ३. प्रश्न. ६-१ ॥ ४. पुरुष सू. ॥ ५. तै, आन. १ अनु. १ ॥ ६. तै. आन. १ अनु. २ ॥ ७. तै. आन, ६ अनु. २ ॥ ८. छा. ३-१८-२ ॥ ९. मु. २. २-५॥ १०. मु. ३. २-३ ॥

## तथाऽन्यप्रतिषेधात् ३ । २ । ३५ ॥

यत्पुनरुक्तं–१"ततो यदुत्तरतरं" २ "परात्परं पुरुषम्" ३ "अक्षरात्परतः परः" इत्यादिभेदव्यपदेशात्परात्परमस्तीति–तन्नोपपद्यते, तत्रैव ततोऽन्यस्य परस्य प्रतिषेधात्, ४ 'यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्" इति। यस्मादपरं परं नास्ति किञ्चित्–न केनापि प्रकारेण परमस्तीत्यर्थः। तथाऽन्यत्रापि ५ "न ह्येतस्मादितिनेत्यन्यत्परमस्ति" इति–इति नेति निर्दिष्टादेतस्माद्ब्रह्मणोऽन्यत्परं न ह्यस्तीत्यर्थः। तथा ६"न तस्येशे कश्चन तस्य नाम महद्यशः" इति। तद्धि जगदुपादानकारणतयाऽनन्तरमुक्तं ७"सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" ८"स आपः प्रदुघे उभे इमे" इत्यादिना। ८ "अद्भ्यस्सम्भूतो हिरण्यगर्भ इत्यष्टौ"इति च जगत्कारणं पुरुषमेनं प्रत्यभिज्ञापयति।९'ततो यदुत्तरतरम्" इति किमुच्यत इति चेत्—पूर्वत्र १०"वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्, तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति परस्य ब्रह्मणो महापुरुषस्य वेदनमेवामृतत्वसाधनम्,नान्योऽमृतत्वस्य पन्था इत्युपदिश्य तदुपपादनाय ११"यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" इति पुरुषस्य परत्वं, तद्व्यतिरिक्तस्य परत्वासम्भवञ्च प्रतिपाद्य ९'ततो यदुत्तरतरं तदरूपमनामयम्य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति' इति पूर्वोक्तमर्थं हेतुतो निगमयति–यदुत्तरतरं पुरुषतत्त्वम्, तदेवारूपमनामयं यतः,ततो य एतत्पुरुषतत्त्वं विदुः, त एवामृता भवन्ति, अथेतरे दुःखमेवापियन्ति–इति। अन्यथोपक्रमविरोधोऽनन्तरोक्तिविरोधश्च।१२'परात्परं पुरुषमुपैति

---

१. श्वे, ३. ब, १० ॥ २. मु. ३–२–८ ॥ ३. मु. २-१-२ ॥ ४. श्वे. ३–९ ॥ ५. बृ. २–३–६ ॥ ६. तै. नारा. १–९ ॥ ७. तै. नारा. १–८ ॥ ८. तै. नारा. १–११ ॥ ९. श्वे. ३–१० ॥ १०. ११, श्वे. ३-८-९ ॥ १२. मु. ३–२–८ ॥

दिव्यम्" इति पूर्वत्र १"अक्षरात्परतः परः" इति अक्षरात् अव्याकृतान यः परः-समष्टिपुरुषः; तस्मात्परो योऽदृश्यत्वादिगुणकस्सर्वज्ञः परमपुरुषः, स एवेहापि 'परात्परः' इति समष्टिपुरुषात्परत्वेनोच्यते ॥ ३५ ॥

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ।३।२।३६॥

अनेन ब्रह्मणा, सर्वगतत्वम्-सर्वस्य जगतो व्याप्तत्वम्, आयामशब्दादिभ्यः सर्वव्याप्तिवाचिशब्देभ्योऽवगम्यमानमस्मात्परं नास्तीत्यवगमयति आयामशब्दस्तावत् २ 'तेनेदं पूर्णं पुरुषेण सर्वम्" ३"यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्चतत्सर्वं व्याप्य नारायणः स्थितः" ४"नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनिं परिपश्यन्ति धीराः"। आदिशब्दात् ५"ब्रह्मैवेदं सर्वम्" ६"आत्मैवेदं सर्वम्" इत्यादयो गृह्यन्ते। अत इदं परं ब्रह्मैव सर्वस्मात्परम् ॥ ३६ ॥

इति श्रीशारीरकमीमांसाभाष्ये पराधिकरणम् ॥ ७ ॥

---

( श्रीशारीरकमीमांसाभाष्ये फलाधिकरणम् ॥ ८ ॥ )

---

## फलमत उपपत्तेः । ३ । २ । ३७ ॥

उक्तमुपासिसिपोपजननार्थं जीवस्य सर्वावस्थासु सदोषत्वं, प्राप्यस्य च परमपुरुषस्य निर्दोषत्वं, कल्याणगुणाकरत्वं सर्वस्मात्परत्वञ्च: अतः परमुपासनं विवक्षन्नुपासीनानां परस्मादेवास्मात्पुरुषात्तत्प्राप्तिरूपमपवर्गाख्यं फलमिति सम्प्रति ब्रूते। तुल्यन्यायतया शास्त्रीयमैहिकामुष्मिकमपि फलम्, अत एव परस्मात्पुरुषाद्भवतीति सामान्येन 'फलमतः' इत्युच्यते। कुत एतत्? उपपत्तेः-स एव हि सर्वज्ञस्सर्वशक्तिर्महोदारो यागदानहोमादिभिरुपासनेन चाराधित ऐहिकामुष्मिकभोगजातं स्वस्वरूपावा-

---

१. मु. २-१-२॥—२. श्वे. ३-९॥—३. नारायण १-१३॥—४. मु.१-१-६॥ —५. बृ. ४-५-१ ॥—६, छा. ७-२५-२ ॥

निरूपमपवर्गं च दातुमीष्टे; नह्यचेतनं कर्म क्षणध्वंसि कालान्तरभाविफल साधनं भवितुमर्हति ॥ ३७ ॥

## श्रुतत्वाच्च । ३ । २ । ३८ ॥

१"स वा एष महानज आत्माऽन्नादो वसुदानः" २"एष ह्येवानन्दयाति" इति भोगापवर्गरूपं फलमयमेव ददातीति हि श्रूयते ॥ ३८ ॥

सम्प्रति पूर्वपक्षमाह—

## धर्मं जैमिनिरत एव । ३ । २ । ३९ ॥

अत एव-उपपत्तेः, शास्त्राच्च यागदानहोमोपासनरूपधर्ममेव फलप्रदं जैमिनिराचार्यो मन्यते । लोके हि कृष्यादिकर्म, दानादिकं च कर्म साक्षाद्वा, परम्परयावा स्वयमेव फलसाधनं दृष्टम्; एवं वेदेऽपि यागदानहोमादीनां साक्षात्फलसाधनत्वाभावेऽपि परम्परया अपूर्वद्वारेण फलसाधनत्वमुपपद्यते । तथा ३ 'यजेत स्वर्गकामः" इत्यादिशास्त्रमपि सिषाधयिषितस्वर्गस्य कर्तव्यतया यागाद्यभिदधदन्यथानुपपत्त्या अपूर्वद्वारेण फलसाधनत्वमवगमयति ॥ ३९ ॥

## पूर्वं तु बादरायणो हेतुव्यपदेशात् । ३ । २ । ४० ॥

तु शब्दः पक्षव्यावृत्त्यर्थः; पूर्वोक्तं परमपुरुषस्यैव फलप्रदत्वं भगवान्बादरायणो मन्यते । कुतः ? हेतुव्यपदेशात्-४"यज-देवपूजायाम्"इति देवताराधनभूतयागाद्याराध्यभूताग्निवाय्वादिदेवतानामेव तत्तत्फलहेतुतया तस्मिंस्तस्मिन्नपि वाक्ये व्यपदेशात् ५"वायव्यं श्वेतमा लभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इत्यादिषु कामिनस्सिषाधयिषितफलसाधनत्वप्रकारोपदेशोऽपि विध्यपेक्षित एवेति नातत्परत्वशङ्का युक्ता । एवमपेक्षितेऽपि फलसाधनत्वप्रकारे शब्दादेवावगते सति तत्परित्यागमश्रुतापूर्वादिपरिकल्पनं च प्रामाणिका

१. बृ. ६-४-२४ ॥—२. तै. आनं- ७-१ ॥—३. यजुषि. २-२-१ ॥
४. धातु. भ्वादि. ॥—५. यजु. २-कां. १-प्र. १-पं ॥

न सहन्ते । लिङादयोऽपि देवताराधनभूतयागादेः प्रकृत्यर्थस्य कर्तृव्यापार-साध्यतां व्युत्पत्तिसिद्धां शब्दानुशासनानुमतामभिदधति; नान्यदलौकिकमिति प्रागेवोक्तम् । तदेवं १"वायुर्वै क्षेपिष्ठा देवता" इत्यादिशब्दाद्वाय्वादीनां फलप्रदत्वमवगम्यते । वाय्वाद्यात्मना च परमपुरुष एवाराध्यतया फलप्रदायित्वेन चावतिष्ठत इति श्रूयते २"इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः । तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः" इति । अन्तर्यामिब्राह्मणे च ३"यो वायौ तिष्ठन्यस्य वायुश्शरीरम्" ४"योऽग्नौ तिष्ठन्" ४"य आदित्ये तिष्ठन्" इत्यादि श्रूयते । स्मर्यते च ५"यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान् मयैव विहितान् हि तान्" इति, ६"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेवच" इति । प्रभुरिति-फलप्रदायीत्यर्थः । ५"देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि" ६"यान्ति मद्याजिनोऽपि माम्" इति च । लोके च कृष्यादिभिर्विचित्ररूपान् द्रव्यविशेषान् सम्पाद्य तैः राजानं भृत्यद्वारेण साक्षाद्वाऽर्चयन्ति; अर्चितश्च राजा तत्तदर्चनानुगुणं फलं प्रयच्छन् दृश्यते । वेदान्तास्त्वतिपतितसकलेतरप्रमाणसम्भावनाभूमिं निरस्तसमस्ताविद्यादिदोषगन्धं स्वाभाविकानवधिकातिशयापरिमितोदारगुणसागरं पुरुषोत्तमं प्रतिपाद्य, तदाराधनरूपाणि च यागदानहोमात्मकानि, स्तुतिनमस्कारकीर्तनार्चनध्यानानि च तदाराधनानि, आराधितात्परस्मात्पुरुषाद्भोगापवर्गरूपं फलं च, वदन्तीति सर्वं समञ्जसम् ॥ ४० ॥

इति श्रीशारीरकमीमांसाभाष्ये फलाधिकरणम् ॥ ८ ॥

———

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
तृतीयस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

———

१. यजु. २-कां-१-७-१पं. ॥—२. तै. ना-१-६-॥—३. बृ. ५-७-७ ॥
४. बृ. ५-७-५-६ ॥—५. गी. ७-२१-२२-२३ ॥—६. गी. ९-२४-२५ ॥

॥ श्रीमते रामानुजाय नमः ॥

श्रीभगवद्रामानुजविरचिते—

# श्रीशारीरकमीमांसाभाष्ये

( तृतीयाध्याये-तृतीयः पादः-सर्ववेदान्तप्रत्ययाधिकरणम् ॥ )

---

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्। ३। ३। १ ॥

उक्तं ब्रह्मोपासिसिषोपजननाय वक्तव्यं ब्रह्मणः फलदायित्वपर्यन्तम्; इदानीं ब्रह्मोपासनानां गुणोपसंहारविकल्पनिर्णयाय विद्याभेदचिन्ता प्रस्तूयते। प्रथम तावदेकस्या वैश्वानरविद्यादिकाया अनेकशाखासु श्रूयमाणायाः किमेकविद्यात्वम्, उत विद्याभेद इति चिन्त्यते। अविशेषपुनश्श्रवणस्य प्रकरणान्तरस्य च भेदकत्वाच्छाखान्तरे चोभयोरवर्जनीयत्वाद्विद्याभेद इति प्राप्तम्। अत एव १"तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्" इति शिरोव्रतवतामाथर्वणिकानामेव विद्योपदेशनियम उपपद्यते। विद्यैक्ये हि विद्याङ्गस्य शिरोव्रतस्यान्येषामपि शाखिनां प्राप्तेर्नियमो नोपपद्यते—

—( सिद्धान्तः )—

एवं प्राप्त उच्यते—सर्ववेदान्तप्रत्ययमेकमुपासनमिति। कुतः ? चोदनाद्यविशेषात्-चोदना तावत् २"उपासीत" ३"विद्यात्" इत्येवंजातीयको धात्वर्थविशेषविधिः। आदिशब्देन ४"एकं वा संयोगरूपचोदनाख्या-

---

१, मु. ३-२-१० ॥—२, छा, १-१-१; बृ, ३-४-२ ॥—३, कठ. ६-१७ ॥—४. पूर्व २-४-६ ॥

विशेषात्" इति कर्मकाण्डशाखान्तराधिकरणसूत्रोक्तास्संयोगरूपाख्या गृह्यन्ते । एषां चोदनादीनामविशेषात् सैवेयं विद्येति शाखान्तरे प्रत्यभिज्ञायते । तथाहि-छान्दोग्यवाजसनेयकयोः १ "वैश्वानरमुपास्ते" इति चोदना तावदेकरूपा ; वेद्यैकनिरूपणीयस्वरूपस्य विदिपर्यायस्योपासेर्वेद्यभूतवैश्वानरैक्याद्रूपमप्यविशिष्टम् ; आख्या च वैश्वानरविद्येत्यविशिष्टा; फलसंयोगोऽप्युभयत्रापि ब्रह्मप्राप्तिरूपोऽविशिष्टः । अत एभिः प्रत्यभिज्ञानाच्छाखान्तरेऽपि विद्यैक्यम् ॥ १ ॥

यदुक्तमविशेषपुनश्श्रवणात्प्रकरणान्तराच्च विधेयभेदप्रतीतेर्न विद्यैक्यमिति, तदनुभाष्य परिहरति—

## भेदान्नेति चेदेकस्यामपि । ३ । ३ । २ ॥

अविशेषपुनश्श्रुत्या प्रकरणान्तराच्च विधेयभेदान्न विद्यैक्यमिति चेत्-एकस्यामपि विद्यायां प्रतिपत्तृभेदात्पुनश्श्रुतिः प्रकरणान्तरं चोपपद्यते । यत्र ह्येकस्मिन् प्रतिपत्तरि पुनश्श्रुतिः प्रकरणान्तरं च विद्यते ; तत्रान्यथानुपपत्त्या विधेयभेदाद्विद्याभेदः, प्रतिपत्तृभेदे तु तत्प्रतिपत्त्यर्थतया पुनश्श्रुत्याद्युपपत्तेस्तत्र न विधेयान्तरसम्भवः ॥ २ ॥

यच्चोक्तं शिरोव्रतवतामाथर्वणिकानामेव विद्योपदेशनियमदर्शनाद्विद्याभेदः प्रतीयत इति, तत्राह—

## स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः । ३। ३। ३॥

नैतदस्ति-शिरोव्रतोपदेशनियमदर्शनं विद्याभेदं द्योतयति-इति, शिरोव्रतस्य विद्याङ्गत्वाभावात् । स्वाध्यायस्य तथात्वे हि तन्नियमः स्वाध्यायस्य तथात्वसिद्ध्यर्थ-तज्जन्यसंस्कारभाक्त्वसिद्ध्यर्थं हि शिरोव्रतोपदेशनियमः, न विद्यायाः । कुत एतत् ? २ "नैतदचीर्णव्रतोऽधीयीत" इति तस्याध्ययनसंयोगात्; समाचारेऽधिकाराच्च-समाचाराख्ये ग्रन्थे ३ "इदमपि वेदव्रतेन व्याख्यातम्" इत्यतिदेशात् । ४ "तेषामेवैतां ब्रह्मविद्यां वदेत"

१. छा. ५-१८-१ ॥—२. मु. ३.२ ११ ॥—३. समाचारे॥—४. मु. ३-२,१०॥

वेदविद्यामित्यर्थः । सववश्च तन्नियमः—यथाहि सवहोमास्सप्त सूर्यादयशतोदनपर्यन्ता आथर्वणिकैकाग्निसम्बन्धिनस्तत्रैव भवन्ति; न त्रेताग्निषु ॥

## दर्शयति च । ३ । ३ । ४ ॥

दर्शयति च श्रुतिरुपासनस्य सर्ववेदान्तप्रत्ययत्वम्; तथाहि-छान्दोग्ये १"तस्मिन्यदन्तस्तदन्वेष्टव्यम्" इत्युक्त्वा २"किं तदत्र विद्यते यदन्वेष्टव्यम्" इति प्रश्नपूर्वकम् अपहतपाप्मत्वादिगुणाष्टकविशिष्टः परमात्मा तस्मिन्नुपास्य इत्युक्तम्; तैत्तिरीयके तु छान्दोग्यस्थं प्रतिनिर्देशमुपजीव्य ३"तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्" इति गुणाष्टकविशिष्टस्य परमात्मन उपासनमुच्यते; तदुभयत्र विद्यैकत्वेन गुणोपसंहारादेवोपपद्यते ॥ ३ ॥

तदेवं शाखान्तराधिकरणन्यायसिद्धं विद्यैक्यं स्थिरीकृत्य तत्प्रयोजनमाह—

## उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ।३।३।५॥

एवं सर्ववेदान्तेषु समाने सत्युपासने वेदान्तान्तराम्नातानां गुणानां वेदान्तान्तर उपसंहारः कर्तव्यः; कुतः ? विधिशेषवदर्थाभेदात्—यथैकस्मिन्वेदान्ते श्रुतो वैश्वानरदहरादिविधिशेषो गुणस्तद्विद्यासम्बन्धात्तदुपकाररूपप्रयोजनसिद्ध्यर्थमनुष्ठीयते ; तथा वेदान्तान्तरोदितोऽपि तद्विद्यासम्बन्धित्वेन तदुपकाराविशेषादुपसंहर्तव्य इत्यर्थः । चशब्दोऽवधारणे ॥ ४ ॥

इति श्रीशारीरकमीमांसाभाष्ये सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

—( श्रीशारीरकमीमांसाभाष्ये अन्यथात्वाधिकरणम् ॥२॥ )—

## अन्यथात्वं शब्दादितिचेन्नाविशेषात् । ३ । ३ । ६॥

एवं चोदनाद्यविशेषाद्विद्यैकत्वम्, एकत्वे च गुणोपसंहारः कर्तव्य

१. छा. ८-१-१ ॥—२. छा. ८.१-२ ॥—३. तै. नारा. १०-२३ ॥

इत्युक्तम् ; अतः परं काश्चन विद्या अधिकृत्य प्रत्यभिज्ञाहेतुभूतचोदनाद्यविशेषोऽस्ति, नेति निरूप्य निर्णीयते। अस्त्युद्गीथविद्या वाजिनां छन्दोगानां च। वाजिनां तावत् १"द्वया ह प्राजापत्या देवाश्चासुराश्च" इत्यारभ्य १"ते ह देवा ऊचुः हन्तासुरान्यज्ञ उद्गीथेनात्ययाम" इत्युद्गीथेनासुरविध्वंसनं प्रतिज्ञायोद्गीथे वागादिमनःपर्यन्तदृष्टौ असुरैरभिभवमुक्त्वा २"अथ हेममासन्यं प्राणमूचुः" इत्यादिना उद्गीथे प्राणदृष्टया असुरपराभवमुक्त्वा २"भवत्यात्मना परास्य द्विपन् भ्रातृव्यो भवति य एवं वेद" इति शत्रुपराजयफलायोद्गीथे प्राणदृष्टिर्विहिता। एवं छन्दोगानामपि ३"देवासुरा ह वै यत्र संयेतिरे" इत्यारभ्य ३"तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिहनिष्यामः" इत्युद्गीथेनासुरपराभवं प्रतिज्ञाय तद्धदेवोद्गीथे वागादिदृष्टौ दोषमभिधाय ४"अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" इत्यादिना उद्गीथे प्राणदृष्टया असुरपराभवमुक्त्वा ४" यथाऽश्मानमाखणमृत्वा विध्वंसते एवं हैव स विध्वंसते य एवं विदि पापं कामयते" इति शत्रुपराभवाय उद्गीथे प्राणदृष्टिर्विहिता। वेदनविषयविधिप्रत्ययाश्रवणेऽपि फलसाधनत्वश्रवणाद्वेदनविषयो विधिः कल्प्यते। उद्गीथविद्यायाः क्रत्वर्थत्वेन क्रतुसाद्गुण्यफलत्वेऽप्यार्थवादिकमपि फलं तदविरुद्धं ग्राह्यमेवेति देवताधिकरणे प्रतिपादितम्। तत्र संशय्यते—किमत्र विद्यैक्यम्, उत नेति। किं युक्तम्? विद्यैक्यमिति। कुतः? उभयत्रोद्गीथस्यैवाध्यस्तप्राणभावस्योपास्यत्वश्रवणाचोदनाद्यविशेषात्। फलसंयोगस्तावच्छत्रुपरिभवरूपो न विशिष्यते। रूपमप्यध्यस्तप्राणभावोद्गीथाख्योपास्यैक्यादविशिष्टम्। चोदना च विदिधात्वर्थगताऽविशिष्टा। आख्या चोद्गीथविद्येत्यविशिष्टा। अत्र राद्धान्तिच्छायया परिचोद्य परिहरति—अन्यथात्वं शब्दादिति चेन्नाविशेषात्—इति। यदुक्तं विद्यैक्यमिति, तन्नोपपद्यते, रूपभेदात्; रूपान्यथात्वं

१. बृ. १-३-१॥—२. बृ. १-३-७॥—३ छा. १-२-१॥—४. छा. १-२-७-८॥

हि शब्दादेव प्रतीयते ; वाजसनेयके हि १"अथ हेममासन्यं प्राणमूचुस्त्वं न उद्‌गायेति तथेति तेभ्य एष प्राण उद्‌गायत्" इत्युद्‌गानस्य कर्तरि प्राणदृष्ट्याऽसुरपराभवमुक्त्वा १"य एवं वेद" इति कर्तर्येव प्राणदृष्टिरेवंशब्दादवगम्यते । छान्दोग्ये २"अथ ह य एवायं मुख्यःप्राणस्तमुद्‌गीथमुपासाञ्चक्रिरे" इत्युद्‌गानस्य कर्मण्युद्‌गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा २"य एवंविदि पापं कामयते" इत्येवंशब्दात्कर्मण्येवोद्‌गीथे प्राणदृष्टिर्विहिता । अत एकत्र कर्तरि प्राणदृष्टिशब्दादन्यत्र कर्मणि प्राणदृष्टिशब्दाच्च रूपान्यथात्वं स्पष्टम् । रूपान्यथात्वे च विधेयभेदे सति केवल चोदनाद्यविशेषोऽकिञ्चित्कर इति विद्याभेद इतिचेत्–नन्न, अविशेषात्–अविशेषेण ह्युभयत्र उद्‌गीथसाधनकपरपरिभव उपक्रमे प्रतीयते ; वाजसनेयके ३"ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्‌गीथेनात्याम" इत्युपक्रमे श्रूयते; छान्दोग्येऽपि ४"तद्ध देवा उद्‌गीथमाजह्रुरनेनैनानभिहनिष्यामः" इति । अत उपक्रमाविरोधाय १"तेभ्य एष प्राण उद्‌गायत्" इत्यध्यस्तप्राणभाव उद्‌गीथ उद्‌गानकर्मभूत एव पाकादिष्वोदनादिवत्सौकर्यातिशयविवक्षया कर्तृत्वेनोच्यते; अन्यथोपक्रमगत उद्‌गीथशब्दः कर्तरि लाक्षणिकः स्यात् , अतो विद्यैक्यम् ॥ ६ ॥

—( सिद्धान्तः )—

इति प्राप्ते प्रचक्ष्महे—

## न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ।३।३।७॥

नवेति पक्षं व्यावर्तयति ; नचैतदस्ति, यद्विद्यैक्यमिति; कुतः ? प्रकरणभेदात् ५"ओमित्येतदक्षरमुद्‌गीथमुपासीत" इति प्रकृतमुद्‌गीथावयवभूतं प्रणवं प्रस्तुत्य ६"एतस्य वा अक्षरस्योपव्याख्यानं भवति" ७"देवासुरा हवै यत्र संयतिरे" इत्यारभ्य ८"अथ ह य एवायं मुख्यः प्राण-

१. बृ. ३-३-७ ॥ — २. छा. १-२-७, ८ ॥ --३. बृ. ३-३-१ ॥-- ४. छा. १-२-१--५. छा. १-१-१ ॥--६. छा. १-१-१०॥--७. छा. १-२-१॥ ८. छा. १-२-७ ॥

स्तमुद्गीथमुपासाञ्चक्रिरे" इत्युद्गीथावयवभूतप्रणवविषयमुपासनं छन्दोगा अधीयते; वाजिनस्तु तादृशप्राचीनप्रकरणाभावात् १"हन्तासुरान्यज्ञ उद्गीथेनात्ययाम" इति कृत्स्नमुद्गीथं प्रस्तुत्य २"अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गाय" इत्यादिकृत्स्नोद्गीथविषयमधीयते; अतः प्रकरणभेदेन विधेयभेदः, विधेयभेदे च रूपभेद इति न विद्यैक्यम्; किञ्च ३"अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे" इति पूर्वप्रकृत उद्गीथावयवभूतः प्रणव एवाध्यस्तप्राणभावश्छन्दोगानामुपास्यः; वाजिनां तु कृत्स्नस्योद्गीथस्य कर्तोद्गाथा प्राणदृष्ट्योपास्य इति। २"अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्" इत्युद्गातरि प्राणाध्यासं निर्दिश्य २"य एवं वेद" इत्युद्गातैवाध्यस्तप्राणभाव उपास्यो विधीयते; अतश्च रूपभेदः। नचोद्गातयुपास्ये विहिते १"उद्गीथेनात्ययाम" इत्याख्यायिकापक्रमविरोधश्शङ्कनीयः, उद्गातुरुपासने उद्गीतस्योद्गानकर्मभूतस्यावश्यापेक्षितत्वात्तस्यापि परपरिभवाख्यं फलं प्रति हेतुत्वात्। अतो रूपभेदाद्विद्याभेद इति चोदनाद्यविशेषेऽपि न विद्यैक्यम्। परोवरीयस्त्वादिवत्—३यथैकस्यामपि शाखायामुद्गीथावयवभूते प्रणवे परमात्मदृष्टिविधानसाम्येऽपि हिरण्मयपुरुषदृष्टिविधानात् परोवरीयस्त्वादिगुणविशिष्टदृष्टिविधानमर्थान्तरभूतम् ॥ ७ ॥

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि । ३। ३। ८॥

उद्गीथविद्येति संज्ञैक्यात् तत्-विद्यैक्यमुक्तं चेत्—तत्-संज्ञैक्यं विधेयभेदेऽप्यस्त्येव; यथा अग्निहोत्रसंज्ञा नित्याग्निहोत्रे, कुण्डपायिनामयनाग्निहोत्रे च; यथा चोद्गीथविद्येति छान्दोग्ये प्रथमप्रपाठकोदितासु बह्वीषु विद्यासु ॥ ८ ॥

## व्याप्तेश्च समञ्जसम् । ३ । ३ । ९ ॥

१ बृ. ३-३-१ ॥—२. बृ. ३-३-७ ॥—३. यथैकस्यामेव, पा ॥

छान्दोग्ये प्रथमप्रपाठके उत्तरास्वपि विद्यासूद्गीथावयवस्य प्रणवस्य प्रथमप्रस्तुतस्योपास्यत्वेन व्याप्तेश्च तन्मध्यगतस्य १"तद्ध देवा उद्गीथमाजह्नुः"इत्युद्गीथशब्दस्य प्रणवविषयत्वमेव समञ्जसम्। अवयवे च समुदायशब्दः 'पटो दग्धः' इत्यादिषु दृश्यते। अतश्चोद्गीथावयवभूतः प्रणव एवोद्गीथशब्दनिर्दिष्ट इति स एव प्राणदृष्ट्योपास्यश्छान्दोग्ये प्रतिपत्तव्यः। वाजसनेयके तु कृत्स्नोद्गीथविषय उद्गीथशब्द इति कृत्स्नोद्गीथस्य कर्तोद्गाता प्राणदृष्ट्योपास्य इति विद्यानानात्वं सिद्धम् ॥ ६ ॥

इति श्रीशारीरकमीमांसाभाष्ये अन्यथात्वाधिकरणम् ॥ २ ॥

( श्रीशारीरकमीमांसाभाष्ये सर्वाभेदाधिकरणम् ॥ ३ ॥ )

## सर्वाभेदादन्यत्रेमे । ३ । ३ । १० ॥

छान्दोग्यवाजसनेयकयोः प्राणविद्या आम्नायते २"यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च" इत्यादि। तत्र ज्यैष्ठ्यश्रैष्ठ्यगुणकं प्राणमुपास्यं प्रतिपाद्य वाक्चक्षुश्श्रोत्रमनस्सु वसिष्ठत्वप्रतिष्ठात्वसम्पत्त्वायतनत्वाख्यान् गुणान् प्रतिपाद्य वागादीनां देहस्य च प्राणायत्तस्थितित्वेन तदायत्ततत्तत्कार्यत्वेन च प्राणस्य श्रैष्ठ्यं प्रतिपाद्य वागादिसम्बन्धितया श्रुतान्वसिष्ठत्वादीन् गुणांश्च प्राणसम्बन्धितया प्रतिपादयति। एवं छान्दोग्यवाजसनेयकयोर्ज्यैष्ठ्यश्रैष्ठ्यगुणको वसिष्ठत्वादिगुणकश्च प्राण उपास्यः प्रतिपाद्यते। कौषीतकिनां तु प्राणविद्यायां तथैव ज्यैष्ठ्यश्रैष्ठ्यगुणकः प्राण उपास्यः प्रतिपादितः; न पुनर्वसिष्ठत्वादयो वागादिसम्बन्धिनो गुणाः प्राणसम्बन्धितया प्रतिपादिताः। तत्र संशयः—किमत्र विद्या भिद्यते, उत नेति। किं युक्तम्? भिद्यत इति। कुतः? रूपभेदात्। यद्यप्युभयत्र प्राण एव ज्यैष्ठ्यश्रैष्ठ्यगुणक उपास्यः; तथाप्येकत्र वसिष्ठत्वादिभिरपि गुणैर्युक्तः प्राण उपास्यः प्रतीयते; इतरत्र तु तद्विधुर इत्युपास्य रूपभेदाद्विद्याभेदः—

१. छा. १-२-१ ।—२. छा. ५-१-१ ॥

अनुबन्धादिभ्यः पृथक्त्वहेतुभ्योऽवगम्यते । अनुबन्धाः यज्ञानुबन्धिनो ग्रहस्तोत्रशस्त्रादयः १ "मनसैषु ग्रहा अगृह्णन्त मनसास्तुवन्त मनसाशंसन्" इत्यादिना प्रतिपादिताः । आदिशब्देन श्रुत्यादयः पूर्वोक्ता गृह्यन्ते । श्रुत्यादिभिस्सानुबन्धैर्विद्यामयक्रतुः पृथगवगम्यत इत्यर्थः । प्रज्ञान्तरपृथक्त्ववत्–यथा प्रज्ञान्तरं दहरविद्यादि क्रियामयात्क्रतोः पृथग्भूतं श्रुत्यादिभिरवगम्यते, एवमयमपि । एवं चानुबन्धादिभिः पृथग्भूते विद्यामये यज्ञेऽवगते सति विधिः परिकल्प्यते । इष्टश्चानुवादसरूपेषु कल्प्यमानो विधिः । तदुक्तं—२"वचनानि त्वपूर्वत्वात्" इति । फलं च ३"तेषामेकैक एव तावान् यावानसौ पूर्वः इत्यतिदेशात् स्वक्रतुद्वारेणेष्टकचितस्याग्नेर्यत्फलम्, तदेव मनश्चितादीनामपि स्वक्रतुद्वारेण फलमित्यवगम्यते ॥ ४८ ॥

यत्पुनरतिदेशेन तुल्यकार्यत्वावगमात्क्रियामयक्रत्वनुप्रवेशोऽवगम्यत इत्युक्तम्, तत्राह—

## न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः । ३ । ३ । ४९ ॥

नावश्यमतिदेशादर्थान्तरव्यापारस्यापि तुल्यतया भवितव्यम्, येन क्रियामयक्रत्वनुप्रवेश एषां स्यात्, यस्मात्कस्माच्चित्सामान्यमात्रादतिदेशोपलब्धेः; उपलभ्यते हि ४ "स एष एव मृत्युर्य एष एतस्मिन् मण्डले पुरुषः" इत्यादिषु संहर्तृत्वादिसामान्यमात्रादतिदेशः; नहि तत्र मण्डलपुरुषस्य मृत्युवत्तल्लोकापत्तिः–तद्देशप्राप्तिरपि भवति; एवमिहापि मनश्चितादीनामिष्टकचिताग्निवद्भावातिदेशमात्रेणेष्टकचिताग्निदेशरूपक्रियामयक्रत्वनुप्रवेशेनापि न भवितव्यम् । अत इष्टकचिताग्नेः स्वक्रतुद्वारेण यत्फलम् तदेव मनश्चितादीनामपि विद्यामयक्रतुद्वारेण फलमित्यतिदेशादवगम्यते ॥

१. ॥—२. पू. मी. ३-१-२१ ॥—३. ॥—४. ॥

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः । ३ । ३ । ५० ॥

परेण च ब्राह्मणेनास्यापि मनश्चिताद्यभिधायिनः शब्दस्य ताद्विध्यं—तद्विधत्वम्, विद्यामयप्रतिपादित्वमवगम्यते; परेणहि ब्राह्मणेन १"अयं वाव लोक एषोऽग्निश्चितस्तस्याप एव परिश्रिताः" इत्यादिना २"स यो हैतदेवं वेद लोकंपृणानामैनं भूतमेतत्सर्वमभिसम्पद्यते" इति पृथक्फला विद्यैव विधीयते, तथा वैश्वानरविद्यादौ च विद्यैव विधीयते। अतोऽग्निरहस्यस्य क्रियैकविषयत्वं नास्ति। एवं तर्हि विद्यामया मनश्चितादयो बृहदारण्यकेऽनुबद्धव्याः. किमर्थमिहानुबध्यन्ते; तत्रोच्यते—भूयस्त्वात्त्वनुबन्धः—इति। मनश्चितादिषु सम्पादनीयानामग्न्यङ्गानां भूयस्त्वात्सन्निधाविहानुबन्धः कृतः ॥ ५० ॥

इति श्रीशारीरकमीमांसाभाष्ये पूर्वविकल्पाधिकरणम् ॥ २० ॥

---

( श्रीशारीरकमीमांसाभाष्ये शरीरेभावाधिकरणम् ॥२१॥ )

---

## एक आत्मनश्शरीरे भावात् । ३ । ३ । ५१ ॥

सर्वासु परविद्यासूपास्योपासनस्वरूपवदुपासकस्वरूपस्यापि ज्ञातव्यत्वमुक्तं—३"त्रयाणामेवचैवमुपन्यासः प्रश्नश्च" इति । वक्ष्यति चास्य प्रत्यगात्मनः परमात्मात्मकत्वेनानुसन्धानम् ४"आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति। किमयं प्रत्यगात्मा ज्ञाता कर्ता भोक्तेत्यामुत्र सञ्चारक्षमोऽनुसन्धेयः, उत प्रजापतिवाक्योदितापहतपाप्मत्वादिस्वरूपः; किं युक्तम् ? ज्ञातृत्वाद्याकारमात्र इत्येके मन्यन्ते; कुतः ? अस्योपासकस्यात्मनः शरीरे भावात्; शरीरे वर्तमानस्य तादृशमेव रूपम्; तावतै-

---

१ ॥—२ ॥—३. शारी. १-४-६ ॥—४. शारी. ४-१-३ ॥

वानुसन्धानेन तत्फलसिद्ध्युपपत्तेश्च; नहि कर्मस्वधिकृतानां स्वर्गादिफलार्थिनां ज्ञातृत्वाद्यतिरेकेण फलानुभवदशायां यादृशं रूपम्, तादृशं रूपं साधनानुष्ठानदशायामनुसन्धातव्यम्, तावतैव साधनानुष्ठानतत्फलयोस्सिद्धेरतिरिक्तानुसन्धाने प्रयोजनाभावात्; तद्विशेषादिहापि तथैव। ननुचात्र १"यथाक्रतुरस्मिन्लोके पुरुषो भवति तथेतः प्रेत्य भवति" इतिविशेषवचनादपहतपाप्मत्वाद्याकार एवानुसन्धातव्य इत्यवगम्यते; मैवम्, २"तं यथायथोपासते" इत्युपास्यविषयत्वात्तस्य ॥

--( सिद्धान्तः )--

एवं प्राप्ते प्रचक्ष्महे—

## व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् । ३ । ३ । ५२ ॥

न त्वेतदस्ति—यत् ज्ञातृत्वाद्याकार एवानुसन्धेय इति; अस्यात्मनस्संसारदशायाः मोक्षदशायां यो व्यतिरेकः, सोऽपहतपाप्मत्वादिकोऽनुसन्धेयः; अस्य मोक्षदशायां यादृशं रूपं, तादृगूप एवोपासनवेलायामात्माऽनुसन्धेय इत्यर्थः । कुतः ? तद्भावभावित्वात्तद्रूपापत्तेः; १"यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति २"तं यथायथोपासते तथैव भवति" इति यथोपासनमेव हि प्राप्तिः श्रूयते । नच परस्वरूपमात्रविषयमेवेदमिति वक्तुं शक्यते, प्रत्यगात्मनोऽप्युपास्यभूतपरब्रह्मशरीरतयोपास्यकोटिनिक्षिप्तत्वात् । अतः प्रजापतिवाक्योदितापहतपाप्मत्वादिगुणकप्रत्यगात्मशरीरपरमात्मोपासनस्य तथारूपमेव प्राप्यमित्युक्तं भवति । अत एव ३"एवं क्रतुर्हामुं लोकं प्रेत्याभिसम्भवितास्मि" इत्युच्यते । तस्मात्प्रत्यगात्मा प्राप्याकार एवानुसन्धेयः । उपलब्धिवत्यथा

१. छा. ३-१४-१ ॥ २.मुद्गलोपनिषत् ३-ख ॥

ब्रह्मोपलब्धिर्विहिता यथावस्थितब्रह्मस्वरूपविषया, तथाऽऽत्मोपलब्धिरपि यथावस्थितात्मस्वरूपविषयेत्यर्थः । कर्मस्वात्मस्वरूपानुसंधानं कर्माङ्गम्; १"यजेत स्वर्गकामः" इति कर्मानुष्ठानमेव हि फलाय चोद्यते । देहातिरिक्तज्ञातृत्वाद्याकारात्मावगतिः कालान्तरभाविफलसाधनकर्माधिकारार्थेति तावन्मात्रमेव तत्रापेक्षितमिति न किञ्चिदपहीनम् ॥ ५२ ॥

इति श्रीशारीरकमीमांसाभाष्ये शरीरेभावाधिकरणम् ॥ २१ ॥

( श्रीशारीरकमीमांसाभाष्ये अङ्गावबद्धाधिकरणम् ॥२२॥)

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ।३।३।५३॥

२"ओमित्येतदक्षरमुद्गीथमुपासीत"३ 'लोकेषु पञ्चविधं सामोपासीत"४' उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थम इयमेव पृथिवी" ५ "अयं वाव लोक एषोऽग्निचितः" इत्येवमाद्याः क्रत्वङ्गाश्रया उपासना भवन्ति; ताः किं यासु शाखासु श्रूयन्ते, तास्वेव नियताः, उत सर्वासु शाखासूद्गीथादिषु सम्बध्यन्त इति विचारः । सर्ववेदान्तप्रत्ययत्वे स्थितेऽपि प्रतिवेदं स्वरभेदादुद्गीथादयो भिद्यन्त इति तत्रतत्र व्यवतिष्ठेरन्निति युक्ता शङ्का । किं युक्तम् ? व्यवतिष्ठेरन्निति । कुतः? ६"उद्गीथमुपासीत" इति सामान्येनोद्गीथसम्बन्धितया श्रुतायास्तस्यामेव शाखायां स्वरविशेषयुक्तस्योद्गीथविशेषस्य सन्निधानात्तस्मिन्नेव विशेषे पर्यवसानं युक्तमिति । एवमाद्यास्तास्वेव शाखासु व्यवतिष्ठेरन्निति ॥

—( सिद्धान्तः )—

एवं प्राप्ते प्रचक्ष्महे—अङ्गावबद्धास्तु—इति । तुशब्दः पक्षं व्यावर्तयति; नह्युद्गीथाद्यङ्गावबद्धा उपासनास्तास्वेव शाखासु व्यवतिष्ठेरन्;

१. यजु. २-५-१ ॥—२. छा. १-१-१ ॥—३. छा. २-२-१ ॥—४ ॥— ५ ॥—६. छा. १-१-१ ॥

अपितु प्रतिवेदं सम्बध्येरन्; सर्वासु शाखास्वित्यर्थः। हि शब्दो हेतौ। यस्माच्छ्रुत्यैवोद्गीथाद्यङ्गमात्राद्यवद्धाः, तस्माद्यत्रोद्गीथादयः, तत्र सर्वत्र सम्बध्येरन्। यद्यपि स्वरभेदेनोद्गीथव्यक्तयो भिद्यन्ते; तथापि सामान्येनोद्गीथश्रुत्या सर्वा व्यक्तयस्सन्निहिता इति न कचिद्व्यवस्थायां प्रमाणमस्ति। सर्वशाखाप्रत्ययन्यायेन च सर्वासु शाखासु क्रतुरेकः। अतस्सर्वासु शाखास्वेकस्य क्रतोस्सन्निधानात् क्रत्वङ्गभूतोद्गीथादयोऽपि सन्निहिता इति नैकस्य सन्निधिविशेषोऽस्तीति न व्यवस्था॥ ५३॥

## मन्त्रादिवद्वाऽविरोधः। ३। ३। ५४॥

वाशब्दश्चार्थे; आदिशब्देन जातिगुणसङ्ख्यासादृश्यक्रमद्रव्यकर्माणि गृह्यन्ते; यथा मन्त्रादीनामेकैकशाखास्वाम्नातानामपि शेषिणः क्रतोस्सर्वशाखास्वेकत्वेन यथायथं श्रुत्यादिभिस्सर्वासु शाखासु विनियोगो न विरुध्यते; तद्वदिहाप्यविरोधः॥ ५४॥

इति श्रीशारीरकमीमांसाभाष्ये अङ्गावबद्धाधिकरणम्॥ २२॥

---

### श्रीशारीरकमीमांसाभाष्ये भूमज्यायस्त्वाधिकरणम्॥२३॥

---

## भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति।३।३।५५॥

१ "प्राचीनशाल औपमन्यवः" इत्यारभ्य वैश्वानरविद्या आम्नाता तत्र वैश्वानरः परमात्मा त्रैलोक्यशरीर उपास्यश्श्रुतः स्वर्लोकादित्यवाय्वाकाशाप्पृथिव्यवयवः; तत्र च द्यौर्मूर्धा, आदित्यश्चक्षुः, वायुः प्राणः, आकाशस्सन्देहः मध्यकाय इत्यर्थः; आपो वस्तिः; पृथिवी पादावित्यवयवविशेषाः। तत्र संशयः—किमस्य त्रैलोक्य शरीरस्य व्यस्तस्योपासनं

---

१. छा. ५-११-१॥

कर्तव्यम्, उत व्यस्तस्य समस्तस्यच, अथ समस्तस्यैवेति। किं युक्तम्? व्यस्तस्येति; कुतः? उपक्रमे व्यस्तोपासनोपदेशात्। तथाह्युपदिश्यते— औपमन्यवादयः किलोद्दालकपष्ठाः केकयमश्वपतिमुपसद्य १"आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येपि तमेव नो ब्रूहि"इति प्रपच्छुः। स च तेभ्यः प्रत्येकं स्वोपास्यान् द्युप्रभृतीनुक्तवद्भ्यो मूर्धादिषु व्यस्तेषूपासनं तत्रतत्र फलं चोक्तवान् २ "अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन" इति। "एष वै सुतेजा आत्मा वैश्वानरः" इत्यादिना तेषुतेषूपासनेषूपास्यस्य वैश्वानरत्वं चाह। अतो व्यस्तस्योपासनं कर्तव्यम्। परत्र ३"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति। द्युप्रभृतिप्रदेशावच्छिन्नमात्रे वैश्वानरे उक्तस्य मूर्धाद्युपासनस्य समासेनोपसंहार इत्यवगन्तव्यम्। अपर आह—एवमेव समस्तस्याप्युपासनं कार्यमिति, पृथक्फलनिर्देशात्, ३ "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" इति। नचैतावता वाक्यभेदः; यथा भूमविद्योपक्रमे नामाद्युपासनं तत्तत्फलञ्चाभिधाय ४ "एष तु वा अतिवदति यस्सत्येनातिवदति" इत्यादिना भूमविद्यामुपदिश्य ५"स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति" इति तत्फलञ्च व्यपदिशति; तत्र भूमविद्यापरत्वेऽपि वाक्यस्य नामाद्यवान्तरोपासनं तत्तत्फलं चाङ्गीक्रियते, तथा इहापीति॥

## —[ सिद्धान्तः ]—

एवं प्राप्तेऽभिधीयते—भूम्नो ज्यायस्त्वमिति। भूम्नः—विपुलस्य समस्तस्यैव, ज्यायस्त्वं प्रामाणिकत्वमित्यर्थः; एकवाक्यत्वावगतेः। तथा हि ६ 'प्राचीनशाल औपमन्यवः" इत्युपक्रम्य ६ "उद्दालको ह वै

१. छा. ५-११-६ ॥—२. छा. ५-१२-२ ॥—३. छा. ५ १८-१ ॥ ४. छा. ७ १६-१ ॥—५. छा. ७-२५-२ ॥—६. छा. ५-११-१, २॥

भगवन्तोऽयमारुणिस्सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम" इति वैश्वानरात्मबुभुत्सयौपमन्यवादयः पञ्च महर्षयः तमुद्दालकमुपेत्य तत्र वैश्वानरात्मवेदनमलभमानास्तेन च सहाश्वपतिं केकयं वैश्वानरात्मवेदिनमुपसङ्गम्य १"आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि" इति पृष्ट्वा तत्सकाशात् परमात्मानं वैश्वानरं स्वर्लोकादिपृथिव्यन्तशरीरमुपास्यमवगम्य तत्फलं च सर्वलोकसर्वभूतसर्वात्मान्नभूतब्रह्मानुभवमवगतवन्त इत्युपसंहारतो वाक्यस्यैकत्वमवगम्यते। एवमेकवाक्यत्वेऽवगते सत्यवयवविशेषेपूपास्तिवचनं फलनिर्देशश्च समस्तोपासनैकदेशानुवादमात्रमिति निश्चीयते। क्रतुवत्—यथा २ "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" इति विहितस्यैव क्रतोरेकदेशाः २"यदष्टाकपालो भवति' इत्यादिभिरनूद्यन्ते; तथा समस्तोपासनमेव न्याय्यम्, न व्यस्तोपासनम्। तथाहि दर्शयतीयं श्रुतिः व्यस्तोपासने अनर्थं ब्रुवती ३"मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्यः" इति ४ "अन्धोऽभविष्यो यन्मां नागमिष्यः" इत्यादिका। अत इदमप्यपास्तं, यन्नामाद्युपासनसाम्यमुक्तम्। तत्रहि नामाद्युपासनेष्वनर्थो न श्रुतः, नामाद्युपासनेभ्यो भूमोपासनस्यातिशयितफलत्वं श्रुतम् ५ "एष तु वा अतिवदति यस्सत्येनातिवदति" इति। तत एव तत्र भूमविद्यापरत्वेऽपि वाक्यस्य नामाद्युपासनानां सफलानां विवक्षितत्वम्; अन्यथाऽतिशयितफलत्वनिमित्तातिवादेन भूमविद्यास्तुत्यनुपपत्तेः, अतस्समस्तोपासनमेव न्याय्यम्॥ ५५॥

इति श्रीशारीरकमीमांसाभाष्ये भूमज्यायस्त्वाधिकरणम् ॥२३॥

---

१. छा. ५-११-६ ॥—२. यजु. २-२-५ अनु. ॥—३. छा. ५-१२-२॥ ४. छा. ५-१३-२॥—५. छा. ७-१६-१॥

( श्रीशारीरकमीमांसाभाष्ये शब्दादिभेदाधिकरणम् ॥२४॥ )

## नाना शब्दादिभेदात । ३ । ३ । ५६ ॥

इह ब्रह्मविद्यास्सर्वाः ब्रह्मप्राप्तिरूपमोक्षैकफलाः सद्विद्याभूमविद्यादहरविद्योपकोसलविद्याशाण्डिल्यविद्यावैश्वानरविद्यानन्दमयविद्याक्षरविद्यादिका एकशाखागताश्शाखान्तरगताश्चोदाहरणम्; अन्याः प्राणाद्येकविषयफलाश्च । किमत्र विद्यैक्यम्, उत विद्याभेद इति संशय्यते । अत्रैवासां परस्परभेदे समर्थिते सत्येकस्या दहरविद्यादिकायास्सर्ववेदान्तप्रत्ययन्यायः । किं युक्तम् ? विद्यैक्यमिति । कुतः ? वेद्यस्य ब्रह्मण एकत्वात्; वेद्यं हि विद्याया रूपम्; अतो रूपैक्याद्विद्यैक्यमिति ॥

—( सिद्धान्तः )—

एवं प्राप्तेऽभिधीयते—नाना—इति । नानाभूता विद्याः; कुतः ? शब्दादिभेदात्–आदिशब्देनाभ्याससङ्ख्यागुणप्रक्रियानामधेयानि गृह्यन्ते; शब्दान्तरादिभिरत्र विधेयभेदहेतवोऽनुबन्धभेदाः दृश्यन्ते; यद्यपि वेदोपासीतेत्यादयः शब्दाः प्रत्ययावृत्त्यभिधायिनः; प्रत्ययाश्च ब्रह्मैकविषयाः; तथाऽपि तत्तत्प्रकरणोदितजगदेककारणत्वापहतपाप्मत्वादिविशेषणविशिष्टब्रह्मविषयप्रत्ययावृत्त्यवबोधिनः प्रत्ययावृत्तिरूपाः विद्या भिन्दन्ति । ब्रह्मप्राप्तिरूपफलसम्बन्ध्युपासनविशेषाभिधायीनि च निराकांक्षाणि वाक्यानि प्रतिप्रकरणं विलक्षणविद्याभिधायीनीति निश्चीयते । अस्मिन्नर्थे १" शब्दान्तरे कर्मभेदः" इत्यादिभिः पूर्वकाण्डोदितैस्सूत्रैस्सिद्धेऽपि पुनरिह प्रतिपादनं वेदान्तवाक्यानि अविधेयज्ञानपराणीति कुदृष्टिनिरसनाय । अतो विद्याभेद इति स्थितम् ॥ ५६ ॥

इति श्रीशारीरकमीमांसाभाष्ये शब्दादिभेदाधिकरणम् ॥ २४ ॥

---

१. पूर्व-मी. २-१-२ ॥

( श्रीशारीरकमीमांसाभाष्ये विकल्पाधिकरणम् ॥२५॥ )

---

# विकल्पोऽविशिष्टफलत्वात् । ३ । ३ । ५७ ॥

ब्रह्मप्राप्तिफलानां सद्विद्यादहरविद्यादीनां नानात्वमुक्तम्; इदानीमासां विद्यानामेकस्मिन् पुरुषे प्रयोजनवत्त्वेन समुच्चयोऽपि सम्भवति, उत प्रयोजनाभावाद्विकल्प एवेति विशये—किं युक्तम्; समुच्चयोऽपि सम्भवतीति; कुतः एकफलानां भिन्नशास्त्रार्थानामपि समुच्चयदर्शनात् । दृश्यते ह्येकस्यैव स्वर्गादेस्साधनानामग्निहोत्रदर्शपूर्णमासादीनां तस्यैव स्वर्गस्य भूयस्त्वापेक्षयैकत्र पुरुषे समुच्चयः; एवमिहापि ब्रह्मानुभवभूयस्त्वापेक्षया समुच्चयोऽपि सम्भवतीति ॥

## —[ सिद्धान्तः ]—

एवं प्राप्ते प्रचक्ष्महे-विकल्प एव; न समुच्चयस्सम्भवतीति । कुतः ? अविशिष्टफलत्वात्—सर्वासां हि ब्रह्मविद्यानामनवधिकातिशयानन्दब्रह्मानुभवः फलमविशिष्टं श्रूयते [1]"ब्रह्मविदाप्नोति परम्" [2]"स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्य" [3]"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इत्यादिभ्यः । ब्रह्म हि स्वस्य परस्य च स्वयमनुभूयमानमनवधिकातिशयानन्दं भवति । स च तादृशो ब्रह्मानुभव एकया विद्ययाऽवाप्यते चेत्—किमन्ययेति न समुच्चयसम्भवः स्वर्गादेर्हि देशतः कालतः स्वरूपतश्च परिमितत्वेन तत्र देशाद्यपेक्षया भूयस्त्वसम्भवात्तदर्थिनस्समुच्चयस्सम्भवति; इह तु तद्विपरीतस्वरूपे ब्रह्मणि तन्न सम्भवति । सर्वाश्च विद्याः ब्रह्मानुभवविरोध्य-

---

१. तै. आन. १-अनु. १ ॥—२. तै. आन. ८-अनु. ४ ॥—३. मु. ३-१-३ ॥

नादिकर्मोविद्यानिरसनमुखेन ब्रह्मप्राप्तिफला इत्यविशिष्टफलत्वात्सर्वासां विकल्प एव ॥ ५७ ॥

ब्रह्मप्राप्तिव्यतिरिक्तफलास्तु विद्यास्स्वर्गादिफलकर्मवद्यथेष्टं विकल्पेरन्, समुच्चीयेरन्वा, तासां परिमितफलत्वेन भूयस्त्वापेक्षासम्भवात् । तदाह—

## काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् । ३ । ३ । ५८ ॥

अपरिमितफलत्वाभावादित्यर्थः ॥ ५८ ॥

इति श्रीशारीरकमीमांसाभाष्ये विकल्पाधिकरणम् ॥ २५ ॥

( श्रीशारीरकमीमांसाभाष्ये यथाश्रयभावाधिकरणम् ॥२६॥)

## अङ्गेषु यथाश्रयभावः । ३ । ३ । ५९ ॥

उद्गीथादिक्रत्वंगेष्वाश्रिताः १"ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यादिका विद्याः किमुद्गीथादिवत्क्रत्वर्थतया क्रतुषु नियमेनोपादेयाः, उत गोदोहनादिवत्पुरुषार्थतया यथाकाममिति विशये—नियमेनोपादेया इति युक्तम् । ननु चासां पुरुषार्थत्वेनानियमः प्रतिपादितः २ "तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम्" इत्यत्र । सत्यम्; तदेव द्रढयितुं कैश्चिल्लिङ्गदर्शनैर्युक्त्या चाक्षिप्यते । तत्र हि ३"तेनोभौ कुरुतः" इत्यनियमदर्शनात्पृथक्फलत्वमुक्तम्; उपासनाश्रयभूतोद्गीथादिवदुपासनानामप्यङ्गतयोपादाननियमे बहवो हेतव उपलभ्यन्ते; न ह्यत्र ४"गोदोहनेन पशुकामस्य प्रणयेत्" इत्यादिवदुपासनाविधिवाक्ये-

१. छा. १ १-१ ॥—२. शारी. ३-३-४१ ॥—३. छा. १-१-१० ॥—४ ॥

फलसम्बन्धः श्रूयते ; १"उद्गीथमुपासीत" इत्युद्गीथादिसम्बन्धितयैवोपासनं प्रतीयते । २"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम्" इति वर्तमानोपदेशरूपवाक्यान्तराद्धि फलसम्बन्धो ज्ञायते; स्ववाक्येनैवाव्यभिचरितक्रतुसम्बन्ध्युद्गीथादिसम्बन्धेन निर्ज्ञातक्रत्वङ्गभावस्य वाक्यान्तरस्थवर्तमानफलसम्बन्धनिर्देशोऽर्थवादमात्रं स्यात्, अपापश्लोकश्रवणादिवत् । अतो यथोद्गीथादय उपासनाश्रयाः क्रत्वङ्गतया प्रयोगविधिना नियमेनोपादीयन्ते ; तथा तदाश्रिताश्चोपासनास्तन्मुखेन क्रत्वङ्गभूता इति नियमेनोपादेया एव ॥ ५९ ॥

## शिष्टेश्च । ३ । ३ । ६० ॥

शिष्टिः शासनम्, विधानमित्यर्थः । ३"उद्गीथमुपासीत" इत्युद्गीथाङ्गतयोपासनविधानाच्चोपादाननियमः । ४"गोदोहनेन पशुकामस्य प्रणयेत्" इत्यादिवद्विधिवाक्येऽधिकारान्तराश्रवणादुद्गीथाङ्गभाव एव हि विधेय इति गम्यते ॥ ६० ॥

## समाहारात् । ३ । ३ । ६१ ॥

५"होतृषदनाद्धैवापि *दुरुद्गीथमनुसमाहरति" इत्युपासनस्य समाहारनियमो दृश्यते । दुरुद्गीथं वेदनविहीनमुद्गीथम् । वेदनहानावन्येन समाधानं ब्रुवत्तस्य नियमेनोपादानं दर्शयति ॥ ६१ ॥

---

१. छा० १-१-१ ॥—२. छा. १-१-१० ॥—३. छा. १-१-१ ॥—
४. ॥—५. छा. १-५-५ ॥

* होतृषदनाद्धैवापि दुरुद्गीथ मिति-तस्य ह्ययमर्थः—होत्राप्रयुज्यमानस्य प्रणवस्य, उद्गात्रा प्रयुज्यमानस्य, उद्गीथस्य चैकत्व विज्ञानेन उद्गात्रा अनुष्ठिते सति, तद्विज्ञानमाहात्म्यादुद्गाता स्वकर्मण्युद्गाने यत् च्युतं स्वर प्रमादादि रूपं तद्धोतृ कृतात् सम्यक् शंसनाद्धेतोरनुसमादधातीत्यर्थः, दुष्टस्य सामीचीनेनैवयंहि दुष्टस्य सामीचीन्यं भवतीति युज्यत इति ॥

## गुणसाधारण्यश्रुतेश्च । ३ । ३ । ६२ ॥

उपासनगुणस्य उपासनाश्रयस्य प्रणवस्य सोपासनस्य १"तेनेयं त्रयी विद्या वर्तते ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति" इति साधारण्यश्रुतेश्चोपासनसमाहारो गम्यते । १"तेन" इति प्रकृतपरामर्शात्सोपासन एव प्रणवस्सर्वत्र सञ्चरति । अत उपासनस्य प्रणवसहभावनियमदर्शनाच्चोद्गीथाद्युपासनानामुद्गीथादिवन्नियमेनोपादानम् ॥

—( सिद्धान्तः )—

इति प्राप्त उच्यते—

## न वा तत्सहभावाश्रुतेः । ३ । ३ । ६३ ॥

नचैतदस्ति-यदुद्गीथाद्युपासनानां क्रतुषूद्गीथादिवदुपादाननियमः इति । कुतः ? तत्सहभावाश्रुतेः-उद्गीथाङ्गभावाश्रुतेरित्यर्थः । अङ्गभावे हि सहभावनियमो भवति । यद्यपि २"उद्गीथमुपासीत" इत्यस्मिन् पदसमुदायेऽधिकारान्तरं न प्रतीयते; तथापि तदनन्तरमेव ३"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति विद्यायाः क्रतुवीर्यवत्तरत्वं प्रति साधनभावः प्रतिपाद्यते । तेन क्रतुफलात्पृथग्भूतफलसाधनभूता विद्या २"उद्गीथमुपासीत" इति कर्तव्यतया विधीयते । क्रतुफलात्पृथग्भूतफलसाधनतयाऽवगतस्योपासनस्य क्रत्वङ्गभूतोद्गीथाङ्गतया विनियोगो नोपपद्यते । अथ उपासनस्याश्रयापेक्षायां सन्निहित उद्गीथ आश्रयमात्रं भवति । उद्गीथश्च क्रत्वङ्गभूत इति क्रतुप्रयुक्तोद्गीथाद्याश्रये उपासने क्रत्वधिकारिण एव क्रतोर्वीर्यवत्तरत्वेच्छानिमित्तमिदमधिकारान्तरमिति न क्रतुषु तदुपादाननियमः । वीर्यवत्तरत्वं च क्रतुफलस्य प्रबलकर्मान्तरफलेनाप्रतिबन्ध इत्युक्तम् ; क्रतोरविलम्बितफलत्वमित्यर्थः । पर्णतादीनां तु ३"यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति"इति विद्यायाः फलसाधनत्ववदपाप श्लोकश्रवणादिफलं प्रति साक्षा-

१. छा. १-१-९ ॥—२. छा. १-१-१ ॥—३. छा. १-१-१० ॥

त्साधनभावो न श्रुत इति क्रत्वङ्गभूतजुह्वाद्यङ्गतया विनियोगाविरोधात्त-दङ्गभूतानां फलान्तरसाधनभावकल्पनानुपपत्तेस्तत्र फलश्रुतिरर्थवादमा-त्रं स्यात् । ॥ ६३ ॥

## दर्शनाच्च । ३ । ३ । ६४ ॥

दर्शयति च श्रुतिरुपासनोपादानानियमम् [१]"एवं विद्धै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति" इति ब्रह्मणो वेदनेन सर्वेषां रक्षणं ब्रुवती । उद्गातृप्रभृतीनां वेदनस्यानियमे सत्येतदुपपद्यते । अनेन लिंगेन पूर्वोक्तानां समाहारादिलिङ्गानां प्रायिकत्वमवगम्यते । अतोऽनि-यम एवेति स्थितम् ॥ ६४ ॥

इति श्रीशारीरकमीमांसाभाष्ये यथाश्रयभावाधिकरणम् ॥ २६ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
तृतीयस्याध्यायस्य तृतीयः पादः ॥ ३ ॥



१. छा. ४-१७-१० ॥

श्रीमते रामानुजाय नमः

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

## ( तृतीयाध्याये - चतुर्थः पादः- पुरुषार्थाधिकरणम् ॥ १ ॥)



### पुरुषार्थोऽतश्शब्दादिति बादरायणः ।३।४।१।

गुणोपसंहारानुपसंहारफला विद्यैकत्वनानात्वचिंता कृता; इदानीं विद्यातः पुरुषार्थः, उत विद्याङ्गकात्कर्मण इति चिन्त्यते। किं युक्तम् ? अतः—विद्यातः पुरुषार्थ इति भगवान् बादरायणो मन्यते; कुतः ? शब्दात्—दृश्यते ह्यौपनिषदः शब्दो विद्यातः पुरुषार्थं ब्रुवन् १"ब्रह्मविदाप्नोति परम्" २"वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेवं विद्वानमृत इह भवति। नान्यः पन्था विद्यतेऽयनाय" ३"यथा नद्यः स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इत्यादि ॥१॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

### शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः । ३ । ४ । २ ॥

नैतदेवम्—यद्विद्यातः पुरुषार्थावाप्तिश्शब्दादवगम्यते—इति। न ह्येषः

---

१. तै. आ. १-अनु ॥—२. पुरुषसूक्तम् ॥—३, मु. ३-२-८ ॥

१"ब्रह्मविदाप्नोति परम्" इत्यादिशब्दो वेदनात्पुरुषार्थावाप्तिमवगमयति, कर्मसु कर्तृभूतस्याऽऽत्मनो याथात्म्यवेदनप्रतिपादनपरत्वात्। अतः कर्तुस्संस्कारद्वारेण विद्यायाः क्रतुशेषत्वात्तत्र फलश्रुतिरर्थवादमात्रम्; यथाऽन्येषु द्रव्यादिषु—इति जैमिनिराचार्यो मन्यते। तदुक्तं २"द्रव्यगुणसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादस्स्यात्" इति। ननु च कर्मसु कर्तुर्जीवादन्यो मुमुक्षुभिः प्राप्यतया वेदान्तेषु वेद्य उपदिश्यत इति प्रागेवोपपादितं-३"नेतरोऽनुपपत्तेः" ४"भेदव्यपदेशाच्च" ५"अनुपपत्तेस्तु न शारीरः" ६"इतरपरामर्शात्स इति चेन्नासम्भवात्" इत्येवमादिभिस्सूत्रैः; तदेव ब्रह्म तत्त्वमस्यादिसामानाधिकरण्येन जीवादनतिरिक्तमित्येतदपि ७"अधिकं तु भेदनिर्देशात्" इत्येवमादिभिर्निरस्तम्; सामानाधिकरण्यनिर्देशश्च ८"ऐतदात्म्यमिदं सर्वं" ९सर्वं खल्विदं ब्रह्म" इति चेतनाचेतनसाधारणः; १०"यः पृथिव्यां तिष्ठन्" ११"य आत्मनि तिष्ठन्" इत्यादिनाऽवगततत्तदात्मतयाऽवस्थितिनिबन्धन इति १२"अवस्थितेरिति काशकृत्स्नः" इत्यादिभिरुपपादितम्; तत्कथं कर्मसु कर्तुरात्मनो याथात्म्योपदेशपरा वेदान्तशब्दा इति विद्यायाः कर्माङ्गत्वं प्रतिपाद्यते?। उच्यते-वेदान्तवाक्येष्वेव विद्यायाः कर्मप्राधान्यं सूचयद्भिर्लिङ्गैस्तदुपबृंहितसामानाधिकरण्यनिर्देशेन च वेदान्तशब्दा देहातिरिक्तजीवस्वरूपयाथात्म्योपदेशपरा इति बलादभ्युपगमनीयमिति पूर्वपक्षिणोऽभिप्रायः। ननु च कर्तृसंस्कारमुखेन विद्यायाः क्रत्वनुप्रवेशो न शक्यते वक्तुम्, कर्तुर्लौकिकवैदिकसाधारणत्वेनाव्यभिचरितक्रतुसम्बन्धित्वात्। नैवम्, लौकिकस्य कर्मणः कर्तुर्देहादव्यतिरिक्तत्वेऽप्युपपत्तेर्देहातिरिक्तनित्यात्म-

१. तै. आ. १-अनु ॥—२. पूर्वमीमांसा. ४-३-१ ॥—३. शारी. १-१-१७ ॥—४. शारी. १-१-१८ ॥—५. शारी. १-२-३ ।—६. शारी. १-३-१७ ॥—७. शारी. २-१-२२ ॥—८. छा. ६-८-७ ॥—९. छा. ३-१४-१ ॥—१०. बृ. ५-७-३ ॥—११. बृ. ५-७-२२. मा-पा॥—१२. शारी. १-४-२२ ॥

स्वरूपस्य कृतावेवोपयोगात्तत्स्वरूपप्रतिपादनमुखेन क्रत्वनुप्रवेशो न विरुध्यते । अतो विद्यायाः क्रतुशेषत्वान्नातः पुरुषार्थः ॥ २ ॥

कानि पुनस्तानि लिङ्गानि; यदुपबृंहितसामानाधिकरण्यनिर्देशेन वेदान्तशब्दा जीवस्वरूपपरा इति निर्णीयन्ते । तत्राह—

## आचारदर्शनात् । ३ । ४ । ३ ॥

ब्रह्मविदां प्राधान्येन कर्मस्वेवाचारो दृश्यते अश्वपतिः केकयः किल आत्मवित्तमस्तद्विज्ञानायोपगतांस्तानृषीन् प्रत्याह—१"यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि" इति । तथा जनकादयो ब्रह्मविदग्रेसराः कर्मनिष्ठाः स्मृतिषु दृश्यन्ते २"कर्मणैव हि संसिद्धिमास्थिता जनकादयः" ३"इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः" इति । अतो ब्रह्मविदां कर्मप्रधानत्वदर्शनाद्विद्यायाः कर्तृस्वरूपवेदनरूपत्वेन कर्माङ्गत्वमेवेति न विद्यातः पुरुषार्थः ॥ ३ ॥

लिङ्गमिदम्; प्राप्तिरुच्यतामित्यत्राह—

## तच्छ्रुतेः । ३ । ४ । ४ ॥

श्रुतिरेव हि विद्यायाः कर्माङ्गत्वमाह—४"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति । नेयं श्रुतिः प्रकरणादुद्गीथमात्रविषयेतिव्यवस्थापयितुं शक्या; यतः प्रकरणाच्छ्रुतिर्बलीयसी; ४"यदेव विद्यया करोति" इति विद्यामात्रविषया ह्रीयं श्रुतिः ॥ ४ ॥

## समन्वारम्भणात् । ३ । ४ । ५ ॥

५"तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणोस्साहित्यं च

---

१. छा. ५-११-५ ॥—२. गी. ३-२० ॥—३. वि. ६-६-१२ ॥—४. छा, १-१-१० ॥—५. बृ. ६-४-२ ॥

दृश्यते । साहित्यं चोक्तेन न्यायेन विद्यायाः कर्माङ्गत्वे सत्येव भवति ॥

## तद्वतो विधानात् । ३ । ४ । ६ ॥

विद्यावतः कर्मविधानाद्विद्या कर्माङ्गमित्यवगम्यते—१"आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे" इत्यादौ । १"वेदमधीत्य" इत्यध्ययनवतः कर्माणि विदधदर्थावबोधपर्यन्ताध्ययनवत एव विदधाति । अर्थावबोधपर्यन्तं ह्यध्ययनमिति स्थापितम् । अतो ब्रह्मविद्यापि कर्मसु विनियुक्तेति न पृथक्फलायावकल्पते ॥ ६ ॥

## नियमात् । ३ । ४ । ७ ॥

इतश्च न विद्यातः पुरुषार्थः । २"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इत्यात्मविदः, पुरुषायुषस्य सर्वस्य कर्मसु नियमेन विनियोगात्कर्मण एव फलमित्यवगम्यते । विद्या तु कर्माङ्गमिति ॥ ७ ॥

—( सिद्धान्तः )—

एवं प्राप्ते प्रचक्ष्महे—

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् । ३ । ४ । ८ ॥

तुशब्दात्पक्षो व्यावृत्तः; विद्यात एव पुरुषार्थः; कुतः ? अधिकोपदेशात्-कर्मसु कर्तुर्जीवाद्धेयप्रत्यनीकानवधिकातिशयासंख्येयकल्याणगुणाकरत्वेनाधिकस्यार्थान्तरभूतस्य परस्य ब्रह्मणो वेद्यतयोपदेशात् भगवतो बादरायणस्य विद्यातः ३ फलमित्येवमेव मतम् । लिङ्गानि तिष्ठन्तु; वेद्यतयोपदेशस्तु तावत्कर्तुः प्रत्यगात्मनोऽधिकस्यैव । कथम् ? तद्दर्शनात्—प्रत्यगात्मन्यशुद्धे शुद्धेऽप्यसम्भावनीयानन्तगुणाकरस्य वेद्यस्य

१. छा. ८-१५-१ ॥—२. ईशावास्य-२ ॥—३. पुरुषार्थ इत्ये. पा ॥

निरस्तनिखिलहेयगन्धस्य स्वसङ्कल्पकृतजगदुदयविभवलयलीलस्य सर्वज्ञस्य सर्वशक्तेर्वाङ्मनसापरिच्छेद्यानन्दस्य जीवाधिपस्य कृत्स्नस्य प्रशासितुः परस्य ब्रह्मणो वेदनोपदेशवाक्येषु दर्शनात् १"अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" २"तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" ३"यस्सर्वज्ञस्सर्ववित्" ४ 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" ५"स एको ब्रह्मण आनन्दः" ६"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति" ७"एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरणः" ८"स कारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता नचाधिपः" ९"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः ( एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः )" १०"भीषास्माद्वातः पवते। भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चमः" इत्यादिषु। तस्माद्वेदनोपदेशशब्देषु कर्तुः प्रत्यगात्मनः खद्योतकल्पस्याविद्यादिहेयसम्बन्धयोग्यस्य गन्धोऽपि नास्तीति परमपुरुषविषयाया विद्यायास्तत्प्राप्तिरूपममृतत्वं तत्रतत्र श्रूयमाणं फलमिति विद्यातः पुरुषार्थ इति सुष्ठूक्तम् ॥ ८ ॥

लिङ्गान्यपि निरस्यन्ते—

## तुल्यं तु दर्शनम् । ३ । ४ । ९ ॥

यदुक्तं—ब्रह्मविदां कर्मानुष्ठानदर्शनाद्विद्या कर्माङ्गम्—इति; तन्न विद्याया अनङ्गत्वेऽपि तुल्यं दर्शनम्, ब्रह्मविदां कर्मानुष्ठानदर्शनमनैकान्तिकमित्यर्थः, अननुष्ठानस्यापि दर्शनात्। दृश्यते हि ब्रह्मविदां कर्म-

१. छा. ८-१-५ ॥—२. छा. ६-२-३ ॥—३. मु. १-१-९ ॥—४. श्वे. ६-८ ॥—५. तै. आन. ८-४ ॥—६. तै. आन. ४-१ ॥—७. बृ. ६-४-२२ ॥—८. श्वे. ६-९ ॥—९. बृ. ५-८-९ ॥—*कुण्डलितो वाक्यशेषः केषुचित्कोशेषु न दृश्यते ॥—१०. तै. आ. ८-१ ॥

त्यागः १"ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इत्यादौ । अतो ब्रह्मविदां कर्मत्यागदर्शनान्न विद्या कर्माङ्गम् । कथमिदमुपपद्यते—ब्रह्मविदां कर्मानुष्ठानमननुष्ठानञ्च ? फलाभिसन्धिरहितस्य यज्ञादिकर्मणो ब्रह्मविद्याङ्गत्वात्तथाविधस्य कर्मणोऽनुष्ठानदर्शनमुपपद्यते । वक्ष्यति च २"सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति । फलार्थस्य तस्यैव यज्ञादेः कर्मणो मोक्षैकफलब्रह्मविद्याविरोधित्वात्तस्याननुष्ठानदर्शनमुपपन्नतरम् । विद्यायाः कर्माङ्गत्वे कर्मत्यागः कथमपि नोपपद्यते ॥ ९ ॥

यदुक्तं—श्रुत्यैव विद्यायाः कर्माङ्गत्वमवगम्यते इति; तत्राह—

## असार्वत्रिकी । ३ । ४ । १० ॥

न सर्वविद्याविषयेयं श्रुतिः; अपितूद्गीथविद्याविषयैव ३"यदेव विद्यया करोति" इति यच्छब्दस्यानिर्धारितविशेषस्य ४"उद्गीथमुपासीत" इति प्रस्तुतोद्गीथविशेषनिष्ठत्वात् । नहि यत्करोति, तद्विद्ययेति सम्बध्यते; यदेव विद्यया करोति, तदेव वीर्यवत्तरमिति विद्यया क्रियमाणं यच्छब्देन निर्दिश्य तस्य हि वीर्यवत्तरत्वमुच्यते ॥ १० ॥

यच्चेदमुक्तं ५"तं विद्याकर्मणी समन्वारभेते" इति विद्याकर्मणोस्साहित्यदर्शनाद्विद्या कर्माङ्गम्—इति; तत्राह—

## विभागश्शतवत् । ३ । ४ । ११ ॥

५"तं विद्याकर्मणी समन्वारभेते" इत्यत्रोक्तेन न्यायेन विद्याकर्मणोर्भिन्नफलत्वाद्विद्या स्वस्मै फलाय समन्वारभते, कर्म च स्वस्मै फलायेति विभागो द्रष्टव्यः । शतवत्—यथा क्षेत्ररत्नविक्रयिणं शतद्वयमन्वेतीत्युक्ते क्षेत्रार्थं शतम्, रत्नार्थं शतमिति विभागः प्रतीयते; तथेहापि ॥

## अध्ययनमात्रवतः । ३ । ४ । १२ ॥

१ ॥—२. शारी. ३-४-२६ ॥—३. छा. १-१-१० ॥—४. छा. १-१-१ ॥—५. बृ. ६-४-२ ॥

यदुक्तं विद्यावतः कर्मविधानाद्विद्या कर्माङ्गम्–इति; नैतद्युक्तम्, १"वेदमधीत्य" इत्यध्ययनमात्रवतो विधानात्। नचाध्ययनविधिरेवार्थबोधे प्रवर्तयति, आधानवदध्ययनस्याक्षरराशिग्रहणमात्रे पर्यवसानात्। गृहीतस्य च स्वाध्यायस्य फलवत्कर्मावबोधित्वदर्शनात्तन्निर्णयफले तदर्थविचारे पुरुषः स्वयमेव प्रवर्तते; ततः कर्मार्थी कर्मज्ञाने प्रवर्तते, मोक्षार्थी च ब्रह्मज्ञान इति न विद्या कर्माङ्गम्। यद्यप्यध्ययनविधिरेवार्थावबोधे प्रवर्तयति; तथापि न विद्या कर्माङ्गम्, अर्थज्ञानादर्थान्तरत्वाद्विद्यायाः। यथा ज्योतिष्टोमादिकर्मस्वरूपविज्ञानात्फलसाधनभूतं कर्मानुष्ठानमर्थान्तरम्; तथाऽर्थज्ञानरूपाद्ब्रह्मस्वरूपविज्ञानादर्थान्तरमेव ध्यानोपासनादिशब्दवाच्या पुरुषार्थसाधनभूता विद्येति न तस्याः कर्मसम्बन्धगन्धो विद्यते ॥ १२ ॥

## नाविशेषात्। ३। ४। १३ ॥

यथोक्तं २"कुर्वन्नेवेह कर्माणि" इत्यात्मविदं ज्ञानाद्व्यावर्त्य यावज्जीवं कर्मानुष्ठाने नियमयतीति; तन्नोपपद्यते; अविशेषात्–नह्ययं नियमः फलसाधनभूतस्वतन्त्रकर्मविषय इति विशेषहेतुरस्ति, विद्याङ्गभूतकर्मविषयतयाऽप्युपपत्तेः। ३"कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इति च विदुषस्त्वाप्रयाणादुपासनस्यानुवर्तमानत्वात् ॥ १३ ॥

एवमर्थस्वाभाव्येन चोद्यं परिहृत्य २"कुर्वन्नेवेह कर्माणि" इत्यस्य वाक्यस्यार्थमाह–

## स्तुतयेऽनुमतिर्वा। ३। ४। १४ ॥

वाशब्दोऽवधारणार्थः; २"ईशावास्यमिदं सर्वम्" इति विद्याप्रकरणाद्विद्यास्तुतये सर्वदा कर्मानुष्ठानानुमतिरियम्। विद्यामाहात्म्यात्सर्वदा कर्म कुर्वन्नपि न लिप्यते कर्मभिरिति हि विद्या स्तुता भवति।

---

१. छा. ८-१५-१ ॥—२. ईशावास्य. २ ॥—३. गी. ३ २० ॥

वाक्यशेषश्चैवमेव दर्शयति—[1]"एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे" इति। अतो न कर्माङ्गं विद्या ॥ १४ ॥

## कामकारेण चैके । ३ । ४ । १५ ॥

अपि चैवमेके शाखिनः कामकारेण ब्रह्मविद्यानिष्ठस्य गार्हस्थ्यत्यागमधीयते [2]"किं प्रजया करिष्यामो येषां नोयमात्माऽयं लोकः" इति। विदुषो विरक्तस्य कामकारेण गार्हस्थ्यकर्मत्यागं ब्रुवदिदं वचनं ब्रह्मविद्यायाः कर्मानङ्गत्वं दर्शयति। यज्ञादिकर्माङ्गत्वेहि विद्यायाः विद्यानिष्ठस्य कामकारेण गार्हस्थ्यत्यागो न सम्भवति। अतो न विद्या कर्माङ्गम् ॥ १५ ॥

## उपमर्दं च । ३ । ४ । १६ ॥

पुण्यापुण्यरूपस्य समस्तसांसारिकदुःखमूलस्य कर्मणो ब्रह्मविद्ययोपमर्दं च प्रतिवेदान्तमधीयते। [3]"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्यादिकम्। तद्विद्यायाः कर्माङ्गत्वे न सङ्गच्छते ॥ १६ ॥

## ऊर्ध्वरेतस्सु च शब्दे हि । ३ । ४ । १७ ॥

ऊर्ध्वरेतस्स्वाश्रमेषु ब्रह्मविद्यादर्शनात्तेष्वग्निहोत्रदर्शपूर्णमासादिकर्माभावाच्च न विद्या कर्माङ्गम्। ननूर्ध्वरेतस आश्रमा न सन्त्येव [4]"यावज्जीवमग्निहोत्रं जुहोति" इत्यादिनाऽग्निहोत्रदर्शपूर्णमासादीनां यावज्जीवाधिकारश्रुतेः; श्रुतिविरुद्धानां स्मृतीनां चाप्रामाण्यात्। अत आह—शब्दे हि—इति। वैदिक एव हि शब्दे ते दृश्यन्ते[5]"त्रयो धर्मस्कन्धाः"[6] "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" [2]"एतमेव प्रव्राजिनो लोकमिच्छन्तः

---

१. ईशा. १-२ ॥—२. बृ. ६-४-२२ ॥—३. मु. २-२-८ ॥—४. आपस्तम्बश्रौत. ३-१४-८ ॥ बह्वृच इति शाबरः ॥—५. छा. २-२३-१ ॥—६. छा- ५ १०-१ ॥

प्रव्रजन्ति" इत्यादौ । यावज्जीवश्रुतिस्त्वविरक्तविषया ॥ १७ ॥

## परामर्शं जैमिनिरचोदनाच्चापवदति हि ।३।४।१८॥

यदिदं १"त्रयो धर्मस्कन्धाः" इत्यादौ वैदिके शब्दे ऊर्ध्वरेतस आश्रमा दृश्यन्ते ; अतस्ते सन्त्येवेति; नैतदुपपद्यते; यतः १"त्रयो धर्मस्कन्धाः"इत्यादिषु वाक्येषु तेषामाश्रमाणां परामर्शमात्रं क्रियते–अनुवादमात्रमित्यर्थः । कुत एतत् ? अचोदनात्–अविधानादित्यर्थः । न ह्यत्र विधिशब्दः श्रूयते; १"त्रयो धर्मस्कन्धाः" इत्यादिना हि प्रकृतं प्रणवेन ब्रह्मोपासनं स्तूयते, १"ब्रह्मसंस्थोऽमृतत्वमेति" इत्युपसंहारात् । अतोऽन्यार्थमनुवादमात्रमत्र क्रियते तेषामाश्रमाणाम् । २"ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इति च देवयानविधिपरत्वात्तत्रापि नाश्रमान्तरविधिसम्भवः । अपि चापवदति हि श्रुतिराश्रमान्तरं ३"वीरहा वा एष देवानां योऽग्निमुद्वासयते" इत्यादिका । अत ऊर्ध्वरेतस आश्रमा न सन्तीति जैमिनिराचार्यो मन्यते ॥ १८ ॥

## अनुष्ठेयं बादरायणस्साम्यश्रुतेः । ३ । ४ । १९ ॥

गृहस्थाश्रमवदाश्रमान्तरमप्यनुष्ठेयं भगवान् बादरायणो मन्यते । कुतः? साम्यश्रुतेः–उपादेयतयाऽभिमतगृहस्थाश्रमसाम्यं हि तेषामप्याश्रमाणां श्रूयते । १"त्रयो धर्मस्कन्धाः" इत्यारभ्य ब्रह्मसंस्थस्तुत्यर्थतया सङ्कीर्तनं गृहस्थाश्रमस्येतरेषां च समानम् ; अथ गृहस्थाश्रमस्यानुवादः प्राप्तौ सत्यामेव संभवतीति तस्य प्राप्तिरवश्याभ्युपेत्येति मतम्; तदितरेषामपि समानमन्यत्राभिनिवेशात् । नच गार्हस्थ्यधर्म एव १"यज्ञोऽध्ययनं दानं तपो ब्रह्मचर्यम् इति सर्वैश्शब्दैरभिधीयते, ब्रह्मचर्यतपसोर्गृहस्थस्यैव सम्भवादिति युक्तम्, १"त्रयो धर्मस्कन्धाः" इति त्रित्वेन संगृह्य १"प्रथमो...द्वितीयः...तृतीयः"इति विभागवचनानुपपत्तेः । अतः

१.छा. २-२३-१॥—२.छा. ५-१०-१॥—३. यजु. १-कां.५प्र.२-अनु.

१"यज्ञोऽध्ययनं दानम्" इति गृहस्थाश्रम उच्यते। अध्ययनशब्दो वेदाभ्यासपरः। तपश्शब्देन वैखानसपारिव्राज्ययोर्ग्रहणम्, उभयोः तपः प्रधानत्वात्। तपश्शब्दो हि कायक्लेशे रूढः;स च द्वयोरपि समानः। ब्रह्मचारिधर्म एव ब्रह्मचर्यशब्देनाभिधीयते। १"ब्रह्मसंस्थोऽमृतत्वमेति" इति परत्र श्रूयमाणो ब्रह्मसंस्थशब्दो यौगिकः सर्वाश्रमसाधारणः, सर्वेषामाश्रमिणां ब्रह्मसंस्थासम्भवात्। ब्रह्मणि संस्था-संस्थितिः ब्रह्मसंस्थत्वम्; तच्च सर्वेषां सम्भवत्येव। ब्रह्मनिष्ठाविकलाः केवलाश्रमिणः पुण्यलोकभाजः; तेष्वेव ब्रह्मनिष्ठोऽमृतत्वभाग्भवति। तदेतद्विस्पष्टमुक्तं भगवता पराशरेण २"प्राजापत्यं ब्राह्मणानाम्" इत्यारभ्य ३ "ब्राह्मं संन्यासिनां स्मृतम्" इत्यन्तेन वर्णानामाश्रमाणां च केवलानां ब्रह्मलोकप्राप्त्यन्तं फलमभिधाय ४"एकान्तिनस्सदा ब्रह्मध्यायिनो योगिनो हि ये। तेषां तत्परमं स्थानं यद्वै पश्यन्ति सूरयः" इति तेष्वेव ब्रह्मनिष्ठानां ब्रह्मप्राप्तिमभिदधता। अतो गृहस्थाश्रमतुल्याः ऊर्ध्वरेतस आश्रमा अपि दृश्यन्त इति तेऽप्यनुष्ठेयाः। ५"ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इति च अरण्ये इति तपः प्रधानाश्रमप्राप्त्यपेक्षत्वाद्देवयानविधानस्य तत्रापि तत्प्राप्तिरङ्गीकरणीया ॥ ६ ॥

परामर्शपक्षे विधानपक्षे च गृहस्थाश्रमतुल्यमेषामप्यनुष्ठेयत्वमित्युपपाद्य विधिरेवायमाश्रमाणां सर्वेषां, नानुवाद इत्युपपादयितुमाह—

## विधिर्वा धारणवत् । ३ । ४ । २० ॥

वा शब्दोऽवधारणार्थः। विधिरेवायमाश्रमाणाम्; धारणवत्-यथा दिष्टाग्निहोत्रे ६"अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति" इत्यत्रानुवादसरूपादपि वाक्यादुपरि धारणस्याप्राप्तत्वाद्विधिराश्रीयते; तदुक्तं शेषलक्षणे ७" विधिस्तु धारणेऽपूर्वत्वात्" इति; तथाऽत्राप्यप्राप्त-

१. छा. २-२३-१ ॥—२. वि-पु. १-६-३४ ॥—३. वि-पु. १-६-३७॥
४. वि-पु. १-६-३८ ॥—५.छा. ५-१०-१॥—६.॥—७. पू.मी० ३-४-१५ ॥

त्वाद्विधिरेवाश्रयणीयः । १"ब्रह्मचर्यं समाप्य गृही भवेत् गृहाद्वनी भूत्वा प्रव्रजेत् यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इति जाबालानामाश्रमविधिमसन्तमिव कृत्वैतेष्वन्यपरेष्वपि वाक्येष्वाश्रमप्राप्तिरवश्याश्रयणीयेत्युपपादितम् । एवमाश्रमान्तरविधानादहरणश्रुतिर्यावज्जीवश्रुतिरपवादश्रुतिश्चाविरक्तविषया एवेति वेदितव्याः । अन्यश्च ब्रह्मविदः कर्मणामाप्रयाणादवश्यकर्तव्यताविधायिन्यः श्रुतयः स्मृतयश्च स्वस्वाश्रमधर्मविषयाः । अत ऊर्ध्वरेतस्सु च ब्रह्मविद्याविधानाद्विद्यातः पुरुषार्थ इति सिद्धम् ॥ २० ॥

इति श्रीशारीरकमीमांसाभाष्ये पुरुषार्थाधिकरणम् ॥ १ ॥

---

( श्रीशारीरकमीमांसाभाष्ये स्तुतिमात्राधिकरणम् ॥२॥ )

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ३ ४।२१॥

इदमिदानीं चिन्त्यते २ "स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः" इति एवंजातीयकानि वाक्यानि क्रत्ववयवभूतोद्गीथादिस्तुतिमात्रपराणि, आहोस्विदुद्गीथादिषु रसतमादिदृष्टिविधानार्थानीति । अत्र प्रतिपादितमुपासनपरत्वमङ्गीकृत्योपासनस्य पुरुषार्थत्वेन क्रतुपूपादानानियम उक्तः । किं युक्तम् ? स्तुतिमात्रपराणीति । कुतः ? उद्गीथाद्युपादानात् । क्रत्वङ्गभूतानि ह्युद्गीथादीन्युपादाय तेषां रसतमादित्वं प्रतिपादितम् ; यथा जुह्वादीनां पृथिव्यादित्वं प्रतिपादयतो वचनस्य ३"इयमेव जुहूः स्वर्गो लोक आहवनीयः" इत्यादिकस्य तत्स्तुतिमात्रपरत्वम् , तथेहापि । तदिदमाशङ्कते—स्तुतिमात्रमुपादानादितिचेत्-इति । उद्गीथाद्युपादानात्तत्स्तुतिमात्रमेवैषां वाक्यानां विवक्षितमिति चेत्-

---

१. जाबालोप. ४ ख. ॥—२. छा. १-१-३ –॥-३. ॥

—( सिद्धान्तः )—

अत्रोत्तरं—नापूर्वत्वात्-इति । न स्तुतिमात्रत्वमुपपद्यते; कुतः ? अपूर्वत्वात्-अप्राप्तत्वात् । न ह्युद्गीथादयो रसतमादितया प्रमाणान्तरेण प्रतिपन्नाः; येन तत्प्राशस्त्यबुद्ध्युत्पत्त्यर्थं रसतमादित्वेनानूद्येरन् । नचोद्गीथादिविधिरत्र सन्निहितः; येन १"इयमेव जुहूस्स्वर्गो लोक आहवनीयः" इत्यादिवत्तदेकवाक्यत्वेन यथाकथाचन विधया तत्स्तुतिपरत्वमाश्रीयेत । अतः क्रतुवीर्यवत्तरत्वादिफलसिद्ध्यर्थमुद्गीथादिषु रसतमादिदृष्टिविधानमेव न्याय्यम् ॥ २१ ॥

## भावशब्दाच्च । ३ । ४ । २२ ॥

२"उपासीत" इत्यादिभावशब्दाच विधिपरत्वमेव न्याय्यम् । विधिप्रत्यययुक्तो हि क्रिया शब्दो विधेयमेव स्वार्थमवगमयति । तस्मादुपासनविधानार्था एताश्श्रुतयः ॥ २२ ॥

इति श्रीशारीरकमीमांसाभाष्ये स्तुतिमात्राधिकरणम् ॥ २ ॥

———

(श्रीशारीरकमीमांसाभाष्ये पारिप्लवार्थाधिकरणम् ॥ ३ ॥ )

——:※:——

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ।३।४।२३॥

३ 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम" ४ ' श्वेतकेतुर्हारुणेय आस" इत्येवमादीनि वेदान्तेष्वाख्यानानि किं पारिप्लवप्रयोगार्थानि, उत विद्याविशेषप्रतिपादनार्थानीति चिन्तायाम् ५ "आख्यानानि शंसन्ति" इत्याख्यानानां पारिप्लवे विनियोगात्र विद्याप्रधानत्वं न्याय्यमिति चेत्—

---

१. ॥—२. छा. १-१-१ ॥—३. कौ. ३-१ ॥—४. छा. ६-१-१ ॥ ५. ॥

—( सिद्धान्तः )—

न सर्वाण्याख्यानानि पारिप्लवप्रयोगे विनियोगमर्हन्ति; कुतः ? विशेषितत्वाद्विनियोगस्य। १"आख्यानानि शंसन्ति" इत्युक्त्वा तत्रैव २"मनुर्वैवस्वतो राजा" इत्यादिना मन्वादीनामाख्यानानि विशेष्यन्ते; अतस्तेषामेव तत्र विनियोग इति गम्यते। तस्मान्न सर्वा वेदान्तेष्वाख्यानश्रुतयः पारिप्लवप्रयोगार्थाः; अपि तु विद्याविध्यर्थाः ॥ २३ ॥

## तथा चैकवाक्योपबन्धात् । ३ । ४ । २४ ॥

३"आत्मा वा अरे द्रष्टव्यः" इत्यादिविधिभिरेकवाक्यतयोपबन्धाचाख्यानानां विद्याविध्यर्थान्येव तानीति गम्यते; यथा ४"सोऽरोदीत्" इत्येवमादेः कर्मविध्यर्थत्वम्; न पारिप्लवार्थत्वम् ॥ २४ ॥

इति श्रीशारीरकमीमांसाभाष्ये पारिप्लवार्थाधिकरणम् ॥ ३ ॥

( श्रीशारीरकमीमांसाभाष्ये अग्नीन्धनाद्यधिकरणम् ॥ ४ ॥)

## अत एव चाग्नीन्धनाद्यनपेक्षा । ३ । ४ । २५ ॥

स्तुतिप्रसङ्गादवान्तरसङ्गतिविशेषेणार्थद्वयं चिन्तितम्। विद्यावन्त ऊर्ध्वरेतस आश्रमिणस्सन्तीत्युक्तम् ५" ऊर्ध्वरेतस्सु च शब्दे हि " इत्यादिभिस्सूत्रैः। इदानीमूर्ध्वरेतसो यज्ञाद्यभावात्तदङ्गिका विद्या न सम्भवतीत्याशङ्क्याह—अत एव चाग्नीन्धनाद्यनपेक्षा—इति। यत ऊर्ध्वरेतस आश्रमिणो विद्यासम्बन्धित्वेन श्रुत्या परिगृह्यन्ते ६"ब्रह्मसंस्थोऽमृतत्वमेति" ७"ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" ८"एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" ९" यदिच्छन्तो ब्रह्मचर्यं चरन्ति " इत्यादिकया;

१. ॥—२. ॥—३. बृ. ६-५-६ ॥—४. यजु. १-५-१ ॥—५. शारी. ३-४-१७ ॥—६. छा. २-२३-१ ॥—७. छा. ५-१०-१ ॥—८. बृ. ६-४-२२ ॥ ९. कठ. १-२-१५ ॥

अत एवोर्ध्वरेतस्सु विद्या अग्नीन्धनाद्यनपेक्षा—अग्नीन्धनम्–अग्न्याधानम्; आधानपूर्वकाग्निहोत्रदर्शपूर्णमासादिकर्मानपेक्षा तेषु विद्या। केवलस्वाश्रमविहितकर्मापेक्षेत्यर्थः ॥ २५ ॥

इति श्रीशारीरकमीमांसाभाष्ये अग्नीन्धनाद्यधिकरणम् ॥ ४ ॥

---

( श्रीशारीरकमीमांसाभाष्ये सर्वापेक्षाधिकरणम् ॥ ५ ॥ )

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् । ३ । ४ । २६ ॥

यदि विद्या यज्ञाद्यनपेक्षैवामृतत्वं साधयति; तर्हि गृहस्थेष्वपि तदनपेक्षैव साधयितुमर्हति, यज्ञादिश्रुतिरपि १"विविदिषन्ति" इति शब्दात्कर्मणो वेदनाङ्गत्वं न प्रतिपादयतीति–

–( सिद्धान्तः )–

अत आह–सर्वापेक्षा–इति। अग्निहोत्रादिसर्वकर्मापेक्षैव विद्या कर्मवत्सु गृहस्थेषु; कुतः? यज्ञादिश्रुतेः। १'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इत्यादिना यज्ञादयो हि विद्याङ्गत्वेन श्रूयन्ते। यज्ञादिना विविदिषन्ति वेदितुमिच्छन्ति, यज्ञादिभिर्वेदनं प्राप्तुमिच्छन्तीत्यर्थः। यज्ञादीनां ज्ञानसाधनत्वे सत्येव यज्ञादिभिः ज्ञानं प्राप्तुमिच्छन्तीति व्यपदेश उपपद्यते; यथा असेर्हननसाधनत्वे सति असिना जिघांसतीति व्यपदेशः अतो यज्ञादीनां ज्ञानसाधनत्वमवगम्यते। ज्ञानं च वाक्यार्थज्ञानादर्थान्तरभूतं ध्यानोपासनादिशब्दवाच्यं विशदतमप्रत्यक्षतापन्नस्मृतिरूपं निरतिशयप्रियमहरहरभ्यासाधेयातिशयमाप्रयाणादनुवर्तमानं मोक्षसाधनमित्युक्तमस्माभिः पूर्वमेव; वक्ष्यति च २"आवृत्तिरसकृदुपदेशात्" इत्यादिना। एवं रूपं च ध्यानमहरहरनुष्ठीयमानैर्नित्यनैमित्तिककर्मभिः परमपुरुषाराधनरूपैः

---

१. बृ. ६-४-२२ ॥—२. शारी. ४-१-१ ॥

परमपुरुषप्रसादद्वारेण जायत इति यज्ञादिना विविदिषन्तीति शास्त्रेण प्रतिपाद्यते। अतः कर्मवत्सु गृहस्थेषु यज्ञादिनित्यनैमित्तिकसर्वकर्मापेक्षा विद्या। अश्ववत्--यथा गमनसाधनभूतोऽश्वः स्वपरिकरबन्धपरिकर्मापेक्षः; एवं मोक्षसाधनभूताऽपि विद्या नित्यनैमित्तिककर्मपरिकरापेक्षा। तदिदमाह स्वयमेव भगवान् १"यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत्। यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्" २"यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति॥ २६॥

इति श्रीशारीरकमीमांसाभाष्ये सर्वापेक्षाधिकरणम्॥ ५॥

---

( श्रीशारीरकमीमांसाभाष्ये शमदमाद्यधिकरणम्॥ ६॥ )

---

## शमदमाद्युपेतस्स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात्। ३। ४। २७॥

गृहस्थस्य शमदमादीन्यप्यनुष्ठेयानि, उत नेति चिन्तायाम्—आन्तरबाह्यकरणव्यापाररूपत्वात्कर्मानुष्ठानस्य, शमदमादीनां तद्विपरीतरूपत्वाद्यानननुष्ठेयानि—

–( सिद्धान्तः )–

इति प्राप्त उच्यते—यद्यपि गृहस्थः करणव्यापाररूपकर्मसु प्रवृत्तः, तथाऽपि स विद्वान् शमदमाद्युपेतस्स्यात्; कुतः? तदङ्गतया तद्विधेः—विद्याङ्गतया तेषां विधेः ३"तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत्" इति। विद्योत्पत्तेश्चित्तसमाधानरूपत्वेन दृष्टपरिकरत्वाच्छमादीनां, विद्यानिर्वृत्तये तेषां—शमादीनामप्यवश्यानुष्ठेयत्वाच्च तान्यप्यनुष्ठेयानि। नच करणव्यापारतन-

---

१.-गी. १८-५॥—२. गी. १८-४६॥—३. बृ. ६-४-२३॥

विपर्ययरूपत्वेन कर्मणां शमदमादीनां च परस्परविरोधः, भिन्नविषयत्वात्तु विहितेषु करणव्यापारः, अविहितेषु प्रयोजनशून्येषु च तदुपशम इति। नच करणव्यापाररूपकर्मसु वर्तमानस्य वासनावशाच्छमादीनामुपादेयत्वसम्भवः, विहितानां कर्मणां परमपुरुषाराधनतया तत्प्रसादद्वारेण निखिलविपरीतवासनोच्छेदहेतुत्वात्। अतो गृहस्थस्य शमदमादयोऽप्यनुष्ठेयाः ॥ २७ ॥

इति श्रीशारीरकमीमांसाभाष्ये शमदमाद्यधिकरणम् ॥ ६ ॥

---

—( श्रीशारीरकमीमांसाभाष्ये सर्वान्नानुमत्यधिकरणम् ॥७॥ )—

# सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ।३। ४। २८॥

वाजिनां छन्दोगानां च प्राणविद्यायां १"न ह वा अस्यानन्नं दग्धं भवति नानन्नं परिगृहीतं भवति" २"नह वा एवंविदि किञ्चनानन्नं भवति" इति प्राणविदः सर्वान्नानुमतिः सङ्कीर्त्यते; किमियं प्राणविद्यानिष्ठस्य सर्वान्नानुमतिः सर्वदा, उत प्राणात्ययापत्ताविति विशये, विशेषानुपादानात्सर्वदा—

—( सिद्धान्तः )—

इति प्राप्त उच्यते-प्राणात्यये-इति । चशब्दोऽवधारणे; प्राणात्ययापत्तावेवेत्यर्थः । कुतः? तद्दर्शनात्—दृश्यते ह्यन्यत्र ब्रह्मविदामपि प्राणात्ययापत्तावेव सर्वान्नाभ्यनुज्ञा ; किं पुनः प्राणविदः । उषस्तिः किल चाक्रायणो ब्रह्मविदग्रेसरो मटचीहतेषु कुरुषु दुर्भिक्षदूषितेष्विभ्यग्रामे वसन्ननशनेन प्राणसंशयमापन्नो ब्रह्मविद्यानिष्पत्तये प्राणानामनवसादमाकाङ्क्षमाण इभ्यं कुल्माषान् खादन्तं भिक्षमाणस्तेन च उच्छिष्टेभ्योऽन्ये न विद्यन्त इति प्रत्युक्तः पुनरपि ३"एतेषां मे देहि" इत्युक्त्वा तेन·

१. बृ. ८-१-१४ ॥—२. छा. ५-२-१ ॥—३. छा. १-१०-३,४ ॥

चेभ्येनोच्छिष्टेभ्य आदाय दत्तान् कुल्माषान् प्रतिगृह्यानुपानप्रतिग्रहमिभ्येनार्थितः १' उच्छिष्टं वै मे पीतं स्यात्" इति वदंश्चाक्रायणः किमेते कुल्माषा अनुच्छिष्टा इति इभ्येन पर्यनुयुक्तः १"न वा अजीविष्यमिमानखादन्...कामो म उदपानम्" इति कुल्माषाखादने स्वस्य प्राणसंशयापत्तेस्तावन्मात्रखादनेन धृतप्राणस्य स्वस्योच्छिष्टोदकपानं कामकारितं निषिद्धं स्यादित्युक्त्वा स्वखादितशेषं जायायै दत्वा तथा च रक्षितानपरेद्युर्याजनेनार्जिजीपया जिगमिषुः पुनरपि प्राणसंशयमापन्नस्तानेवेभ्योच्छिष्टान् स्वोच्छिष्टभूतान् पर्युषितांश्चखाद। अतो ब्रह्मविदामपि प्राणसंशय एव सर्वान्नानुमतिदर्शनादत्राविशेषेण कीर्तितमपि प्राणविदस्सर्वान्नीनत्वं प्राणात्ययापत्तावेवेति निश्चीयते ॥ २८ ॥

## अबाधाच्च । ३ । ४। २९ ॥

२"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति ब्रह्मविद्योत्पत्तावाहारशुद्धिविधानाबाधादपि ब्रह्मविदां सर्वान्नीनत्वमापद्विषयमवगम्यते। एवं ब्रह्मविदामतिशयितशक्तीनामपि सर्वान्नीनत्वस्यापद्विषयत्वात्प्राणविदोऽल्पशक्तेः सर्वान्नानुमतिरापद्विषयैव ॥२६॥

## अपि स्मर्यते ३ । ४ । ३० ॥

अपि च आपद्विषयमेव सर्वान्नीनत्वं ब्रह्मविदामन्येषां च स्मर्यते – ३"प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः। लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" इति ॥ ३० ॥

## शब्दश्चातोऽकामकारे । ३ । ४ । ३१ ॥

यतो ब्रह्मविदामन्येषां च सर्वान्नीनत्वमापद्विषयमेव; अत एव सर्वेषामकामकारे शब्दः-कामकारस्य प्रतिषेधकः शब्दो वर्तते। अस्ति हि कठानां संहितायां कामकारस्य प्रतिषेधकः शब्दः ४तस्माद्ब्राह्मण-

१. छा. १-१०-३, ४ ॥ -- २. छा. ७-२६-२ ॥--३॥--
४. नोत्मसृजा इति, पा ॥

सुरां न पिबति पाप्मना १"नोत्सृजा इति" इति । पाप्मना संसृष्टो न भवानीति मत्वा ब्राह्मणः सुरां न पिबतीत्यर्थः ॥ ३१ ॥

इति श्रीशारीरकमीमांसाभाष्ये सर्वान्नानुमत्यधिकरणम् ॥ ७ ॥

---

( श्रीशारीरकमीमांसाभाष्ये विहितत्वाधिकरणम् ॥८॥ )

---

## विहितत्वाच्चाश्रमकर्मापि । ३ । ४ । ३२ ॥

यज्ञादिकर्माङ्गिका ब्रह्मविद्येत्युक्तम्; तानि च यज्ञादीनि कर्माण्यमुमुक्षुणा केवलाश्रमिणाऽप्यनुष्ठेयानि, उत नेति चिन्तायां, विद्याङ्गानां सतां २ केवलाश्रमशेषत्वे नित्यानित्यसंयोगविरोधः प्रसज्यत इति यज्ञादीनां ३ केवलाश्रमधर्मत्वं न सम्भवति—

—[ सिद्धान्तः ]—

इति प्राप्त उच्यते—आश्रमकर्मापि—इति । आश्रमस्य कर्मापि भवति । केवलाश्रमिणापि अनुष्ठेयानीत्यर्थः । कुतः ? ४"यावज्जीवमग्निहोत्रं जुहोति" इत्यादिना विहितत्वात्—जीवननिमित्ततया नित्यवद्विहितत्वादित्यर्थः ॥ ३२ ॥

तथा विद्याङ्गतया च ४ 'तमेतं वेदानुवचनेन" इत्यादिना विहितत्वाद्विद्याशेषतयाप्यनुष्ठेयानीत्याह—

## सहकारित्वेन च । ३ । ४ । ३३ ॥

विद्योत्पत्तिद्वारेण विद्यासहकारितयाऽप्यनुष्ठेयानि । अग्निहोत्रादीनामिव जीवनाधिकार स्वर्गाधिकारवत् विनियोगपृथक्त्वेनोभयार्थत्वं न विरुध्यत इत्यर्थः ॥ ३३ ॥

---

१. नोत्संसृजा इति. पा ॥—२. केवलाश्रमिशेषत्वे. पा ॥—३. केवलाश्रमिधर्मत्वं. पा ॥—४ ॥

तद्वदेव कर्मान्तरत्वमपि नास्तीत्याह—

## सर्वथापि त एवोभयलिङ्गात् । ३ । ४ । ३४ ॥

सर्वथा–विद्यार्थत्वे आश्रमार्थत्वेऽपि, त एव यज्ञादय इति प्रतिपत्तव्यम्; न कर्मस्वरूपभेद इत्यर्थः। कुतः ? उभयलिङ्गात्--उभयत्र श्रुतौ यज्ञादिशब्दैः प्रत्यभिज्ञाप्य विनियोगात्, कर्मस्वरूपभेदे प्रमाणाभावाच्च ॥ ३४ ॥

## अनभिभवं च दर्शयति । ३ । ४ । ३५ ॥

१"धर्मेण पापमपनुदति" इत्यादिभिश्च तानेव यज्ञादिधर्मान्निर्दिश्य तैर्विद्याया अनभिभवं--पापकर्मभिरुत्पत्तिप्रतिबन्धाभावं दर्शयति। अहरहरनुष्ठीयमानैर्हि यज्ञादिभिर्विशुद्धेऽन्तःकरणे प्रत्यहं प्रकृष्यमाणा विद्योत्पद्यते। अतस्त एवोभयत्र यज्ञादयः ॥ ३५ ॥

इति श्रीशारीरकमीमांसाभाष्ये विहितत्वाधिकरणम् ॥ ८ ॥

श्रीशारीरकमीमांसाभाष्ये विधुराधिकरणम् ॥९॥

## अन्तरा चापि तु तद्दृष्टेः । ३ । ४ । ३६ ॥

चतुर्णामाश्रमिणां ब्रह्मविद्यायामधिकारोऽस्ति; विद्यासहकारिण आश्रमधर्मा इति चोक्तम्। ये पुनराश्रमानन्तरा वर्तन्ते विधुरादयः; तेषां ब्रह्मविद्यायामधिकारोऽस्ति, नवेति विशये--आश्रमधर्मेतिकर्तव्यताकत्वाद्विद्यायाः, अनाश्रमिणां चाश्रमधर्माभावान्नास्त्यधिकारः--

—( सिद्धान्तः )—

इति प्राप्त उच्यते–अन्तराचापितु–इति। तुशब्दः पक्षव्यावृत्त्यर्थः; चशब्दोऽवधारणे अन्तरा वर्तमानानाम्–अनाश्रमिणामपि विद्याया-

१. तै. ना. ५० अनु ॥

मधिकारोऽस्त्येव । कुतः ? तद्दृष्टेः-दृश्यते हि रैक्वभीष्मसंवर्तादीनामनाश्रमिणामपि ब्रह्मविद्यानिष्ठत्वम् नचाश्रमधर्मैरेव विद्यानुग्रह इति शक्यं वक्तुम्, १"यज्ञेन दानेन तपसानाशकेन" इति दानादीनामाश्रमेषु २अनैकान्तिकानामप्यनुग्राहकत्वदर्शनात् । यथोर्ध्वरेतस्सु विद्यानिष्ठत्वदर्शनादग्निहोत्रादिव्यतिरिक्तैरेव विद्यानुग्रहः क्रियते; तथाऽनाश्रमिष्वपि विद्यादर्शनादाश्रमानियतैर्जपोपवासदानदेवताराधनादिभिर्विद्यानुग्रहश्शक्यते कर्तुम् ॥ ३६ ॥

## अपि स्मर्यते । ३ ४ । ३७ ।

अपिच अनाश्रमिणामपि जपादिभिरेव विद्यानुग्रहः स्मर्यते ३"जप्येनापि च संसिध्येद्ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते" इति । संसिध्येत्--जपाद्यनुगृहीतया विद्यया सिद्धो भवतीत्यर्थः॥ ३७ ॥

## विशेषानुग्रहश्च । ३ । ४ । ३८ ।

न केवलं न्यायस्मृतिभ्यामयमर्थस्साधनीयः; श्रूयते चानाश्रमनियतैर्धर्मविशेषैर्विद्यानुग्रहः ४"तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्येत्" इति ॥ ३८ ॥

## अतस्त्वितरज्ज्यायो लिङ्गाच्च । ३ । ४ । ३९ ॥

तुशब्दोऽवधारणे; अतः-अनाश्रमित्वात् इतरत्-आश्रमित्वमेव ज्यायः, अनाश्रमित्वमापद्विषयम् ; शक्तस्य त्वाश्रमित्वमेवोपादेयमित्यर्थः; भूयोधर्मकाल्पधर्मकयोरतुल्यकार्यत्वात् ; लिङ्गाच्च-स्मृतेरित्यर्थः । स्मर्यते च शक्तं प्रत्याश्रमस्योपादेयत्वम् ५"अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः" इत्यादिना । निवृत्तब्रह्मचर्यस्य मृतभार्यस्य च अवैराग्ये सति दारालाभ आपत् ॥ ३९ ॥

इति श्रीशारीरकमीमांसाभाष्ये विधुराधिकरणम् ॥ ६ ॥

---

१. बृ. ६-४-२२ ॥—२. अनेकान्तानां. पा ॥—३. मनु. २ ८७ ॥—
४. प्रश्नोप. १-१० ॥—५ ॥

( श्रीशारीरकमीमांसाभाष्ये तद्भूताधिकरणम् ॥ १० ॥)

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमा-त्तद्रूपाभावेभ्यः । ३ । ४ । ४० ॥

नैष्ठिकवैखानसपरिव्राजकाश्रमेभ्यः प्रच्युतानामपि ब्रह्मविद्याया-मधिकारोऽस्ति, नेति चिन्तायां--विधुरादिवदनाश्रमैकान्तैर्दानादिभि-र्विद्यानुग्रहसम्भवादस्त्यधिकारः—

--( सिद्धान्तः )--

इति प्राप्त उच्यते-तद्भूतस्य तु नातद्भावः-इति । तुशब्दः पक्षव्या-वृत्त्यर्थः; तद्भूतस्य—नैष्ठिकाद्याश्रमनिष्ठस्य, नातद्भावः-अतथाभावः, अ-नाश्रमित्वेनावस्थानं न सम्भवति; कुतः ? तद्रूपाभावेभ्यो नियमात्-तद्रू-पाणि तेषां नैष्ठिकादीनां रूपाणि-वेषाः, धर्मा इत्यर्थः; तेषामभावाः-तद्रू-पाभावाः; तेभ्यः शास्त्रैर्नियमात् । नैष्ठिकाद्याश्रमप्रविष्टान् स्वाश्रमधर्मनि-वृत्तिभ्यो नियच्छन्ति हि शास्त्राणि १ "ब्रह्मचार्याचार्यकुलवासी तृती-योत्यन्तमात्मानमाचार्यकुलेऽवसादयन्" इति, २ "अरण्यमियात्ततो न पुनरेयात्" इति, ३"सन्न्यस्याग्निं न पुनरावर्तयेत्" इतिच । अतो विधु रादिवत् नैष्ठिकादीनामनाश्रमित्वेनावस्थानासम्भवान्न तानधिकरोति ब्र-ह्मविद्या; जैमिनेरपि-इत्यविगानं दर्शयन्नुक्तं स्वाभिमतं द्रढयति ॥४०॥

अथ स्यात्—नैष्ठिकादीनां ब्रह्मचर्यात्प्रच्युतानां प्रायश्चित्तादधि-कारस्सम्भवति; अस्ति च प्रायश्चित्तमधिकारलक्षणे निरूपितम् ४ "अ-वकीर्णिपशुश्च तद्वत्" इति अतः प्रच्युतब्रह्मचर्यस्य प्रायश्चित्तसम्भवा-त्कृतप्रायश्चित्तो ब्रह्मविद्यायामधिकरिष्यति-इति; तत्राह—

---

१. छा. २-२३-१ ॥--२. ॥—३. यजुषि. काठके ॥—४. ॥

## नचाधिकारिकमपि पतनानुमानात्तद-योगात् । ३ । ४ । ४१ ॥

अधिकारलक्षणोक्तमपि प्रायश्चित्तं नैष्ठिकादीनां तद्भ्रष्टानां न सम्भवति; कुतः ? पतनानुमानात्तद्योगात्—नैष्ठिकादीनां प्रच्युतानां पतनस्मृतेस्तस्य प्रायश्चित्तस्यासम्भवात्—१"आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः । प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा" इति । अतोऽधिकारिलक्षणोक्तं प्रायश्चित्तमितरब्रह्मचारिविषयम् ॥ ४१ ॥

## उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ।३।४।४२॥

नैष्ठिकादीनां ब्रह्मचर्यप्रच्यवनमुपपूर्वम्—उपपातकम् .महापातकेष्वपरिगणितत्वादिति तत्र प्रायश्चित्तस्य भावं—विद्यमानतामप्येके आचार्या मन्यन्ते; अशनवत्—यथा मध्वनादिनिषेधस्तत्प्रायश्चित्तं चोपकुर्वाणस्य नैष्ठिकादीनां च समानम् ; तदुक्तं स्मृतिकारैः २ "उत्तरेषां चैतदविरोधि" इति । गुरुकुलवासिनो यदुक्तं, तत्स्वाश्रमाविरोध्युत्तरेषामप्याश्रमिणां भवतीत्यर्थः । तद्वदिहापि ब्रह्मचर्यप्रच्यवने प्रायश्चित्त३सम्भवाद्ब्रह्मविद्यायोग्यताप्यस्ति ॥ ४२ ॥

## बहिस्तूभयथापि स्मृतेराचाराच्च । ३ । ४ । ४३॥

तुशब्दो मतान्तरव्यावृत्त्यर्थः; उपपातकत्वे महापातकत्वेऽप्येते बहिर्भूता एव ब्रह्मविद्याधिकारिभ्यः; ब्रह्मविद्यायामनधिकृता इत्यर्थः । कुतः? स्मृतेः–पूर्वोक्तात् पतनस्मरणात् । यद्यपि कल्मषनिर्हरणाय कैश्चिद्वचनैः प्रायश्चित्ताधिकारो विद्यते तथापि कर्माधिकारानुगुणशुद्धिहेतुप्रायश्चित्तं न सम्भवति, ४"प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा"

---

१. आग्नेय. १६-९-२३ ।—२. गौत. १-प्र. ३-अ. ४ सू. ॥
३. तद्भावात् . पा. ॥—४ ॥

इति स्मृतेरित्यर्थः । आचाराच्च--शिष्टा हि नैष्ठिकादीन् भ्रष्टान् कृतप्रायश्चित्तानपि वर्जयन्ति, तेभ्यो ब्रह्मविद्यादिकं नोपदिशन्ति; अतस्तेषां नास्ति ब्रह्मविद्यायामधिकारः ॥ ४३ ॥

इति श्रीशारीरकमीमांसाभाष्ये तद्भूताधिकरणम् ॥ १० ॥

---

[ श्रीशारीरकमीमांसाभाष्ये स्वाम्यधिकरणम् ॥ ११ ॥ ]

## स्वामिनः फलश्रुतेरित्यात्रेयः । ३ । ४ । ४४ ॥

कर्माङ्गाश्रयाण्युद्गीथाद्युपासनानि किं यजमानकर्तृकाणि, उतर्त्विक्कर्तृकाणीति चिन्तायां–यजमानकर्तृकाणीत्यात्रेयो मन्यते; कुतः? फलश्रुते:–वेदान्तविहितेषु दहराद्युपासनेषु फलोपासनयोरेकाश्रयत्वदर्शनादिह च क्रतुफलाप्रतिबन्धरूपस्योद्गीथोपासनफलस्य यजमानाश्रयत्वश्रवणादित्यर्थः । न च गोदोहनादिवदङ्गाश्रयत्वेन यजमानकर्तृकत्वासम्भवः; गोदोहनादिषु ह्यध्वर्युकर्तृकप्रणयनाश्रयगोदोहनोपादानमन्येनाशक्यम ; इह तूद्गातृकर्तृकेऽप्युद्गीथे तस्योद्गीथादेः *रसतमत्वानुसन्धानंयजमानेनैव कर्तुं शक्यते ॥ ४४ ।

--[ सिद्धान्तः ]--

इति प्राप्तेऽभिधीयते—

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते । ३ । ४ । ४५ ॥

आर्त्विज्यम्–ऋत्विजःकर्मोद्गीथाद्युपासनमित्यौडुलोमिराचार्योमन्यते, कुतः ? तस्मै हि–प्रयोजनाय ऋत्विक्परिक्रियते, फलसाधनभूतस्य–

---

*रसतमादित्याद्युक्तं. पा. ॥

साङ्गस्य क्रतोरुपादानायेत्यर्थः । कर्मविधिषु १"ऋत्विजो वृणीते" २"ऋत्विग्भ्यो दक्षिणां ददाति" इति ऋत्विक्कर्तृकत्वशास्त्रेण फलसाधनभूतं साङ्गं कर्म ऋत्विग्भिरनुष्ठेयमित्यवगम्यते; तदन्तर्गतानि कायिकानि मानसानि च कर्माणि ऋत्विक्कर्तृकाण्येव; नच शक्त्यशक्ती तस्य नियन्त्रनम् । यद्यप्युद्गीथाद्युपासनं पुरुषार्थः, तथापि क्रत्वधिकृताधिकारत्वात्क्रतोश्च साङ्गस्य ऋत्विक्कर्तृकत्वात्, ३"यदेव विद्यया करोति...तदेव वीर्यवत्तरम्" इति ऋत्विक्कर्तृकक्रियोपयोगित्वेन विद्यायास्तदेककर्तृकत्वश्रवणात्, ऋत्विक्कर्तृकाण्येतानि; दहरादिपूपासनेषु ऋत्विक्कर्तृकत्वाश्रवणात् ४"शास्त्रफलं प्रयोक्तरि" इति न्यायाच्च फलिकर्तृकत्वमेव ॥ ४५ ॥

इति श्रीशारीरकमीमांसाभाष्ये स्वाम्यधिकरणम् ॥ ११ ॥

## ( श्रीशारीरकमीमांसाभाष्ये सहकार्यन्तरविध्यधिकरणम् ॥ १२ ॥ )

# सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् । ३ । ४ । ४६ ॥

५"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" इत्यत्र बाल्यपाण्डित्यवन्मौनमपि विधीयते, उतानूद्यत इति विषये–मौनपाण्डित्यशब्दयोः ज्ञानार्थत्वात्, ५"पाण्डित्यं निर्विद्य" इति विहितमेव ज्ञानम् ५"अथ मुनिः" इत्यनूद्यते; विधिशब्दो नह्यत्र श्रूयत इति ॥

–( सिद्धान्तः )–

एवं प्राप्ते ब्रूमः—सहकार्यन्तरविधिः–इति । तद्वतः–विद्यावतः;

१. यजुः. ६-३-७ ॥—२ ॥—३. छा. १-१-१० ॥—४. पू. मी. ३-७-१८ ॥—५. बृ. ५-५-१ ॥

विध्यादिवत्-विधीयते इति यज्ञादिस्सर्वाश्रमधर्मः शमदमादिश्च विधिशब्देनोच्यते; आदिशब्देन श्रवणमनने गृह्येते; सहकार्यन्तरविधिरित्यत्रापि विधीयत इति विधिः; सहकार्यन्तरं विधिश्चेति सहकार्यन्तरविधिः; एतदुक्तं भवति-यथा १"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इत्यादिना २"शान्तो दान्तः" इत्यादिना च सहकारी यज्ञादिश्शमदमादिश्च विधीयते; यथाच ३"श्रोतव्यो मन्तव्य" इति श्रवणमनने चार्थप्राप्ते विद्यासहकारित्वेन गृह्येते; तथा ४"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य" इत्यादिना पाण्डित्यं, बाल्यं, मौनमिति त्रितयं विद्यायास्सहकार्यन्तरं विधीयते-इति । मौनं च पाण्डित्यादर्थान्तरमित्याह-पक्षेणेति । मुनिशब्दस्य पक्षेण प्रकृष्टमननशीले व्यासादौ प्रयोगदर्शनात् मौनं पाण्डित्यबाल्ययोर्द्वयोस्तृतीयम् । यद्यपि ४"अथ मुनि" इत्यत्र विधिप्रत्ययो न श्रूयते ; तथापि मौनस्याप्राप्तत्वाद्विधेयत्वमङ्गीकरणीयम्-अथ मुनिस्स्यात्-इति । इदं च मौनं श्रवणप्रतिष्ठार्थान्मननादर्थान्तरभूतमुपासनालम्बनस्य पुनःपुनरसंशीलनं तद्भावनारूपम् । तदेवं वाक्यार्थः;— ब्राह्मणः-विद्यावान् पाण्डित्यं निर्विद्य -उपास्यं ब्रह्मतत्त्वं परिशुद्धं परिपूर्णं च विदित्वा श्रवणमननाभ्यामप्राप्तं वेदनं प्रतिलभ्येत्यर्थः; तच्च भगवद्भक्तिकृतसत्त्वविशुद्धिकृतम् ; यथोक्तं ५" नाहं वेदैः " इत्यारभ्य ५"भक्त्या त्वनन्यया शक्यः...ज्ञातुम्" इति । श्रुतिश्च ६"यस्य देवे परा भक्तिः" ७"नायमात्मा प्रवचनेन" इत्यादिका । बाल्येन तिष्ठासेत् ; बाल्यस्वरूपं चानन्तरमेव वक्ष्यते; बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिस्स्यात्-बाल्यपाण्डित्ये यथावदुपादाय परिशुद्धे परिपूर्णे ब्रह्मणि मननशीलो भवेत् , निदिध्यासनरूपविद्यावाप्तये । एवमेव त्रितयोपादानेन

---

१. बृ. ६-४-२२ ॥—२. बृ. ६-४-२३ ॥—३. बृ. ४-४-२ ॥—४. बृ. ५-५-१ ॥—५. गी. ११-५३-५४ ॥—६ श्वे. ६-अ. २३ ॥—७. कठ. २-२३ ॥

लब्धविद्यो भवतीत्याह १'अमौनं च मौनं च निर्विद्याथ ब्राह्मणः" इ-ति । अमौनं मौनेतरसहकारिकलापः; तं च मौनं च यथावदुपाददानो विद्याकाष्ठां तदेकनिष्पाद्यां लभेतेत्यर्थः। १"स ब्राह्मणः केन स्यात्" इति उक्तादुपायात्किमन्योऽप्युपायोऽस्तीति पृष्टे १"येन स्यात्तेनेदृश ए-व" इति-येन मौनपर्यन्तेन ब्राह्मणस्स्यादित्युक्तम्, तेनैवेदृशस्स्यात्; न केनाप्यन्येनोपायेनेति परिहृतम्। अतस्सर्वेष्वाश्रमेषु स्थितस्य विदुषो यज्ञादिस्वाश्रमधर्मवत्पाण्डित्यादिकं मौनतृतीयं विद्यायास्सहकार्यन्तरं वि-धीयते ॥ ४६ ॥

अथ स्यात्-यदि सर्वेष्वाश्रमेषु स्थितानां विदुषां तत्तदाश्रमधर्म-सहकारिणी मौनतृतीयसचिवा विद्या ब्रह्मप्राप्तिसाधनमुच्यते; कथं त-र्हि छान्दोग्ये २'अभिसमावृत्य कुटुम्बे शुचौ देशे" इत्यारभ्य २"स ख-ल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते" इति यावदायुषं गार्हस्थ्यधर्मेण स्थितिदर्शनमुपपद्यते; अत आह-

## कृत्स्नभावात्तु गृहिणोपसंहारः । ३ । ४ । ४७ ॥

तुशब्दश्चोद्यं व्यावर्तयति; कृत्स्नभावात्-कृत्स्नेषु भावात्, कृत्स्ने-ष्वाश्रमेषु विद्यायास्सद्भावात् गृहिणोऽप्यस्तीति तेनोपसंहारः; तस्मा-त्सर्वाश्रमधर्मप्रदर्शनार्थो गृहिणोपसंहार इत्यभिप्रायः ॥ ४७ ॥

तथैतस्मिन्नपि वाक्ये १"ब्राह्मणः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरति" इति पारिव्राज्यैकान्त-धर्मं प्रतिपाद्य १"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य" इत्यादिना पारिव्रा-ज्यधर्मस्थितिहेतुकमौनतृतीयसहकारिविधानं प्रदर्शनार्थमित्याह-

## मौनवदितरेषामप्युपदेशात् । ३ । ४ । ४८ ॥

१ बृ. ५-५ १ ॥—२. छा ८-१५-१ ॥

सर्वैषणाविनिर्मुक्तस्य भिक्षाचरणपूर्वकमौनोपदेशः सर्वेषामाश्रमधर्माणां प्रदर्शनार्थः; कुतः ? एवं विधमौनोपदेशवदितरेषामाश्रमिणामपि १ "त्रयो धर्मस्कन्धाः" इत्यारभ्य १ "ब्रह्मसंस्थोऽमृतत्वमेति" इतिब्रह्मप्राप्त्युपदेशात् । उपपादितश्च पूर्वमेव ब्रह्मसंस्थशब्दः सर्वाश्रमिसाधारण इति । अतस्सुष्ठूक्तं-यज्ञादिसर्वाश्रमधर्मवन्मौनतृतीयः पाण्डित्यादिर्विद्यासहकारित्वेन विधीयते — इति ॥ ४८ ॥

इति श्रीशारीरकमीमांसाभाष्ये सहकार्यन्तरविध्यधिकरणम् ॥ १२ ॥

---

( श्रीशारीरकमीमांसाभाष्ये अनाविष्काराधिकरणम् ॥१३॥ )

---

## अनाविष्कुर्वन्नन्वयात् । ३ । ४ । ४९ ॥

२"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" इत्यत्र विदुषा बाल्यमुपादेयतया श्रुतम् । बालस्य भावः, कर्म वा बाल्यम् । बालभावस्य वयोवस्थाविशेषस्यानुपादेयत्वात्कर्मैवेह गृह्यते । तत्र किं बालस्य कर्म कामचारादिकं सर्वं विदुषोपादेयम् ; उत डम्भादिरहितत्वमेवेति विशये विशेषाभावात्सर्वमुपादेयम् ; नियमशास्त्राणि च विशेषविधानाऽनेन बाध्यन्त इति ॥

—( सिद्धान्तः )—

एवं प्राप्तेऽभिधीयते—अनाविष्कुर्वन्निति । बालस्य यत्स्वभावानाविष्काररूपं कर्म; तदुपाददानो वर्तेत विद्वान् । कुतः ? अन्वयात्—तस्यैवान्वयात् । २ "बाल्येन तिष्ठासेत्" इत्यस्मिन्विधौ तस्यैव ह्यन्वयसम्भवः; इतरेषां विद्याविरोधित्वश्रवणात् ३ 'नाविरतो दुश्चरितान्नाशा-

---

१. छा २-२३-१ ॥—२. बृ ५-५ १ ॥—३. कठ. २-२४ ॥

न्तो नासमाहितः । नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्" १ "आहारशुद्धौ सत्त्वशुद्धिः" इत्यादिषु ॥ ४६ ॥

इति श्रीशारीरकमीमांसाभाष्ये अनाविष्काराधिकरणम् ॥ १३ ॥

---

( श्रीशारीरकमीमांसाभाष्ये ऐहिकाधिकरणम् ॥ १४ ॥ )

—:*:—

## ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात । ३ ।४। ५०॥

द्विविधा विद्या—अभ्युदयफला, मुक्तिफला च। तत्राभ्युदयफला स्वसाधनभूतैः पुण्यकर्मभिः पुण्यकर्मानन्तरमेव उत्पद्यते, उतानन्तरं कालान्तरे वेत्यनियम इति संशयः। पूर्वकृतैः पुण्यकर्मभिर्हि विद्वान् जायते; यथोक्तं भगवता २ "चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन" इति। साधने निर्वृत्ते विलम्बहेत्वभावादनन्तरमेव—

—[ सिद्धान्तः ]—

इति प्राप्त उच्यते-ऐहिकमप्रस्तुतप्रतिबन्धे-इति। ऐहिकम्-अभ्युदयफलमुपासनम् ,अप्रस्तुतप्रतिबन्धे—अप्रस्तुते-प्रबलकर्मान्तरप्रतिबन्धे सत्यनन्तरम् , प्रतिबन्धे सति तदुत्तरकालमित्यनियमः। कुतः? तद्दर्शनात्-दृश्यते हि प्रबलकर्मान्तरेण कर्मफलप्रतिबन्धाभ्युपगमः श्रुतौ ३"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम्" इत्युद्गीथविद्यायुक्तस्य कर्मणः फलाप्रतिबन्धश्रवणात् ॥ ५० ॥

इति श्रीशारीरकमीमांसाभाष्ये ऐहिकाधिकरणम् ॥ १४ ॥

---

१. छा. ७-२६-२ ॥—२. गी. ७ १६ ॥—छा. १-१-१० ॥

[ श्रीशारीरकमीमांसाभाष्ये मुक्तिफलाधिकरणम् ॥१५॥ ]

---*---

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः । ३ । ४ । ५१ ॥

मुक्तिफलस्याप्युपासनस्य स्वसाधनभूतैरतिशयितकर्मभिरुत्पत्तावेवमेव कालानियमः, तस्यापि पूर्ववत्प्रतिबन्धाभावप्रतिबन्धसमाप्तिरूपावस्थावगतेः--अत्रापि तस्य हेतोस्समानत्वादित्यर्थः ॥

सर्वेभ्यः कर्मभ्यो मुक्तिफलविद्यासाधनस्य कर्मणः प्रबलत्वात्प्रतिबन्धासम्भव इत्यधिकाशङ्का ॥

तत्रापि ब्रह्मविदपचाराणां पूर्वकृतानां प्रबलानां सम्भवात्प्रति[1]बन्धसम्भव इति परिहारः । द्विरुक्तिरध्यायपरिसमाप्तिं द्योतयति ॥

इति श्रीशारीरकमीमांसाभाष्ये मुक्तिफलाधिकरणम् ॥ १५ ॥

---

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
तृतीयस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥
समाप्तश्चाध्यायः ॥ ३ ॥

---

१. प्रतिबन्धसम्भवतीति परिहारः, पा. ॥

* श्रीमते रामानुजाय नमः *

श्रीभगवद्रामानुजविरचिते—

# श्रीशारीरकमीमांसाभाष्ये

( चतुर्थाध्याये--प्रथमः पादः--आवृत्त्यधिकरणम् ॥ १ ॥ )

---

## आवृत्तिरसकृदुपदेशात् । ४ । १ । १ ॥

तृतीयेऽध्याये साधनैस्सह विद्या चिन्तिता। अथेदानीं विद्यास्वरूपविशोधनपूर्वकं विद्याफलं चिन्त्यते । तत्र १"ब्रह्मविदाप्नोति परम्" २"तमेव विदित्वाऽतिमृत्युमेति" ३"ब्रह्म वेद ब्रह्मैव भवति" ४"यदा पश्यः पश्यते रुक्मवर्णम्" इत्यादि वेदान्तवाक्येषु ब्रह्मप्राप्तिसाधनतया विहितं वेदनं किं सकृत्कृतमेव शास्त्रार्थः, उतासकृदावृत्तमिति संशयः। किं युक्तम् ? सकृत्कृतमिति; ३"ब्रह्म वेद ब्रह्मैव भवति" इति वेदनमात्रस्यैव विधानात्, असकृदावृत्तौ प्रमाणाभावात् । नचावघातादिवद्वेदनस्य ब्रह्मापरोक्ष्यं प्रति दृष्टोपायत्वाद्यावत्कार्यमावृत्तिरिति शक्यं वक्तुम्, वेदनस्य दृष्टोपायत्वाभावात् । ज्योतिष्टोमादिकर्माणि, वेदान्तविहितं च वेदनं परमपुरुषाराधनरूपम्, आराधिताच परमपुरुषाद्धर्मार्थकाममोक्षाख्यपुरुषार्थावाप्तिरिति हि ५"फलमत उपपत्तेः" इत्यत्रः प्रतिपादितम्। अतो ज्योतिष्टोमादिवद्यथाशब्दं सकृत्कृतमेव शास्त्रार्थः—

—( सिद्धान्तः )—

इति प्राप्ते प्रचक्ष्महे-आवृत्तिरसकृत्-इति। असकृदावृत्तमेव वेदनं

---

१. तै. आन. १-१ ॥—२. श्वे. ३-८ ॥—३. मु. ३-२-९ ॥—४. मु. ३ १-३ ॥—५. शारी. ३-२-३७ ॥

शास्त्रार्थः; कुतः? उपदेशात्—ध्यानोपासनपर्यायेण वेदनशब्देनोपदेशात्। तत्पर्यायत्वं च विद्युपास्तिध्यायतीनामेकस्मिन्विषये वेदनोपदेशपरवाक्येषु प्रयोगादवगम्यते। तथाहि १ 'मनो ब्रह्मेत्युपासीत' इत्युपासिनोपक्रान्तोऽर्थः २"भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद" इति विदिनोपसंह्रियते; तथा ३ "यस्तद्वेद यत्स वेद स मयैतदुक्तः" इत्युपक्रमे विदिनोक्तं रैक्वस्य ज्ञानम् ४ "अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से" इत्युपासिनोपसंह्रियते; तथा ५ "ब्रह्मविदाप्नोति परम्" इत्यादिवाक्यसमानार्थेषु वाक्येषु ६"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" ७"ततस्तु तं पश्यति निष्कलं ध्यायमानः" इत्यादिषु ध्यायतिना वेदनमभिधीयते; ध्यानं च चिन्तनम्; चिन्तनं च स्मृतिसन्ततिरूपम्; न स्मृतिमात्रम्; उपास्तिरपि तदेकार्थः, एकाग्रचित्तवृत्तिनैरन्तर्ये प्रयोगदर्शनात्; तदुभयैकार्थ्यात् असकृदावृत्तसन्ततस्मृतिरिह ८ "ब्रह्म वेद ब्रह्मैव भवति" ९ "ज्ञात्वा देवं मुच्यते सर्वपाशैः" इत्यादिषु वेदनादिशब्दैरभिधीयते इति निश्चीयते ॥ १ ॥

## लिङ्गाच्च । ४ । १ । २ ॥

लिङ्गं-स्मृतिः। स्मृतेश्चायमर्थोऽवगम्यते। स्मर्यते हि मोक्षसाधनभूतं वेदनं स्मृतिसन्ततिरूपं १०"तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा। तद्ध्यानं प्रथमैष्षड्भिरङ्गैर्निष्पाद्यते तथा" इति तस्मादसकृदावृत्तमेव वेदनं शास्त्रार्थः ॥ २ ॥

इति श्रीशारीरकमीमांसाभाष्ये आवृत्त्यधिकरणम् ॥ १ ॥

———

१. छा. ३-१८-१ ॥ २. छा. ३-१८-३, ४, ५, ६ ॥ ३. छा. ४-१-४ ॥ ४. छा. ४-२-२ ॥ ५. तै. आन. १-१ ॥ ६. बृ. ४-४-५ ॥ ७. मु. ३-१-८ ॥ ८. मु. ३-२-९ ॥ ९. श्वे. १-८ ॥ १०. विष्णु. ६-७-९१ ॥

( श्रीशारीरकमीमांसाभाष्ये आत्मत्वोपासनाधिकरणम् ॥२॥ )



## आत्मेति तूपगच्छन्ति ग्राहयन्ति च । ४ । १ । ३॥

इदमिदानीं चिन्त्यते-किमुपास्यं ब्रह्मोपासितुरन्यत्वेनोपास्यम्, उतोपासितुरात्मत्वेन-इति । किं युक्तम् ?; अन्यत्वेनेति । कुतः? उपासितुः प्रत्यगात्मनोऽर्थान्तरत्वात् ब्रह्मणः । अर्थान्तरत्वं च १ "अधिकं तु भेदनिर्देशात्" २"अधिकोपदेशात्" ३"नेतरोऽनुपपत्तेः" इत्यादिषूपपादितम् । यथावस्थितं च ब्रह्मोपास्यम्; अयथोपासने हि ब्रह्मप्राप्तिरप्ययथाभूता स्यात्—४"यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति न्यायात् । अतोऽन्यत्वेनोपास्यमिति ॥

### --[ सिद्धान्तः ]--

एवं प्राप्तेऽभिधीयते—आत्मेति तु-इति । तुशब्दोऽवधारणे; उपासितुरात्मेत्येवोपास्यम्, उपासिता प्रत्यगात्मा स्वशरीरस्य स्वयं यथा आत्मा; तथा स्वात्मनोऽपि परं ब्रह्मात्मेत्येवोपासीतेत्यर्थः । कुतः ? एवं ह्युपगच्छन्ति पूर्वे उपासितारः ५ "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि" इति । उपासितुरर्थान्तरभूतं ब्रह्मोपासितारोऽहमिति कथमभ्युपगच्छन्तीत्यत्राह-ग्राहयन्ति च-इति । इममर्थमविरुद्धमुपासितॄन् ग्राहयन्ति शास्त्राणि—तान् प्रत्युपपादयन्तीत्यर्थः । ६ "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इति; तथा ७ "सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्वम्" ८"सर्वं खल्विदं

१. शारी. २-१-२२ ॥ २. शारी. ३-४-८ ॥ ३. शारी. १-१-१७ ॥ ४. छा. ३-१४-१ ॥ ५. ॥ ६. बृ-५-७-२२. माध्यन्दिनशाखा ॥ ७. छा. ६-८.४ ॥ ८. छा. ३ १४-१॥

ब्रह्म तज्जलानिति" इति च सर्वस्य चिदचिद्वस्तुनस्तज्जत्वात्तल्लत्वात्तदनत्वात्तन्नियाम्यत्वात्तच्छरीरत्वाच्च सर्वस्यायमात्मा; अतस्स त आत्मा; अतो यथा प्रत्यगात्मनस्स्वशरीरं प्रत्यात्मत्वात् 'देवोऽहं मनुष्योऽहम्'इत्यनुसन्धानम् ; तथा प्रत्यगात्मनोऽप्यात्मत्वात्परमात्मनस्तस्याप्यहमित्येवानुसन्धानं युक्तमिति। एवं शास्त्रैरुपपादितं सर्वबुद्धीनां ब्रह्मैकनिष्ठत्वेन सर्वशब्दानां ब्रह्मैकनिष्ठत्वमभ्युपगच्छन्तः १"त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते" इति व्यतिकरेणोक्तवन्तः। एवं च २"अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद" ३"अकृत्स्नो ह्येष आत्मेत्येवोपासीत" ४"सर्वं तं परादाद्योऽन्यत्राऽत्मनस्सर्वं वेद" इत्यात्मत्वाननुसन्धाननिषेधः, ५ "पृथगात्मानं प्रेरितारं च मत्वा" इति पृथक्त्वानुसन्धानविधानं चाविरुद्धम् ; अहमिति स्वात्मतयाऽनुसन्धानादन्यत्वानुसन्धाननिषेधो रक्षितः ; स्वशरीरात्स्वात्मनोऽधिकत्वानुसन्धानवत्स्वात्मनोऽपि परमात्मनोऽधिकत्वानुसन्धानात्पृथक्त्वानुसन्धानविधानं च रक्षितम्। अधिकस्य ब्रह्मणः प्रत्यगात्मन आत्मत्वात्तस्य च ब्रह्मशरीरत्वान्निषेधवाक्ये ३"अकृत्स्नो ह्येषः" इत्युक्तम्। अत उपासितुरात्मत्वेन ब्रह्मोपास्यमिति स्थितम् ॥ ३ ॥

इति श्रीशारीरकमीमांसाभाष्ये आत्मत्वोपासनाधिकरणम् ॥ २ ॥

---

( श्रीशारीरकमीमांसाभाष्ये प्रतीकाधिकरणम् ॥ ३ ॥ )

—:×:—

## न प्रतीके न हि सः ४ । १ । ४ ॥

६'मनो ब्रह्मेत्युपासीत" ७ "स यो नाम ब्रह्मेत्युपास्ते" इत्यादिप्रतीकोपासनेष्वप्यात्मत्वानुसन्धानं कार्यम्, उत न–इति चिन्तायां ६"मनो ब्रह्मेत्युपासीत" इति ब्रह्मोपासनत्वसाम्याद्ब्रह्मणश्चोपासितुरात्मत्वादात्मेत्येवोपासीतेति।

---

१. ॥ २. बृ. ३-४-१० ॥ ३. ॥ ४. बृ. ६-२-७ ॥ ५. श्वे. १-६ ॥
६. छा. ३-१८-१ ॥ ७. छा. ७-१-५ ॥

—(सिद्धान्तः)—

एवं प्राप्तेऽभिधीयते—न प्रतीके—इति। प्रतीके नात्मत्वानुसन्धानं कार्यम्; न हि सः—नह्युपासितुरात्मा प्रतीकः। प्रतीकोपासनेषु प्रतीक एवोपास्यः; न ब्रह्म। ब्रह्म तु तत्र दृष्टिविशेषणमात्रम्। प्रतीकोपासनं हि नाम अब्रह्मणि ब्रह्मदृष्ट्याऽनुसन्धानम्; तत्रोपास्यस्य प्रतीकस्योपासितुरात्मत्वाभावान्न तथाऽनुसन्धेयम्॥ ४॥

नन्वत्रापि ब्रह्मैवोपास्यम्; ब्रह्मण उपास्यत्वसम्भवे मनआदीनामचेतनानामल्पशक्तीनां चोपास्यत्वाश्रयणस्यान्याय्यत्वात्। अतो मनआदिदृष्ट्या ब्रह्मैवोपास्यमिति; अत आह—

## ब्रह्मदृष्टिरुत्कर्षात्। ४। १। ५॥

मनआदिषु ब्रह्मदृष्टिरेव युक्ता; न ब्रह्मणि मनआदिदृष्टिः, ब्रह्मणो मनआदिभ्य उत्कर्षात्; तेषां च विपर्ययात्। उत्कृष्टे हि राजनि भृत्यदृष्टिः प्रत्यवायकरी; भृत्ये तु राजदृष्टिरभ्युदयाय॥ ५॥

इति श्रीशारीरकमीमांसाभाष्ये प्रतीकाधिकरणम्॥ ३॥

---

(श्रीशारीरकमीमांसाभाष्ये आदित्यादिमत्यधिकरणम्॥)

## आदित्यादिमतयश्चाङ्ग उपपत्तेः। ४। १। ६।

[१]"य एवासौ तपति तमुद्गीथमुपासीत" इत्यादिषु कर्माङ्गाश्रयेषूपासनेषु संशयः—किमुद्गीथादौ कर्माङ्गे आदित्यादिदृष्टिः कर्तव्या, उतादित्यादिषूद्गीथादिदृष्टिः"—इति। उत्कृष्टदृष्टिर्निकृष्टे कर्तव्येति न्यायात्, उद्गीथादीनां च फलसाधनभूतकर्माङ्गत्वेनाफलेभ्य आदित्यादिभ्यः उत्कृष्टत्वादादित्यादिषूद्गीथादिदृष्टिः—

---

१. छा. १-३-१॥

—( सिद्धान्तः )—

इति प्राप्तेऽभिधीयते–आदित्यादिमतयश्चाङ्गे--इति । चशब्दोऽवधारणे; क्रत्वङ्गे उद्गीथादावादित्यादिदृष्टय एव कार्याः; कुतः ? उपपत्तेः–आदित्यादीनामेवोत्कृष्टत्वोपपत्तेः; आदित्यादिदेवताराधनद्वारेण हि कर्मणामपि फलसाधनत्वम्; अतस्तद्दृष्टिरुद्गीथाद्यङ्गे ॥ ६ ॥

इतिश्रीशारीरकमीमांसाभाष्ये आदित्यादिमत्यधिकरणम् ॥ ४ ॥

( श्रीशारीरकमीमांसाभाष्ये आसीनाधिकरणम् ॥ ५ ॥ )

## आसीनस्सम्भवात् । ४ । १ । ७ ।

मोक्षसाधनतया वेदान्तशास्त्रैर्विहितं ज्ञानं ध्यानोपासनादिशब्दवाच्यमसकृदावृत्तं सन्ततस्मृतिरूपमित्युक्तम् । तदनुतिष्ठन्नासीनश्शयानस्तिष्ठन् गच्छंश्च विशेषाभावादनियमेनानुतिष्ठेत्—

—( सिद्धान्तः )—

इति प्राप्त उच्यते—आसीनः–इति । आसीन उपासनमनुतिष्ठेत्; कुतः ? सम्भवात्--आसीनस्यैव ह्येकाग्रचित्ततासम्भवः; स्थितिगत्योः प्रयत्नसापेक्षत्वात्, शयने च निद्रासम्भवात् । पश्चार्धधारणप्रयत्ननिवृत्तये सापाश्रये आसीनः कुर्यात् ॥ ७ ॥

## ध्यानाच्च । ४ । १ । ८ ॥

१"निदिध्यासितव्यः" इति ध्यानरूपत्वादुपासनस्य, एकाग्रचित्तताऽवश्यंभाविनी । ध्यानं हि विजातीयप्रत्ययान्तराव्यवहितमेकचिन्तनमित्युक्तम् ॥ ८ ॥

१. बृ. ६-५-६ ॥

## अचलत्वं चापेक्ष्य । ४ । १ । ९ ॥

१ निश्चलत्वं चापेक्ष्य पृथिव्यन्तरिक्षादिषु ध्यानवाचोयुक्तिर्दृश्यते २"ध्यायतीव पृथिवी, ध्यायतीवान्तरिक्षं, ध्यायतीव द्यौः, ध्यायन्तीवापो, ध्यायन्तीव पर्वताः" इति । अतः पृथिवीपर्वतादिवदेकाग्रचित्ततया निश्चलत्वमुपासकस्यासीनस्यैव सम्भवेत् ॥ ९ ॥

## स्मरन्ति च । ४ । १ । १० ॥

स्मरन्ति चासीनस्यैव ध्यानं ३"शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् । तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः । उपविश्याऽऽसने युञ्ज्याद्योगमात्मविशुद्धये" इति ॥ १० ॥

## यत्रैकाग्रता तत्राविशेषात् । ४ । १ । ११ ॥

एकाग्रतातिरिक्तदेशकालविशेषाश्रवणादेकाग्रतानुकूलो यो देशः कालश्च, स एवोपासनस्य देशः कालश्च । ४"समे शुचौ शर्कराववह्निवालुकाविवर्जिते" इति वचनमेकाग्रतैकान्तदेशमाह; न तु देशं नियच्छति. ४"मनोऽनुकूले" इति वाक्यशेषात् ॥ ११ ॥

इति श्रीशारीरकमीमांसाभाष्ये आसीनाधिकरणम् ॥ ५ ॥



( श्रीशारीरकमीमांसाभाष्ये आप्रयाणाधिकरणम् ॥ ६ ॥ )

## आप्रयाणात्तत्रापि हि दृष्टम् । ४ । १ । १२ ॥

तदिदमपवर्गसाधनमुक्तलक्षणमुपासनमेकाह एव संपाद्यम्, उताप्रयाणात्प्रत्यहमनुवर्तनीयमिति विशये—एकस्मिन्नेवाहनि शास्त्रार्थस्य कृतत्वात्तावतैव परिसमापनीयम्—

१. निश्चलत्वं ह्यपेक्ष्य. पा ॥—२. छा. ७-६-१ ॥—३. गी. ६-११-१२ ॥—४ ॥

---( सिद्धान्तः )---

इति प्राप्त उच्यते-आप्रयाणात्--इति। आमरणादनुवर्तनीयम्; कुतः ? तत्रापि हि दृष्टम्-उपासनोद्योगप्रभृत्याप्रयाणान्मध्ये यः कालः, तत्र सर्वत्रापि दृष्टमुपासनं १"स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते" इति ॥ १२ ॥

इति श्रीशारीरकमीमांसाभाष्ये आप्रयाणाधिकरणम् ॥ ६ ॥

श्रीशारीरकमीमांसाभाष्ये तदधिगमाधिकरणम् ॥ ७ ॥

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् । ४ । १ । १३ ॥

एवं विद्यास्वरूपं विशोध्य विद्याफलं चिन्तयितुमारभते; ब्रह्मविद्याप्राप्तौ पुरुषस्योत्तरपूर्वाघयोरश्लेषविनाशौ श्रूयेते २"तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" ३"तस्यैवाऽऽत्मा पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेन" इत्युत्तराघाश्लेषः ४"तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" ५"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति पूर्वाघविनाशः। एतावश्लेषविनाशौ विद्याफलभूतावुपपद्येते, नेति संशयः। किं युक्तम् ? नोपपद्येते इति। कुतः ? ६ "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इत्यादिशास्त्रविरोधात्। अश्लेषविनाशव्यपदेशस्तु मोक्षसाधनभूतविद्याविधायिवाक्यशेषगतः कथञ्चिद्विद्यास्तुतिप्रतिपादनेनाप्युपपद्यते। न च विद्या पूर्वोत्तराघयोः प्रायश्चित्ततया विधीयते; येन प्रायश्चि-

१. छा ८-१५-१ ॥—२. छा. ४-१४-३ ॥—३. [तै. ब्रा. ३।१२।८] ॥—४. छा. ५-२४-३ ॥—५. मु. २-२८ ॥—६. ब्रह्मवैवर्ते. प्रकृतिखण्डे. २६-अ. ७०-श्लो ॥—

त्तेनाघविनाश उच्यते। विद्या हि १"ब्रह्मविदाप्नोति परम्" २"ब्रह्म वेद ब्रह्मैव भवति" इति ब्रह्मप्राप्त्युपायतया विधीयते। अतो विद्यार्थवादोऽयमघविनाशाश्लेषव्यपदेश इति ॥

—( सिद्धान्तः )—

एवं प्राप्तेऽभिधीयते-तदधिगमे-इति। विद्याप्राप्तौ पुरुषस्य विद्यामाहात्म्यादुत्तरपूर्वाघयोरश्लेषविनाशावुपपद्येते; कुतः एवंविधं हि विद्यामाहात्म्यमवगम्यते ३"एवंविदि पापं कर्म न श्लिष्यते" ४"एवं ह्यस्य सर्वे पाप्मानः प्रदूयन्ते" इत्यादिव्यपदेशात्। न च ५"नाभुक्तं क्षीयते कर्म" इत्यनेन शास्त्रेणास्य विरोधः, भिन्नविषयत्वात्। तद्धि कर्मणां फलजननसामर्थ्यद्रढिमविषयम्; एतत्तूत्पन्नाया विद्यायाः प्राक्कृतानां पाप्मनां फलजननशक्तिविनाशसामर्थ्यमुत्पत्स्यमानानां च फलजननशक्त्युत्पत्तिप्रतिबन्धकरणसामर्थ्यं च प्रतिपादयतीति द्वयोर्विषयो भिद्यते। यथा अग्निजलयोरौष्ण्यतन्निवारणसामर्थ्यविषययोर्द्वयोः प्रमाणयोरपि विषयभेदात्प्रामाण्यम्; एवमत्रापीति न कश्चिद्विरोधः। अघस्याश्लेषकरणं-वैदिककर्मायोग्यतावासनाप्रत्यवायहेतुशक्त्युत्पत्तिप्रतिबन्धकरणम्। अघानि हि कृतानि पुरुषस्य वैदिककर्मायोग्यतां, सजातीयकर्मान्तरारम्भरुचिं, प्रत्यवायं च कुर्वन्ति। अघस्य विनाशकरणम्-उत्पन्नायास्तच्छक्तेर्विनाशकरणम्। शक्तिरपि परमपुरुषाप्रीतिरेव। तदेवं विद्या वेदितुर्वेद्यात्यर्थप्रियत्वेन स्वयमपि निरतिशयप्रिया सती वेद्यभूतपरमपुरुषाराधनस्वरूपा पूर्वकृताघसञ्चयजनितपरमपुरुषाप्रीतिं विनाशयति; सैव विद्या स्वोत्पत्त्युत्तरकालभाव्यघनिमित्तपरमपुरुषाप्रीत्युत्पत्तिं च प्रतिबध्नाति। तदिदमश्लेषवचनं प्रामादिकविषयं मन्तव्यम्;

१. तै आन. १-१॥—२. मु. ३-२-९॥—३. छा. ४-१४-३॥—४. छा. ५-२४-३॥—५. ब्रह्मवैवर्ते. प्रकृतिखण्डे. २६-७०॥

१"नाविरतो दुश्चरितात्" इत्यादिभिश्शास्त्रैराप्रयाणादहरहरुत्पद्यमानाया उत्तरोत्तरातिशयभागिन्याः विद्यायाः दुश्चरितविरतिनिष्पाद्यत्वावगमात् ॥

इति श्रीशारीरकमीमांसाभाष्ये तदधिगमाधिकरणम् ॥ ७ ॥

---

श्रीशारीरकमीमांसाभाष्ये इतराधिकरणम् ॥ ८ ॥

---

## इतरस्याप्येवमसंश्लेषः पाते तु । ४ । १ । १४ ॥

उत्तरपूर्वाघयोर्विद्यया अश्लेषविनाशावुक्तौ ; इतरस्य-पुण्यस्यापि. एवम्-उक्तेन न्यायेनाश्लेषविनाशौ विद्यया स्याताम्, विद्याफलविरोधित्वसामान्याद्व्यपदेशाच्च । भवति च व्यपदेशः-उभे सुकृतदुष्कृते निर्दिश्य २"सर्वे पाप्मानोऽतो निवर्तन्ते" इति, ३"तत्सुकृतदुष्कृते धूनुते" इतिच । मुमुक्षोरनिष्टफलत्वात्सुकृतस्यापि पाप्मशब्देन व्यपदेशः । सुकृतस्यापि शास्त्रीयत्वात्तत्फलस्य केषांचिदिष्टत्वदर्शनाच्च विद्याया अविरोधशङ्कां निवर्तयितुमतिदेशः । ननु विदुषोऽपि सेतिकर्तव्यताकोपासननिर्वृत्तये वृष्ट्यन्नादिफलानीष्टान्येव ; कथं तेषां विरोधाद्विनाश उच्यते ; तत्राह -पाते तु-इति । शरीरपाते तु तेषां विनाशः; शरीरपातादूर्ध्वं तु विद्यानुगुणदृष्टफलानि सुकृतानि नश्यन्तीत्यर्थः ॥ १४ ॥

इति श्रीशारीरकमीमांसाभाष्ये इतराधिकरणम् ॥ ८ ॥

---

श्रीशारीरकमीमांसाभाष्ये अनारब्धकार्याधिकरणम् ॥ ९ ॥

---

## अनारब्धकार्ये एव तु पूर्वे तदवधेः । ४ । १ । १५ ॥

ब्रह्मविद्योत्पत्तेः पूर्वोत्तरभाविनोस्सुकृतदुष्कृतयोरश्लेषविनाशावुक्तौ;

---

१. कठ. २-२४ ॥—२. छा. ८-४-१ ॥—३. कौषी. १-४ ॥

ततः पूर्वभाविनोः सुकृतदुष्कृतयोः किमविशेषेण विनाशः, उता-नारब्धकार्ययोरेवेति विशये १' सर्वे पाप्मानः प्रदूयन्ते" इति विद्याफल-स्याविशेषश्रवणाद्विद्योत्पत्युत्तरकालभाविन्याश्च शरीरस्थितेः कुलालच-क्रभ्रमणादिवत्संस्कारवशादप्युपपत्तेरविशेषेण—

—( सिद्धान्तः )—

इतिप्राप्ते उच्यते–अनारब्धकार्ये एव तु पूर्वे–इति विद्योत्पत्तेः पूर्वे सुकृतदुष्कृते अनारब्धकार्ये–अप्रवृत्तफले एव विद्यया विनश्यतः; कुतः ? तदवधेः–२"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति शरीरपातविलम्बावधिश्रुतेः । न च पुण्यापुण्यकर्मजन्यभगवत्प्रीत्य-प्रीतिव्यतिरेकेण शरीरस्थितिहेतुभूतसंस्कारसद्भावे प्रमाणमस्ति ॥ १५ ॥

इति श्रीशारीरकमीमांसाभाष्ये अनारब्धकार्याधिकरणम् ॥ ६ ॥

---

( श्रीशारीरकमीमांसाभाष्ये अग्निहोत्राद्यधिकरणम् ॥ )

---

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ।४।१।१६

'इतरस्याप्येवमसंश्लेषः' इति विद्याबलात्सुकृतस्याप्यसंश्लेष उक्तः, अग्निहोत्रादीनां नित्यनैमित्तिकानां स्वाश्रमधर्माणामपि सुकृतत्वसामा-न्येन तत्फलस्याश्लेषादनिच्छतोऽननुष्ठाने प्राप्त उच्यते—

—[ सिद्धान्तः ]—

अग्निहोत्रादि तु–इति । तुशब्दस्सुकृतान्तरेभ्यो विशेषणार्थः; अ-ग्निहोत्राद्याश्रमधर्माः फलाश्लेषासम्भवादनुष्ठेया एव ; तदसम्भवश्च त-त्कार्यार्थत्वात्तेषाम् ; विद्याख्यकार्यायैव हि विदुषोऽग्निहोत्राद्यनुष्ठानम् ; कथमिदमवगम्यते ? तद्दर्शनात् ; दृश्यते हि ३"तमेतं वेदानुवचनेन ब्राह्म-

---

१. छा. ५-२४-३ ॥—२. छा. ६-१४-२ ॥—३. बृ. ६-४-२२ ॥

णा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इत्यादिनाऽग्निहोत्रादीनां विद्यासाधनत्वम्। विद्यायाश्चाप्रयाणादभ्यासाधेयातिशयाया अहरहरुत्पाद्यत्वात्तदुत्पत्त्यर्थमाश्रमकर्माप्यहरहरनुष्ठेयमेव; अन्यथाऽऽश्रमकर्मलोपे दूषितान्तःकरणस्य विद्योत्पत्तिरेव न स्यात् ॥ १६ ॥

यदि अग्निहोत्रादिसाधुकृत्या विद्योत्पत्त्यर्थाः, विद्योत्पत्तेः प्राचीनं च सुकृतं [१]"यावत्सम्पातमुषित्वा" [२]"प्राप्यान्तं कर्मणः" इत्यनुभवेन विनष्टम्; भुक्तशिष्टं च प्रारब्धफलम्; [३] "सुहृदस्साधुकृत्याम्" इत्यस्य को विषयः ? तत्राह-,

## अतोऽन्यापि ह्येकेषामुभयोः । ४ । १ । १७ ॥

अतः-अग्निहोत्रादिसाधुकृत्यायाः विद्योत्पत्त्यर्थायाः अन्यापि-विद्याधिगमात्पूर्वोत्तरयोरुभयोरपि पुण्यकर्मणोः प्रबलकर्मप्रतिबद्धफला साधुकृत्याऽनन्ता सम्भवत्येव; तद्विषयमिदमेकेषां शाखिनां वचनं [३]"तस्य पुत्रा दायमुपयन्ति सुहृदस्साधुकृत्याम्" इति । विद्ययाऽश्लेषविनाशश्रुतिश्च तद्विषया ॥ १७ ॥

अनुष्ठितस्यापि कर्मणः फलप्रतिबन्धसम्भवं पूर्वोक्तं स्मारयति-

## यदेव विद्ययेति हि । ४ । १ । १८ ॥

[४]"यदेव विद्यया करोति...तदेव वीर्यवत्तरम्" इत्युद्गीथविद्यायाः क्रतुफलाप्रतिबन्धफलत्ववचनेनानुष्ठितस्यापि कर्मणः फलप्रतिबन्धस्सूच्यते हि । अतो विदुषोऽनुष्ठितप्रतिबद्धफलविषयं [३]"सुहृदस्साधुकृत्याम्" इति शाट्यायनकम् ॥ १८ ॥

इति श्रीशारीरकमीमांसाभाष्ये अग्निहोत्राद्यधिकरणम् ॥ १० ॥

---

१. छा. ५-१०-५ ॥—२. बृ. ६-४-६ ॥—३ ॥—४. छा. १-१-१० ॥

( श्रीशारीरकमीमांसाभाष्ये इतरक्षपणाधिकरणम् ॥ )

## भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते ।४।१।१९॥

ययोः पुण्यपापयोरश्लेषविनाशावुक्तौ, ताभ्यामितरे आरब्धकार्ये पुण्यपापे किं विद्यायोनिशरीरावसाने, उत तच्छरीरावसाने शरीरान्तरावसाने वेत्यनियम इति संशये १"तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति तच्छरीरविमोक्षावसानत्वश्रवणात्तदवसाने—

—( सिद्धान्तः )—

इति प्राप्त उच्यते-भोगेन तु-इति । तुशब्दः पक्षव्यावृत्त्यर्थः; इतरे आरब्धकार्ये पुण्यपापे स्वारब्धफलभोगेन क्षपयित्वा तत्फलभोगसमाप्त्यनन्तरं ब्रह्म सम्पद्यते; ते च पुण्यपापे एकशरीरोपभोग्यफले चेत्-तच्छरीरावसाने सम्पद्यते; अनेकशरीरभोग्यफले चेत्-तदवसाने सम्पद्यते, भोगेनैव क्षपयितव्यत्वादारब्धफलयोः कर्मणोः । १"तस्य तावदेव चिरं यावन्न विमोक्ष्ये" इति च भोगेन तयोः कर्मणोः विमोक्ष उच्यते, देहावधिनियमाश्रवणात् । तदेवं ब्रह्मविद्यायाः प्रागनुष्ठितमभुक्तफलमनारब्धफलं पुण्यपापरूपं कर्मानादिकालसंचितमनन्तं विद्यामाहात्म्याद्विनश्यति; विद्यारम्भोत्तरकालमनुष्ठितं च न श्लिष्यति; तत्र पुण्यरूपं सर्वं विदुषस्सुहृदो गृह्णन्ति, पापं च द्विषन्त इति निरवद्यम् ॥ १९ ॥

इति श्रीशारीरकमीमांसाभाष्ये इतरक्षपणाधिकरणम् ॥ ११ ॥

---

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
चतुर्थस्याध्यायस्य प्रथमः पादः ॥ १ ॥

—:॰:—

---

१. छा. ६-१४-२ ॥

* श्रीमते रामानुजाय नमः *

श्रीभगवद्रामानुजविरचिते-

# श्रीशारीरकमीमांसाभाष्ये

( चतुर्थाध्याये - द्वितीयः पादः - वागधिकरणम् ॥१॥ )

---

## वाङ्मनसि दर्शनाच्छब्दाच्च । ४ । २ । १ ॥

इदानीं विदुषो गतिप्रकारं चिन्तयितुमारभते । प्रथमं तावदुत्क्रान्तिश्चिन्त्यते । तत्रेदमाम्नायते१"अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्" इति । अत्र "वाङ्मनसि सम्पद्यते" इति वाचो मनसि सम्पत्तिश्रुतिः किं वाग्वृत्तिमात्रविषया, उत वाग्विषयेति विशये; वृत्तिमात्रविषयेति युक्तम् । कुतः ? मनसो वाक्प्रकृतित्वाभावात्तत्र वाक्स्वरूपसम्पत्त्यसम्भवात् । वागादिवृत्तीनां मनोऽधीनत्वेन वृत्तिसम्पत्तिश्रुतिः कथंचिदुपपद्यत इति ॥

एवं प्राप्तेऽभिधीयते वाङ्मनसि-इति । वाक्स्वरूपमेव मनसि सम्पद्यते । कुतः ? दर्शनात्-दृश्यते हि वागिन्द्रिय उपरतेऽपि मनः प्रवृत्तिः । वृत्तिमात्रसम्पत्त्यापि तदुपपद्यत इति चेत्-तत्राह-शब्दाच्चेति । १'वाङ्मनसि सम्पद्यते'इति वाक्स्वरूपसम्पत्तावेव हि शब्दः;न वृत्तिमात्रसम्पत्तौ । नहि तदानीं वृत्त्युपरमे वागिन्द्रियं प्रमाणान्तरेणोपलभ्यते; येन वृत्तिमात्रमेव सम्पद्यत इत्युच्येत । यदुक्तं मनसो वाक्प्रकृतित्वाभावाद्वाचो मनसि सम्पत्तिर्नोपपद्यत इति; तत् १ 'वाङ्मनसि सम्पद्यते" इति वचनान्मनसा वाक्संयुज्यते; नतु तत्र लीयत इति परिहर्तव्यम् ॥ १ ॥

---

१. छा. ६-८-६ ॥

## अत एव सर्वाण्यनु । ४ । २ । २ ॥

यतो वाचो मनसा संयोगमात्रं सम्पत्तिः; न तु लयः; अत एव वाचमनु सर्वेषामिन्द्रियाणां मनसि सम्पत्तिश्रुतिरुपपद्यते, १ "तस्मादुपशान्ततेजा अपुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः" इति ॥ २ ॥

इति श्रीशारीरकमीमांसाभाष्ये वागधिकरणम् ॥ १ ॥

---

—( श्रीशारीरकमीमांसाभाष्ये मनोधिकरणम् ॥ २ ॥ )—

---

## तन्मनः प्राण उत्तरात् । ४ । २ । ३ ॥

तत्–सर्वेन्द्रियसंयुक्तं मनः प्राणे सम्पद्यते–प्राणेन संयुज्यते; न मनोवृत्तिमात्रम्। कुतः ? उत्तरात्—२"मनः प्राणे" इति वाक्यात्।

अधिकाशङ्का तु–३"अन्नमयं हि सोम्य मनः"इति वचनान्मनसोऽन्नप्रकृतित्वमवगम्यते; अन्नस्य च ४"ता अन्नमसृजन्त" इत्यम्मयत्वं सिद्धम्. ४"आपोमयः प्राणः" इति चाप्प्रकृतित्वं प्राणस्यावगम्यते, अतो मनः प्राणे सम्पद्यत इत्यत्र प्राणशब्देन प्राणप्रकृतिभूता अपो निर्दिश्य तासु मनस्सम्पपत्तिप्रतिपादने परम्परया स्वकारणे लय इति सम्पत्तिवचनमुपपन्नं भवति–इति ॥

परिहारस्तु ४"अन्नमयं हि सोम्य मनः, आपोमयः प्राणः" इति मनः प्राणयोरन्नेनाद्भिश्चाप्यायनमुच्यते; न तत्प्रकृतित्वम्, 'आहङ्कारिकत्वान्मनसः, आकाशविकारत्वाच्च प्राणस्य ।'प्राणशब्देनापां लक्षणा च स्यात्-इति ॥ ३ ॥

इति श्रीशारीरकमीमांसाभाष्ये मनोधिकरणम् ॥ २ ॥

---

१. ॥—२. छा. ६-८-६ ॥—३. छा. ६-६ ५ ॥—४. छा. ६-२-४ ॥

—( श्रीशारीरकमीमांसाभाष्ये अध्यक्षाधिकरणम् ॥ ३ ॥ )—

## सोऽध्यक्षे तदुपगमादिभ्यः । ४ । २ । ४ ॥

यथा १"वाङ्मनसि सम्पद्यते, मनः प्राणे"इतिवचनानुरोधेन मनःप्राणयोरेव वाङ्मनसयोस्सम्पत्तिः; तथा २"प्राणस्तेजसि" इति वचनात्तेजस्येव प्राणस्सम्पद्यते—

—[ सिद्धान्तः ]—

इति प्राप्त उच्यते—सोऽध्यक्षे-इति । सः-प्राणः, अध्यक्षे करणाधिपे जीवे सम्पद्यते । कुतः? तदुपगमादिभ्यः-प्राणस्य जीवोपगमस्तावच्छ्रूयते ३ "एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति" इति; तथा जीवेन सह प्राणस्योत्क्रान्तिः श्रूयते ४ "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इति; प्रतिष्ठा च जीवेन सह श्रूयते ५ "कस्मिन्नुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि" इति । एवं जीवेन संयुज्य तेन सह तेजस्सम्पत्तिरिह ६"प्राणस्तेजसि" इत्युच्यते; यथा यमुनायाः गङ्गया संयुज्य सागरगमनेऽपि'यमुना सागरं गच्छति' इति वचो न विरुध्यते, तद्वत् ॥ ४ ॥

इति श्रीशारीरकमीमांसाभाष्ये अध्यक्षाधिकरणम् ॥ ३ ॥

--( श्रीशारीरकमीमांसाभाष्ये भूताधिकरणम् ॥ ४ ॥ )—

## भूतेषु तच्छ्रुतेः । ४ । २ । ५ ॥

६ "प्राणस्तेजसि" इति जीवसंयुक्तस्य प्राणस्य तेजसि सम्पत्तिरुक्ता,

१. छा. ६-८-६ ॥—२. छा. ६-६-५ ॥—३. बृ. ६-३-३८ ॥
४. बृ. ६-४-२ ॥—५. प्रश्नो. ६-३ ॥ ६. छा. ६-८-६ ॥

सा सम्पत्तिः किं तेजोमात्रे, उत संहतेषु सर्वेषु भूतेष्विति विशये तेजोमात्रश्रवणात्तेजसि—

—( सिद्धान्तः )—

इति प्राप्त उच्यते—भूतेषु-इति। भूतेषु-सम्पद्यते। कुतः? तच्छ्रुतेः १"पृथिवीमय आपोमयः...तेजोमयः" इति जीवस्य सञ्चरतस्सर्वभूतमयत्वश्रुतेः॥ ५॥

ननु तेजःप्रभृतिष्वेकैकस्मिन् क्रमेण सम्पत्तावपि १"पृथिवीमयः" इत्यादिका श्रुतिरुपपद्यते, अत आह—

## नैकस्मिन् दर्शयतो हि। ४। २। ६॥

नैकस्मिन्, एकैकस्य कार्याक्षमत्वात्। दर्शयतो ह्यक्षमत्वं श्रुतिस्मृती २"अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इति नामरूपव्याकरणयोग्यत्वाय त्रिवृत्करणमुपदिश्यते। ३"नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना। नाशक्नुवन् प्रजास्स्रष्टुमसमागम्य कृत्स्नशः। समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः। महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते" इति। अतः ४"प्राणस्तेजसि" इति तेजश्शब्देन भूतान्तरसंसृष्टमेव तेजोऽभिधीयते। अतो भूतेष्वेव सम्पत्तिः॥ ६॥

इति श्रीशारीरकमीमांसाभाष्ये भूताधिकरणम्॥ ४॥

---

( श्रीशारीरकमीमांसाभाष्ये आसृत्युपक्रमाधिकरणम्॥ )

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य।४।२।७॥

इयमुत्क्रान्तिः किं विद्वदविदुषोस्समाना, उताविदुष एवेति चि-

१. बृ. ६-४ ५॥—२. छां ६-३-२, ३॥—३. विष्णु. १—अं. २-अ. ५२ ५३॥—४. छां. ६-८ ६॥

न्तायाम् , अविदुष एवेति प्राप्तम् । कुतः ? विदुषोऽत्रैवामृतत्ववचनादुत्क्रान्त्यभावात् । विदुषो ह्यत्रैवामृतत्वं श्राव्यते-१ 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति ॥

—( सिद्धान्तः )—

एवं प्राप्तेऽभिधीयते-समानाचाऽसृत्युपक्रमात्—इति। विदुषोऽप्यासृत्युपक्रमादुत्क्रान्तिस्समाना ।, आसृत्युपक्रमात्-आगत्युपक्रमात् , नाडीप्रवेशात्प्रागित्यर्थः । विदुषोऽपि हि नाडीविशेषेणोत्क्रम्य गतिः श्रूयते—२"शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति । एवं नाडीविशेषेण गतिश्रवणाद्विदुषोऽप्युत्क्रान्तिरवर्जनीया । सा च नाडीप्रवेशात्प्राग्विशेषाश्रवणात्समाना । तत्प्रवेशदशाया च विशेषः श्रूयते ३"तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्य इति । ४"शतं चैका च हृदयस्य" इत्यनया श्रुत्यैकार्थ्यान्मूर्ध्नो निष्क्रमणं विद्वद्विषयम् ; इतरदविद्वद्विषयम् । यदुक्तं-विदुषोऽत्रैवामृतत्वं श्राव्यते-इति; तत्रोच्यते-अमृतत्वं चानुपोष्य-इति । चशब्दोऽवधारणे । अनुपोष्य—शरीरेन्द्रियादिसम्बन्धमदग्ध्वैव, यदमृतत्वम्-उत्तरपूर्वाघयोरश्लेषविनाशरूपं प्राप्यते; तदुच्यते ५"यदा सर्वे प्रमुच्यन्ते" इत्यादिकया श्रुत्येत्यर्थः । ५"अत्र ब्रह्म समश्नुते" इति च उपासनवेलायां यो ब्रह्मानुभवः; तद्विषयमित्यभिप्रायः ॥ ७ ॥

## तदापीतेस्संसार व्यपदेशात् । ४ । २ । ८ ॥

अवश्यं च तत्—अमृतत्वमदग्धदेहसम्बन्धस्यैवेति विज्ञेयम् । कुतः ? आपीतेः संसारव्यपदेशात्—अपीतिः—अप्ययः, ब्रह्मप्राप्तिः । सा

१. कठ. २-६-१४ ॥—२. कठ. २-६-१६ ॥—३. बृ. ६-४-२ ॥
४. कठ २-६ १६ ॥—५. कठ. २-६-१४ ॥

चार्चिरादिना मार्गेण देशविशेषं गत्वेति वक्ष्यते। आतदवस्थाप्राप्तेः संसारः--देहसम्बन्धलक्षणो हि व्यपदिश्यते--१"तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति २"अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि" इति च ॥ ८॥

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः। ४। २। ९।

इतश्च विदुषोऽपि बन्धो नात्र दग्धः; यतत्सूक्ष्मं शरीरमनुवर्तते। कुत इदमवगम्यते; प्रमाणतस्तथोपलब्धेः--उपलभ्यते हि देवयानेन पथा गच्छतो विदुषः ३"तं प्रतिब्रूयात्" ४"सत्यं ब्रूयात्" इति चन्द्रमसा संवादवचनेन शरीरसद्भावः। अतस्सूक्ष्मशरीरमनुवर्तते। अतश्च बन्धो न दग्धः ॥ ९॥

## नोपमर्देनातः। ४। २। १०॥

अतः ५"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति वचनं न बन्धोपमर्देनामृतत्वं वदति ॥ १०॥

## अस्यैव चोपपत्तेरूष्मा। ४। २। ११॥

अस्य--सूक्ष्मशरीरस्य कचिद्विद्यमानत्वोपपत्तेर्विदुषः प्रक्रान्तमरणस्य मरणात्प्रागूष्मा स्थूले शरीरे क्वाचित्क उपलभ्यते। न च स्थूलस्यैव शरीरस्यायमूष्मा, अन्यत्रानुपलब्धेः। तस्मोष्मणः क्वचिदुपलब्धिर्विदुषस्सूक्ष्मशरीरस्योत्क्रान्तिनिबन्धनेति गम्यते। तस्माद्विदुषोऽप्यासृत्युपक्रमात्समानोत्क्रान्तिरिति सुष्ठूक्तम् ॥ ११॥

---

१. छा. ६-१४-२ ॥--२. छा. ८-१३-१ ॥--३. कौ. १-२ ॥--४ ॥
५. कठ २-६-१४ ॥

पुनरपि विदुष उत्क्रान्तिर्न सम्भवतीत्याशङ्क्य परिह्रियते—

## प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् । ४ । २ । १२ ॥

यदुक्तं विदुषोऽप्युत्क्रान्तिस्समानेति; तन्नोपपद्यते, विदुष उत्क्रान्तिप्रतिषेधात् । तथाहि १"स एतास्तेजोमात्रास्समभ्याददानो हृदयमेवान्ववक्रामति" इत्युपक्रम्य १ "तेन प्रद्योतेनैष आत्मा निष्क्रामति तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इत्यविदुष उत्क्रान्तिप्रकारमभिधाय २ "अन्यन्नवतरं कल्याणतरं रूपं कुरुते" इति देहान्तरपरिग्रहं चाभिधाय ३ "प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे इति तु कामयमानः"इत्यविद्वद्विषयं परिसमाप्य३"अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामः न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति" इति विदुष उत्क्रान्तिः प्रतिषिध्यते । तथा पूर्वत्र आर्तभागप्रश्नेऽपि विदुष उत्क्रान्तिप्रतिषेधो दृश्यते ४"अप पुनर्मृत्युं जयति" इति विद्वांसं प्रस्तुत्य ४"याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते उदस्मात्प्राणाः क्रामन्त्याहो न" इति पृष्टः"४"नेति होवाच याज्ञवल्क्योऽत्रैव समवलीयन्ते स उच्छ्वयत्याध्मातो मृतः शेते" इति । अतो विद्वानिहैवामृतत्वं प्राप्नोतीति चेत्—तन्न,शारीरात्-प्रत्यगात्मनः प्राणानामुत्क्रान्तिर्ह्यत्र प्रतिषिध्यते; न शरीरात् ५ "न तस्य प्राणा उत्क्रामन्ति" इत्यत्र तच्छब्देन ५"अथाकामयमानः" इति प्रकृतश्शारीर एव परामृश्यते; नाश्रुतं शरीरम् । ५"तस्य" इति षष्ठ्या प्राणानां सम्बन्धित्वेन शारीरो निर्दिष्टः;नतूत्क्रान्त्यपादानत्वेन; उत्क्रान्त्यपादानं तु शरीर मेवेति चेत्—न,अपादानापेक्षायामश्रुताच्छरीरात्सम्बन्धितया श्रुतस्यात्मन एव सन्निहितत्वेनापादानतयापि ग्राह्यत्वात् । किञ्च प्राणानां जीवसम्बन्धितयैव

१. बृ. ६-४-१, २ ॥—२. बृ. ६-४-४ ॥—३. बृ. ६-४-६ ॥
४. बृ. ५-२-१०, ११ ॥—५. बृ. ६-४-६ ॥

प्रज्ञातानां तत्सम्बन्धकथने प्रयोजनाभावात्सम्बन्धमात्रवाचिन्या षष्ठ्या अपादानमेव विशेष इति निश्चीयते । यथा 'नटस्य शृणोति' इति । नचात्र विवदितव्यं-स्पष्टो ह्येकेषां--माध्यन्दिनानामाम्नाये शारीरो जीव एवापादानमिति १ "योऽकामो निष्काम आप्तकाम आत्मकाम न तस्मात्प्राणा उत्क्रामन्ति" इति । शारीरात्प्राणानामुत्क्रान्तिप्रसङ्गाभावाच्चन्निषेधो नोपपद्यत इति चेन्-न,२"तस्य तावदेव चिरम्" इति विदुषश्शरीरवियोगकाले ब्रह्मसम्पत्तिवचनेन प्राणानामपि तस्मिन् काले शारीराद्विदुषो वियोगः प्रसज्यते; ततश्च देवयानेन पथा ब्रह्मसम्पत्तिर्नोपपद्यत इति । १"न तस्य प्राणा उत्क्रामन्ति" देवयानेन पथा ब्रह्मप्राप्तेः प्राग्जीवाद्विदुषोऽपि प्राणा न विश्लिष्यन्तीत्युच्यते । आर्तभागप्रश्नोऽपि यदा विद्वद्विषयः तदा अयमेव परिहारः; स त्वविद्वद्विषयः, तत्र प्रश्नप्रतिवचनयोः ब्रह्मविद्याप्रसङ्गादर्शनात् ; तत्र हि ग्रहातिग्रहरूपेणेन्द्रियेन्द्रियार्थस्वभावः,अपामग्न्यन्नत्वं, म्रियमाणस्य जीवस्य प्राणपरित्यागः, मृतस्य नामवाच्यकीर्त्यनुवृत्तिः,तस्य च पुण्यपापानुगुणगतिप्राप्तिरित्येतेऽर्थाः प्रश्नपूर्वकं प्रत्युक्ताः । तत्र च३"अप पुनर्मृत्युं जयति" इति अपामग्न्यन्नत्वज्ञानादग्निजय एव मृत्युजय उच्यते । अतो नात्र विदुषः प्रसङ्गः । अविदुषस्तु प्राणानुत्क्रान्तिवचनं-स्थूलदेहवत्प्राणा न मुञ्चन्ति, अपि तु भूतसूक्ष्मवज्जीवं परिष्वज्य गच्छन्ति—इति प्रतिपादयतीति निरवद्यम् ॥ १२ ॥

## स्मर्यते च । ४ । २ । १३ ॥

स्मर्यते च विदुषोऽपि मूर्धन्यनाड्योत्क्रान्तिः ४"ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम् । ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्" इति ॥ १३ ॥

इति श्रीशारीरकमीमांसाभाष्ये आमृत्युपक्रमाधिकरणम् ॥ ५ ॥

---

१. बृ. ६-४-६ ॥—२. छा. ६-१४-२ ॥—३. बृ. ५-२-१० ॥
४. याज्ञवल्क्य. अध्यात्मप्र. १६७ श्लो. ॥

—( श्रीशारीरकमीमांसाभाष्ये परसम्पत्त्यधिकरणम् ॥६॥ )—

## तानि परे तथाह्याह । ४ । २ । १४ ॥

सकरग्रामः सप्राणः करणाध्यक्षः प्रत्यगात्मा उत्क्रान्तिवेलायां तेजःप्रभृतिभूतसूक्ष्मेषु सम्पद्यत इत्युक्तम् ; सैषा सम्पत्तिर्विदुषो न विद्यत इत्याशङ्क्य परिहृतम् ; तानि पुनर्जीवपरिष्वक्तानि भूतसूक्ष्माणि किं यथाकर्म यथाविद्यं च स्वकार्याय गच्छन्ति, उत परमात्मनि सम्पद्यन्त इति विशये मध्ये परमात्मसम्पत्तौ सुखदुःखोपभोगरूपकार्यादर्शनात्, तदुपभोगानुगुण्येन यथाकर्म यथाविद्यं च गच्छन्ति—

—( सिद्धान्तः )—

इति प्राप्त उच्यते—तानि परे—इति । तानि परस्मिन्नात्मनि सम्पद्यन्ते; कुतः ? तथाह्याह श्रुतिः—[1]"तेजः परस्यां देवतायाम्" इति । यथाह श्रुतिस्तदनुगुणं कार्यं कल्प्यमित्यर्थः । सुषुप्तिप्रलययोर्यथा परमात्मसम्पत्त्या सुखदुःखोपभोगायासविश्रमः; तद्वदिहापि ॥ १४ ॥

इति श्रीशारीरकमीमांसाभाष्ये परसम्पत्त्यधिकरणम् ॥६॥

—( श्रीशारीरकमीमांसाभाष्ये अविभागाधिकरणम् ॥७॥ )—

## अविभागो वचनात् । ४ । २ । १५ ॥

सेयं परमात्मनि सम्पत्तिः किं प्राकृतलयवत्कारणापत्तिरूपा, उत- [1]"वाङ्मनसि" इत्यादिवदविभागरूपेति चिन्तायां—परमात्मनस्सर्वेषां योनिभूतत्वात्कारणापत्तिरूपा—

१. छा. ६-८-६ ॥

—( सिद्धान्तः )—

इति प्राप्त उच्यते—अविभागः—इति। अपृथग्भावः-पृथग्व्यवहारानर्हसंसर्ग इत्यर्थः। कुतः? वचनात् १"तेजः परस्यां देवतायाम्" इत्यत्रापि १"वाङ्मनसि सम्पद्यते" इत्यतस्सम्पद्यत इति वचनस्यानुषङ्गात्, तस्य च संसर्गविशेषवाचित्वात्, अनुषक्तस्याभिधानवैरूप्ये प्रमाणाभावात्, उत्क्रान्तिवेलायां कारणापत्तिप्रयोजनाभावात् पुनस्तत्राव्यक्तादिसृष्टयवचनाच्च ॥ १५ ॥

इति श्रीशारीरकमीमांसाभाष्ये अविभागाधिकरणम् ॥ ७ ॥

—( श्रीशारीरकमीमांसाभाष्ये तदोकोधिकरणम् ॥ ८ ॥ ) –

## तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारा विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया । ४ । २ । १६ ॥

एवं गत्युपक्रमावधि विद्वदविदुषोस्समानाकार उत्क्रान्तिप्रकार उक्तः; इदानीं विदुषो विशेष उच्यते। तत्रेदमाम्नायते—२"शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति। विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति। अनया नाडीनां शताधिकया मूर्धन्यनाड्यैव विदुषो गमनम्, अन्याभिरेवाविदुषो गमनमित्ययं नियम उपपद्यते, नेति संशयः। किं युक्तम्? नियमो नोपपद्यत इति। कुतः? नाडीनां भूयस्त्वादतिसूक्ष्मत्वाच्च दुर्विवेचतया पुरुषेणोपादातुमशक्यत्वात्। २"तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति यादृच्छिकीमुत्क्रान्तिमनुवदतीति युक्तमिति ॥

१. छा. ६-८-६ ॥ २. कठ. २-६-१६ ॥

—( सिद्धान्तः )—

एवं प्राप्ते प्रचक्ष्महे—शताधिकया—इति । विद्वान् शताधिकया मूर्धन्ययैव नाड्योत्क्रामति । नचास्याः विदुषो दुर्विवेचत्वम्;विद्वान्हिपरमपुरुषाराधनभूतात्यर्थप्रियविद्यासामर्थ्याद्विद्याशेषभूततयाऽऽत्मनोऽत्यर्थप्रियगत्यनुस्मरणयोगाच्च प्रसन्नेन हार्देन परमपुरुषेणानुगृहीतो भवति; ततश्च तदोकः-तस्य जीवस्य स्थानं हृदयम् , अग्रज्वलनं भवति अग्रे ज्वलनं प्रकाशनं यस्य, तदिदमग्रज्वलनम् । परमपुरुषप्रसादात्प्रकाशितद्वारो विद्वान् तां नाडीं विजानातीति तया विदुषो गतिरुपपद्यते ॥ १६ ॥

इति श्रीशारीरकमीमांसाभाष्ये तदोकोधिकरणम् ॥ ८ ॥

—[श्रीशारीरकमीमांसाभाष्ये रश्म्यनुसाराधिकरणम्॥९॥ ]—

## रश्म्यनुसारी । ४ । २ । १७ ॥

विदुषो हृदयाच्छताधिकया मूर्धन्यनाड्या निर्गतस्यादित्यरश्मीननुसृत्यादित्यमण्डलगतिः श्रूयते—१ "अथ यत्रैतदस्माच्छरीरादुत्कामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति । तत्र रश्म्यनुसारेणैवेत्ययं गतिनियमस्सम्भवति, नेति चिन्तायां-निशि मृतस्य विदुषो रश्म्यनुसारासम्भवाद् नियमः । वचनन्तु पक्षप्राप्तविषयम्--

--[ सिद्धान्त ]—

इति प्राप्त उच्यते-रश्म्यनुसारी-इति । रश्म्यनुसार्येव विद्वानूर्ध्वं गच्छति; कुतः? १"अथैतैरेव रश्मिभिः" इत्यवधारणात्; पाक्षिकत्वे ह्येवकारोऽनर्थकस्स्यात् । यदुक्तं निशि मृतस्य रश्म्यसम्भवाद्रश्मीननुसृत्य गमनं नोपपद्यत इति; तन्न, निश्यपि सूर्यरश्म्यनुसारस्सम्भवति;

---

१. छा. [८-६-५ ॥

लक्ष्यते हि निश्यपि निदाघसमये ऊष्मोपलब्ध्या रश्मिसद्भावः; हेमन्तादौ तु हिमाभिभवाद्दुर्दिन इवोष्मानुपलम्भः; श्रूयते च नाडीरश्मीनां सर्वदाऽन्योन्यान्वयः—१"तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं च एवमेवैत आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं च अमुष्मादादित्यात्प्रतायन्ते त आसु नाडीषु सृप्ताः आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः" इति। तस्मान्निश्यपि रश्मिसम्भवान्निशि मृतानामपि विदुषां रश्म्यनुसारेणैव ब्रह्मप्राप्तिरस्त्येव ॥१७॥

इति श्रीशारीरकमीमांसाभाष्ये रश्म्यनुसाराधिकरणम् ॥ ९ ॥

—[श्रीशारीरकमीमांसाभाष्ये निशाधिकरणम् ॥१०॥]—

## निशि नेतिचेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च । ४ । २ । १८ ॥

इदमिदानीं चिन्त्यते—विदुषो निशि मृतस्य ब्रह्मप्राप्तिरस्ति, नेति। यद्यपि निशायां सूर्यरश्मिसम्भवाद्रश्म्यनुसारेण गतिर्निशायामपि सम्भवति; तथापि निशामरणस्य शास्त्रेषु गर्हितत्वात्परमपुरुषार्थ लक्षणब्रह्मप्राप्तिर्निशामृतस्य न सम्भवति। शास्त्रेषु दिवामरणं प्रशस्तम्, विपरीतं निशामरणं २"दिवा च शुक्लपक्षश्च उत्तरायणमेव च। मुमूर्षतां प्रशस्तानि विपरीतं तु गर्हितम्" इति। दिवामरणनिशामरणयोः प्रशस्तत्वविपरीतत्वे चोत्तमाधमगतिहेतुत्वेन स्याताम्। अतो निशि मरणमधोगति हेतुत्वान्न ब्रह्मप्राप्तिहेतुरिति चेन्-तन्न. विदुषः कर्मसम्बन्धस्य यावद्देहभावित्वात्। एतदुक्तं भवति-अनारब्धकार्याणामधोगति हेतुभूतानां कर्मणां विद्यासम्बन्धेनैव विनाशादुत्तरेषां चाश्लेषात्प्रारब्धकार्यस्य च चरमदेहावधित्वाद्बन्धहेत्वभावाद्विदुषो निशामृतस्यापि ब्रह्मप्राप्तिस्सि-

१. छा. ८-६-२ ॥ २. ॥

द्धैव। दर्शयति च श्रुतिः १"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति २"दिवा च शुक्लपक्षश्च" इत्यादिवचनमविद्वद्विषयम् ॥

इति श्रीशारीरकमीमांसाभाष्ये निशाधिकरणम् ॥ १० ॥

( श्रीशारीरकमीमांसाभाष्ये दक्षिणायनाधिकरणम् ॥ ११ ॥ )

## अतश्चायनेऽपि दक्षिणे । ४ । २ । १९ ॥

निशि मृतस्यापि विदुषो ब्रह्मप्राप्तौ यो हेतुरुक्तः, तत एव हेतोर्दक्षिणेऽप्ययने मृतस्य ब्रह्मप्राप्तिस्सिद्धा ॥

अधिका शङ्का तु ३"अथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छति" इति दक्षिणायने मृतस्य चन्द्रप्राप्तिश्रवणात् चन्द्रं प्राप्तानां च ४"तेषां यदा तत्पर्यवैत्यथैतमेवाध्वानं पुनर्निवर्तन्ते" इति पुनरावृत्तिश्रवणात, भीष्मादीनां च ब्रह्मविद्यानिष्ठानामुत्तरायणप्रतीक्षादर्शनाद्दक्षिणायने मृतस्य ब्रह्मप्राप्तिर्न सम्भवति—इति।

परिहारस्तु—अविदुषां पितृयाणेन पथा चन्द्रं प्राप्तानामेव पुनरावृत्तिः, विदुषस्तु चन्द्रं प्राप्तस्यापि ३"तस्माद्ब्रह्मणो महिमानमाप्नोति" इति वाक्यशेषात्तस्य दक्षिणायनमृतस्य चन्द्रप्राप्तिः ब्रह्म प्रपित्सतो विश्रमहेतुमात्रमिति गम्यते; वाक्यशेषाभावेऽपि पूर्वोक्तादेव बन्धहेत्वभावात् विदुषश्चन्द्रं प्राप्तस्यापि ब्रह्मप्राप्तिरनिवार्या। भीष्मादीनां योगप्रभावात् स्वच्छन्दमरणानां धर्मप्रवर्तनायोत्तरायणप्राशस्त्यप्रदर्शनार्थस्तथाविधाचारः ॥

ननु च विदुषो मुमूर्षून् प्रति पुनरावृत्तिहेतुत्वेन कालविशेषविधिर्दृश्यते ५"यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः। प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ। अग्निर्ज्योतिरहश्शुक्लः षण्मासा उत्तरायणम्।

१. छा. ६-१४-२ ॥—२. ॥—३. तै. ना. १२-अनु ॥—४. छा. ५-१०-५ ॥—५. गी. ८-२३,२४ ॥

तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ १ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्। तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते। शुक्लकृष्णे गती ह्येते जगतश्शाश्वते मते। एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः" इति; तत्राह—

## योगिनः प्रति स्मर्येते स्मार्ते चैते । ४।२।२०॥

नात्र मुमूर्षून् प्रति मरणकालविशेषोपादानं स्मर्यते; अपितु योगिनः-योगनिष्ठान् प्रति स्मार्ते-स्मृतिविषयभूते स्मर्तव्ये देवयानपितृयाणाख्ये गती स्मर्येते-योगाङ्गतयाऽनुदिनं स्मर्तुम्। तथा ह्युपसंहारः १"नैते सृती पार्थ जानन्योगी मुह्यति कश्चन। तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन" इति। २"अग्निर्ज्योतिः" १"धूमो रात्रिः" इति च देवयानपितृयाणे प्रतिभिज्ञायेते। उपक्रमे च २"यत्र काले तु" इति कालशब्दः कालाभिमानिदेवतातिवाहिकपरः, अग्न्यादेः कालत्वासम्भवात्। अतः ३"तेऽर्चिषमभिसम्भवन्ति" इति विहितदेवयानानुस्मृतिरत्र विज्ञानिष्ठान् प्रति विधीयते, न मुमूर्षून् प्रति मरणकालविशेषः ॥ २० ॥

इति श्रीशारीरकमीमांसाभाष्ये दक्षिणायनाधिकरणम् ॥ ११ ॥

---

इति श्रीभगवद्रामानुजविरचिते श्रीशारीरकमीमांसाभाष्ये
चतुर्थस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

---

१. गी. ८-२५,२६,२७ ॥—२. गी. ८-२३ २४ ॥—३. छा. ५-१०-१२ ॥

श्रीमते रामानुजाय नमः.

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

—( चतुर्थाध्याये-तृतीयः पादः-अर्चिराद्यधिकरणम् ॥ १ ॥ )—

## अर्चिरादिना तत्प्रथितेः । ४ । ३ । १ ॥

विदुष उत्क्रान्तस्य नाडीविशेषेण हार्दानुग्रहाद्गत्युपक्रम उक्तः। तस्य गच्छतो मार्ग इदानीं निर्णीयते। तत्र श्रुतिषु मार्गप्रकाराः बहुधा आम्नायन्ते; छान्दोग्ये तावत् १"यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पाप कर्म न श्लिष्यते" इत्युपक्रम्य ब्रह्मविद्यामुपदिश्याम्नायते २"अथ यदु चैवास्मिन्छव्यं कुर्वन्ति यदु च न अर्चिषमेवाभिसम्भवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्केति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः। स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्म पथः एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इति। तथाऽत्रैवाष्टमे ३"अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति कौषीतकिनश्च देवयानमार्गमन्यथाऽधीयते ४"स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्" इति। तथा बृहदारण्यके ५"य एवमेतद्विदुर्ये चेमेऽरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसम्भवन्ति अर्चिषोऽहरह्न

---

१. छा. ४-१४-३ ॥—२. छा. ४-१५-५,६ ॥—३. छा. ८-६-५ ॥ —४. कौ. १-अ. ३ ॥—५. बृ. ८-२-१५ ॥

अपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं वैद्युतात्पुरुषोऽमानवस्स एत्य ब्रह्मलोकान् गमयति" इति। तत्रैव पुनरन्यथा १"यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा आडम्बरस्य खं तेन स ऊर्ध्वमाक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खम्" इत्यादि। तत्र संशयः-किमर्चिरादिरेक एव मार्ग आभिश्श्रुतिभिः प्रतिपाद्यत इति, तेनैव ब्रह्म गच्छति विद्वान् उत तस्मादन्येऽन्यत्र मार्गा इति, तैर्वाऽनेन वेत्यनियमः—इति। किं युक्तम्? अनियम इति। कुतः? अनेकरूपत्वान्नैरपेक्ष्याच्चेति॥

## ( —सिद्धान्तः— )

एवं प्राप्तेऽभिधीयते—अर्चिरादिना—इति। अर्चिरादिरेक एव मार्गस्सर्वत्र प्रतिपाद्यते। अतोऽर्चिरादिनैव गच्छति। कुतः? तत्प्रथितेः—तस्यैव सर्वत्र प्रथितेः। प्रथितिः-प्रसिद्धिः, तस्यैव सर्वत्र प्रत्यभिज्ञानादित्यर्थः प्रत्यभिज्ञानात्स एव मार्गस्सर्वत्र न्यूनाधिकभावेन प्रतिपाद्यत इति विद्यागुणोपसंहारवदन्यत्रोक्तानामन्यत्रोपसंहारः क्रियते। छान्दोग्ये तावदुपकोसलविद्यायां पञ्चाग्निविद्यायां चैकरूप एवाम्नायते; वाजसनेयके च पञ्चाग्निविद्यायां तथैवार्चिरादिः अल्पान्तर आम्नायते; अतस्तत्रापि स एवेति प्रतीयते। अन्यत्रापि सर्वत्राग्नयादित्यादयः प्रत्यभिज्ञायन्ते॥ १॥

इति श्रीशारीरकमीमांसाभाष्ये अर्चिराद्यधिकरणम्॥ १॥

———

१. बृ. ७-१०-१॥

—( श्रीशारीरकमीमांसाभाष्ये वाय्वधिकरणम् ॥ २ ॥ )—

## वायुमब्दादविशेषविशेषाभ्याम् । ४ । ३ । २ ॥

अर्चिरादिनैव गच्छन्ति विद्वांस इत्युक्तम्; तत्रार्चिरादिके मार्गे छन्दोगाः मासादित्ययोरन्तराले संवत्सरमधीयते-१ "मासेभ्यः संवत्सरं संवत्सरादादित्यम्" इति। वाजसनेयिनस्तु तयोरेवान्तराले देवलोकं २ "मासेभ्यो देवलोकं देवलोकादादित्यम्" इति। उभयत्रापि मार्गस्यैकत्वादुभावुभयत्रोपसंहार्यौ। तत्र मासादूर्ध्वमभिहितयोस्संवत्सरदेवलोकयोः पञ्चम्याऽभिहितस्य श्रौतक्रमस्य तुल्यत्वेऽहि १"अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेतिमासांस्तान्" इत्यधिककालानां न्यूनकालेभ्य उत्तरोत्तरत्वेन निवेशदर्शनात्संवत्सरस्यैव मासादनन्तरं बुद्धौ विपरिवृत्तेः संवत्सर एव मासादूर्ध्वं निवेशयितव्य इति तत ऊर्ध्वं देवलोक इति निश्चीयते। अन्यत्र वाजसनेयिनः ३"यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते" यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति" इत्यादित्यात्पूर्वं वायुमधीयते। कौषीतकिनस्तु ४"स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकम्" इत्यग्निलोकशब्दनिर्दिष्टादर्चिषः परं वायुमधीयते। तत्र कौषीतकिनां पाठक्रमेणार्चिषः परत्वेन प्राप्तस्य वायोर्वाजसनेयिनां ३"तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति" इत्यूर्ध्वशब्दनिर्दिष्टश्रौतक्रमेण पाठक्रमाद्बलीयसा आदित्यात्पूर्वं प्रवेशो निश्चीयते। अत आदित्यात्पूर्वं संवत्सरादूर्ध्वं देवलोको वायुश्च प्राप्तौ। तत्रेदं चिन्त्यते--किं देवलोको वायुश्चार्थान्तरभूतौ यथेष्टक्रमेण विद्वानभिगच्छेत्, उतानर्थान्तरत्वेन संवत्सरादूर्ध्वं देवलोकं सन्तं वायुमभिगच्छेत्-इति। किं युक्तम्? भिन्नार्थत्वम्, प्रसिद्धेः। भिन्नार्थत्वेचो-

१. छा. -४-१५-२॥--२. बृ. ८-२-१५॥—३. बृ. ७.१०.१॥—४. कौ. १. अ .२॥

र्ध्वशब्देन पञ्चम्या चोभयोस्संवत्सरादित्यान्तराले श्रुतिक्रमेण प्राप्तत्वात्, विशेषाभावाच्च यथेष्टम्—

—( सिद्धान्तः )—

इति प्राप्त उच्यते—वायुमब्दात्-इति। वायुं संवत्सरादूर्ध्वमभिगच्छेत्। कुतः? अविशेषविशेषाभ्यां वायोरेव निर्दिष्टत्वात्। देवलोकशब्दो हि अविशेषेण–सामान्येन देवानां लोक इत्यनेन रूपेण वायुमभिधत्ते। १"स वायुमागच्छति तस्मै स तत्र" इति वायुशब्दो विशेषेण वायुमभिधत्ते। अतो देवलोकवायुशब्दाभ्याम् अविशेषविशेषाभ्यां वायुरेवाभिधीयत इति संवत्सरादूर्ध्वं वायुमेवाभिगच्छेत्। कौषीतकिनां वायुलोकशब्दश्चाग्निलोकशब्दवत् वायुश्चासौ लोकश्चेति व्युत्पत्त्या वायुमेवाभिधत्ते। वायुश्च देवानामावासभूत इत्यन्यत्र श्रूयते २"योऽयं पवत एष देवानां गृहाः" इति॥ २॥

इति श्रीशारीरकमीमांसाभाष्ये वाय्वधिकरणम्॥ २॥

## —( श्रीशारीरकमीमांसाभाष्ये वरुणाधिकरणम्॥ ३॥ )—

## तटितोऽधि वरुणस्सम्बन्धात्। ४। ३। ३॥

कौषीतकिनां ३"स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्" इत्यत्राग्निलोकशब्दस्यार्चिःपर्यायत्वेन प्राथम्यमविगीतम्। वायोश्च संवत्सरादूर्ध्वं निवेश उक्तः। आदित्यस्याप्यत्र प्राप्तपाठक्रमबाधेन ४"देवलोकादादित्यमादित्याद्वैद्युतम्" इति वाजसनेयकोक्तश्रुतिक्रमाद्देवलोकशब्दाभिहिताद्वायोरुपरि निवेशस्सिद्धः। इदानीं वरुणेन्द्रा-

१. बृ. ७-१०-१॥—२.॥—३. कौ. १-अ. ३॥—४. बृ. ८-२-१५॥

दिपु चिन्ता । किमेते वरुणादयो यथापाठं वायोरूर्ध्वं निवेशयितव्याः, आहोस्विद्विद्युतोऽधीति विशये, अर्चिः प्रभृतिषु सर्वेषु १ "अर्चिषोऽहः" इत्यादिश्रुतिक्रमोपरोधाद्विद्युतः परस्ताच्च २ "तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति" इति विद्युत्पुरुषस्य ब्रह्मगमयितृत्वश्रवणाच्च सर्वत्रावकाशाभावेनाप्राप्तौ च उपदेशावैयर्थ्यायावश्यं कस्यचिद्बाध्यत्वे पाठक्रमानुरोधेन वायोरनन्तरं वरुणो निवेशयितव्यः । वाय्वादित्ययोः क्रमस्य बाधितत्वेनेन्द्रप्रजापती अपि तत्रैव निवेशयितव्यौ—

—( सिद्धान्तः )—

इति प्राप्त उच्यते—तटितोऽधि वरुणः इति । वरुणस्तावद्विद्युत उपरिष्टान्निवेशयितव्यः । कुतः ? सम्बन्धात्—मेघोदरवर्तित्वाद्विद्युतो वरुणेन सम्बन्धो लोकवेदयोः प्रसिद्धः । एतदुक्तं भवति–वरुणादीनामुपदेशावैयर्थ्याय क्वचिन्निवेशयितव्यत्वे सति पाठक्रमादर्थक्रमस्य बलीयस्त्वाद्विद्युतोऽधि वरुणो निवेशयितव्यः; ततश्चामानवस्य गमयितृत्वं व्यवधानसहमित्यवगम्यते । तस्य च व्यवधानसहत्वादिन्द्रादेश्चोपदिष्टस्यावश्यनिवेशयितव्यस्य वरुणादुपर्युपदिष्टत्वादागन्तूनामन्ते निवेशयितव्यत्वाच्च वरुणादुपरीन्द्रादिर्निवेशयितव्य इति ॥३॥

इति श्रीशारीरकमीमांसाभाष्ये वरुणाधिकरणम् ॥३॥

—( श्रीशारीरकमीमांसाभाष्ये आतिवाहिकाधिकरणम् ॥ )—

## आतिवाहिकास्तल्लिङ्गात् । ४ । ३ । ४ ॥

इदमिदानीं चिन्त्यते-किमर्चिरादयो मार्गचिह्नभूताः, उत भो–

१. छा. ४-१५-५ ॥ २. छा. ४-१५-५, ६ ॥

गभूमयः, अथवा विदुषां ब्रह्म प्रेप्सतामतिवोढारः-इति । किं तावद्युक्तम्? मार्गचिह्नभूता इति । कुतः ? उपदेशस्य तथाविधत्वात्; दृश्यते हि लोके ग्रामादीन् प्रति गन्तॄणामेवंविधो दैशिकैरुपदेशः—'इतो निष्क्रम्यामुकं वृक्षममुकां नदीममुकं च पर्वतपार्श्वं गत्वाऽमुकं ग्रामं गच्छ' इति । अथवा भोगभूमय, एताःस्युः, कालविशेषतया प्रसिद्धानामहरादीनां मार्गचिह्नत्वानुपपत्तेरन्यस्य च मार्गचिह्नभूतस्यैतेषामनभिधायकत्वात् । भोग भूमित्वं च १"एत एव लोका यदहोरात्राण्यर्धमासा मासा ऋतवस्संवत्सराः" इत्यहरादीनां लोकत्ववचनादुपपद्यते । अत एव च कौषीतकिनः २ "अग्निलोकमागच्छति" इत्यादिना लोकशब्दानुविधानेनार्चिरादीन् पठन्तीति ॥

—( सिद्धान्तः )—

एवं प्राप्ते ब्रूमः-आतिवाहिकाः-इति । विदुषामतिवाहे परमपुरुषेण नियुक्ताः आतिवाहिकाः देवताविशेषा एतेऽर्चिरादयः । कुतः ? तल्लिङ्गात्—अतिवहनलिङ्गात । अतिवहनं हि गन्तॄणां गमयितृत्वम् । गमयितृत्वं च ३"तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति" इत्युपसंहारे श्रूयमाणं पूर्वेषामप्यविशेषश्रुतानां स एव सम्बन्ध इति गमयति । वदन्ति चार्चिरादयः शब्दाः अर्चिराद्यात्मभूतानभिमानिदेवताविशेषान् । ४"तं पृथिव्यब्रवीत्" इतिवत् ॥ ४ ॥

यद्येवं ३ "तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति" इति वैद्युतस्यैव पुरुषस्य ब्रह्मगमयितृत्वश्रुतेर्विद्युतः परेषां वरुणादीनां कथमातिवाहिकत्वेनान्वय इत्यत्राह—

## वैद्युतेनैव ततस्तच्छ्रुतेः । ४ । ३ । ५ ॥

ततः विद्युत उपरि, वैद्युतेन—अमानवेनैवातिवाहिकेन विदुषा-

१. तै. ना. ८०-अनु । २. कौ. १-अ ॥—३. छा. ४-१५-५, ६ ॥
४. यजु. ५-२-२ ॥

मात्रब्रह्मप्राप्तेर्गमनम्। कुतः? तच्छ्रुतेः १ "स एनान् ब्रह्म गमयति" इति तस्यैव गमयितृत्वश्रुतेः। वरुणादयस्त्वनुग्राहका इति तेषामप्यातिवाहिकत्वेनान्वयो विद्यत एव ॥ ५॥

इति श्रीशारीरकमीमांसाभाष्ये आतिवाहिकरणम् ॥ ४ ॥

( श्रीशारीरकमीमांसाभाष्ये कार्याधिकरणम् ॥५॥ )

## कार्यं बादरिरस्य गत्युपपत्तेः। ४। ३। ६॥

अर्चिरादिनैव गच्छति विद्वान्; अर्चिरादिरमानवान्तश्च गण आतिवाहिको विद्वांसं ब्रह्म गमयतीत्युक्तम्। इदमिदानीं चिन्त्यते। किमयमर्चिरादिको गणः कार्यं हिरण्यगर्भमुपासीनान्नयति, उत परमेव ब्रह्मोपासीनान्, अथ परं ब्रह्मोपासीनान् प्रत्यगात्मानं ब्रह्मात्मकतयोपासीनांश्च–इति विशये–कार्यमुपासीनानेव गमयतीति बादरिराचार्यो मन्यते। कुतः? अस्य–हिरण्यगर्भमुपासीनस्यैव गत्युपपत्तेः; न हि परिपूर्णं सर्वज्ञं सर्वगतं सर्वात्मभूतं परं ब्रह्मोपासीनस्य तत्प्राप्तये देशान्तरगतिरुपपद्यते, प्राप्तत्वादेव; नित्यप्राप्तपरब्रह्मविषयाविद्यानिवृत्तिमात्रमेव हि परविद्याकार्यम्। कार्यं तु हिरण्यगर्भरूपं ब्रह्मोपासीनस्य परिच्छिन्नदेशवर्तिप्राप्त्यर्थं गमनमुपपद्यते। अतोऽर्चिरादिरातिवाहिकगणस्तमेव नयति ॥ ६ ॥

## विशेषितत्वाच्च। ४। ३। ७॥

२"पुरुषोऽमानव एत्य ब्रह्मलोकान्गमयति" इति लोकशब्देन बहुवचनेन च लोकविशेषवर्तिनं हिरण्यगर्भमुपासीनमेवामानवो गमयतीति विशेष्यते। किञ्च ३"प्रजापतेस्सभां वेश्म प्रपद्ये; इति कार्यस्य हिरण्यगर्भस्य समीपगमनमर्चिरादिना गतः प्रत्यभिसन्धत्ते ॥ ७ ॥

१. छा. ४-१५-५, ६ ॥—२. बृ. ८-२-१५ ॥—३. छा. ८-१४-१ ॥

नन्वेवं १"तत्पुरुषोऽमानवः" २"स एनान् ब्रह्म गमयति" इत्ययं निर्देशो नोपपद्यते; हिरण्यगर्भनयने हि 'स एनान् ब्रह्माणं गमयति' इति निर्देष्टव्यं स्यात्; अत आह—

## सामीप्यात्तु तद्व्यपदेशः । ४ । ३ । ८ ॥

३"यो ब्रह्माणं विदधाति" इति हिरण्यगर्भस्य प्रथमजत्वेन ब्रह्मसामीप्यात्तस्य ब्रह्मशब्देन व्यपदेश इति गत्यनुपपत्तिविशेषणादिभिरुक्तैर्हेतुभिर्निश्चीयत इत्यर्थः ॥ ८ ॥

अथ स्यात्—अर्चिरादिना हिरण्यगर्भप्राप्तौ २"एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" ४"तयोर्ध्वमायन्नमृतत्वमेति" ५ इत्यमृतत्वप्राप्त्यपुनरावृत्तिव्यपदेशो नोपपद्यते, हिरण्यगर्भस्य कार्यभूतस्य द्विपरार्धकालावसाने विनाशशास्त्रात् ६"आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन" इति वचनाद्धिरण्यगर्भं प्राप्तस्य पुनरावृत्तेरवर्जनीयत्वात्—इति; अत्राह—

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् । ४ । ३ । ९ ॥

कार्यस्य—ब्रह्मलोकस्यात्यये तदध्यक्षेण—हिरण्यगर्भेणाधिकारिकेणावसिताधिकारेण विदुषा सह स्वयमपि तत्राधिगतविद्यः; अतः—कार्याद्ब्रह्मलोकात् परं ब्रह्म प्राप्नोतीत्यर्चिरादिना गतस्यामृतत्वप्राप्त्यपुनरावृत्त्यभिधानात् ७"ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" इति वचनाच्चावगम्यते ॥ ९ ॥

---

१. छा. ४-१५-५ ॥—२. छा. ४-१५-६ ॥—३. श्वे. ६-१८ ॥—४. कठ. २-६-१६ ॥—५. इत्यमृतत्वापुनरावृत्तिव्यपदेशः पा ॥ ६. गी. ८-१६ ॥ ७. तै. ना. १०-अनु-२४ ॥

## स्मृतेश्च । ४ । ३ । १० ॥

स्मृतेश्चायमर्थोऽवगम्यते-१'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मनः प्रविशन्ति परं पदम्' इति । अतः कार्यमुपासीनमेवार्चिरादिको गणो नयतीति बादरेर्मतम् ॥ १० ॥

अत्र जैमिनिः पक्षान्तरपरिग्रहेण प्रत्यवतिष्ठते--

## परं जैमिनिर्मुख्यत्वात् । ४ । ३ । ११ ॥

परं ब्रह्मोपासीनानर्चिरादिर्नयतीति जैमिनिराचार्यो मन्यते; कुतः? मुख्यत्वात्-२"तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति" इति ब्रह्मशब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यत्वात् । प्रमाणान्तरेण कार्यत्व निश्चये सत्येव हि लाक्षणिकत्वं युक्तम् । न च गमनानुपपत्तिः प्रमाणम्, परस्य ब्रह्मणस्सर्वगतत्वेऽपि विदुषो विशिष्टदेशगतस्यैवाविद्यानिवृत्तिशास्त्रात् । यथा हि विद्योत्पत्तिर्वर्णाश्रमधर्मशौचाचारदेशकालाद्यपेक्षा ३"तमेतं वेदानुवचनेन" इत्यादिशास्त्रादवगम्यते, तथा निश्शेषाविद्यानिवर्तनरूपविद्यानिष्पत्तिरपि विशिष्टदेशगतिसापेक्षेति गतिशास्त्रादवगम्यते । विदुष उत्क्रान्तिप्रतिषेधादि तु पूर्वमेव परिहृतम् । यत्तु ४ "ब्रह्मलोकान्" इति लोकशब्दबहुवचनाभ्यां विशेषणात्कार्यभूतहिरण्यगर्भप्रतीतिरिति; तदयुक्तम्, निषादस्थपतिन्यायेन ब्रह्मैव लोको ब्रह्मलोक इति कर्मधारयस्यैव युक्तत्वात्, अर्थस्य चैकत्वे निश्चिते बहुवचनस्य ५ "अदितिः पाशान्" इतिवदुपपत्तेः; परस्य ब्रह्मणः परिपूर्णस्य सर्वगतस्य सत्यसङ्कल्पस्य स्वेच्छापरिकल्पिताः स्वासाधारणा अप्राकृताश्च लोका नात्यन्ताय न सन्ति, श्रुतिस्मृतीतिहासपुराणप्रामाण्यात् ॥ ११ ॥

---

१. कूर्मपुराणे. पूर्वभा. १२-२६६ ॥ २. छा. ४-१५-५, ६ ॥ ३. बृ. ६-४-२२ ॥ ४. बृ. ८-२-१५ ॥ ५. ॥

## दर्शनाच्च । ४ । ३ । १२ ॥

दर्शयति श्रुतिः मूर्धन्यनाड्या निष्क्रम्य देवयानेन गतस्य परब्रह्मप्राप्तिम् १"एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति ॥१२॥

यदुक्तं २"प्रजापतेस्सभां वेश्म प्रपद्ये" इत्यर्चिरादिना गतस्य कार्ये प्रत्यभिसन्धिर्दृश्यत इति तत्रोत्तरं—

## नच कार्ये प्रत्याभिसन्धिः । ४ । ३ । १३ ॥

न चायं प्रत्यभिसन्धिः कार्ये हिरण्यगर्भे; अपि तु परस्मिन्नेव ब्रह्मणि, वाक्यशेषे २"यशोऽहं भवामि ब्राह्मणानाम्" इति तस्याभिसन्धातुस्सर्वाविद्याविमोकपूर्वकसर्वात्मभावाभिसन्धानात् , ३ "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि" इत्यभिसम्भाव्यस्य ब्रह्मलोकस्याकृतत्वश्रवणात् , सर्वबन्धविनिर्मोकस्य च साक्षाच्छ्रवणात् । अतः परमेव ब्रह्मोपासीनमर्चिरादिरातिवाहिको गणो नयतीति जैमिनेर्मतम् ॥ १३ ॥

इदानीं बादरायणस्तु भगवान् स्वमतेन सिद्धान्तमाह—

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च । ४ । ३ । १४ ॥

अप्रतीकालम्बनान् प्रतीकालम्बनव्यतिरिक्तान् नयत्यर्चिरादिरातिवाहिको गण इति भगवान् बादरायणो मन्यते; एतदुक्तं भवति—

---

१. छा. ८-३-४ ॥ २. छा. ८-१४-१ ॥ ३. छा. ८-१३-१ ॥

कार्यमुपासीनान्नयतीति नायं पक्षस्सम्भवति; परमेवोपासीनानित्ययमपि नियमो नास्ति ; न च प्रतीकालम्बनानपि नयति ; अपितु ये परं ब्रह्मोपासते, ये चात्मानं प्रकृतिवियुक्तं ब्रह्मात्मकमुपासते; तानुभयविधान्नयति; ये तु ब्रह्मकार्यान्तर्भूतनामादिकं वस्तु देवदत्तादिषु सिंहादिदृष्टिवत् ब्रह्मदृष्ट्या, केवलं वा तत्तद्वस्तूपासते, न तान्नयति । अतः परं ब्रह्मोपासीनानात्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनान्नयति–इति । कुतः ? उभयथा च दोषात् । कार्यमुपासीनान्नयतीति पक्षे १"अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य" इत्यादिकाः श्रुतयः प्रकुप्येयुः; परमेवोपासीनानिति नियमे २"तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति" इति पञ्चाग्निविदोऽर्चिरादिर्गणो नयतीति श्रुतिः प्रकुप्येत । अतः उभयस्मिन्नपि पक्षे दोषस्स्यात् । तस्मादुभयविधान्नयतीति । तदेतदाह–तत्क्रतुश्च–इति । तत्क्रतुः–तथोपासीनस्तथैव प्राप्नोतीत्यर्थः, ३"यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" ४"तं यथायथोपासते" इति न्यायात् । पञ्चाग्निविदोऽप्यर्चिरादिना गतिश्रवणात्, अर्चिरादिना गतस्य ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणाच्च । अत एव तत्क्रतुन्यायात्प्रकृतिविनिर्मुक्तब्रह्मात्मकात्मानुसन्धानं सिद्धम् । नामादिप्राणपर्यन्तप्रतीकालम्बनानां तूभयविधश्रुतिसिद्धोपासनाभावादचिन्मिश्रोपासनं तत्क्रतुन्यायाच्चार्चिरादिना गतिर्ब्रह्मप्राप्तिश्च न विद्यते ॥ १४ ॥

तमिमं विशेषं श्रुतिरेव दर्शयतीत्याह—

## विशेषञ्च दर्शयति । ४ । ३ । १५ ॥

५"यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति" इत्यादिका श्रु-

१. छा. ८-३-४ ॥—२. छा. ५-१०-१ ॥—३. छा. ३-१४-१ ॥—४ ॥
५. छा. ७-१-५ ॥

तिः १ नामादिप्राणपर्यन्तप्रतीकमुपासीनानां गत्यनपेक्षं परिमितफलविशेषं च दर्शयति; तस्मादचिन्मिश्रं केवलं वाचिद्वस्तु ब्रह्मदृष्ट्या तद्वियोगेन च य उपासते, न तान् नयति, अपितु परं ब्रह्मोपासीनानात्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनानातिवाहिको गणो नयतीति सिद्धम् ॥

इति श्रीशारीरकमीमांसाभाष्ये कार्याधिकरणम् ॥ ५ ॥

---

इति भगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
चतुर्थस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

—:※:—

---

१. नामादि प्रतीकमुपा. पा ॥

श्रीमते रामानुजाय नमः.

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

—(चतुर्थाध्याये-चतुर्थः पादः-सम्पद्याविर्भावाधिकरणम् ॥ १ ॥)—

## सम्पद्याविर्भावस्स्वेनशब्दात् । ४ । ४ । १ ॥

परं ब्रह्मोपासीनानामात्मानं च प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनानामर्चिरादिना मार्गेणापुनरावृत्तिलक्षणा गतिरुक्ता; इदानीं मुक्तानामैश्वर्यप्रकारं चिन्तयितुमारभते । इदमाम्नायते–१"एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति । किमस्माच्छरीरात्समुत्थाय परज्योतिरुपसम्पन्नस्य देवादिरूपवत्साध्येन रूपेण सम्बन्धोऽनेन वाक्येन प्रतिपाद्यते, उत स्वाभाविकस्य स्वरूपस्याविर्भाव इति संशये, साध्येन रूपेण सम्बन्ध इति युक्तम् । अन्यथा ह्यपुरुषार्थावबोधित्वं मोक्षशास्त्रस्य स्यात्, स्वरूपस्य स्वतोऽपुरुषार्थत्वदर्शनात् । न हि सुषुप्तौ देहेन्द्रियव्यापारेषूपरतेषु केवलस्यात्मस्वरूपस्य पुरुषार्थसम्बन्धो दृश्यते; न च दुःखनिवृत्तिमात्रं परं ज्योतिरुपसम्पन्नस्य पुरुषार्थः, येन स्वरूपाविर्भाव एव मोक्षः इत्युच्येत; २"स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य" ३"रसं ह्येवायं लब्ध्वाऽनन्दी भवति" इत्यादिभ्यो मुक्तस्य सुखानन्त्यश्रवणात् । नचापरिच्छिन्नानन्दरूपचैतन्यमेवास्य स्वरूपम्, तच संसारदशायामविद्यया तिरोहितं परं ज्योतिरुपसम्पन्नस्याविर्भवतीति शक्यं वक्तुम्, ज्ञानस्वरूपस्य

१. छा. ८-१२-२ ॥—२. तै. आन. ८-अनु. ४ ॥...३. तै. आन. ७-१ ॥

तिरोधानासम्भवात् । प्रकाशपर्यायस्य ज्ञानस्य तिरोधानं तद्विनाश एवेति हि पूर्वमेवोक्तम् । नच प्रकाशमात्रस्याऽनन्दता सम्भवति; सुखस्वरूपता ह्यानन्दस्वरूपता; सुखस्वरूपत्वं चात्मनोऽनुकूलत्वम्; प्रकाशमात्रात्मवादिनः कस्य प्रकाशोऽनुकूलवेदनीयो भवेदिति प्रकाशमात्रात्मवादिनः कथंचिदप्यानन्दस्वरूपता दुरुपपादा । स्वरूपापत्तिमात्रे च साध्ये स्वरूपस्य नित्यनिष्पन्नत्वादुपसम्पन्नस्य १ " स्वेन रूपेणाभिनिष्पद्यते" इति वचनमनर्थकं स्यात् । अतोऽपूर्वेण साध्येन रूपेण सम्पद्यते । एवं च १"अभिनिष्पद्यते" इति वचनं मुख्यार्थमेव भवति । १"स्वेन रूपेण" इत्यप्यानन्दैकान्तेन स्वासाधारणेनाभिनिष्पद्यत इति सङ्गच्छत इति ॥

—( सिद्धान्तः )—

एवं प्राप्ते प्रचक्ष्महे-सम्पद्याविर्भावः-इति । अयं प्रत्यगात्माऽर्चिरादिना परं ज्योतिरुपसम्पद्य यं दशाविशेषमापद्यते, स स्वरूपाविर्भावरूपः; नापूर्वाकारोत्पत्तिरूपः । कुतः? स्वेन शब्दात् १"स्वेन रूपेण"इति विशेषणोपादानादित्यर्थः । आगन्तुकविशेषपरिग्रहे हि १" स्वेन रूपेण" इति विशेषणमनर्थकं स्यात्, अविशेषणेऽपि तस्य स्वकीयरूपत्वसिद्धेः ॥

यत्तूक्तं स्वरूपस्य नित्यप्राप्तत्वात् १" उपसम्पद्याभिनिष्पद्यते" इति वचनमनर्थकमिति-तत्रोत्तरं-

## मुक्तः प्रतिज्ञानात् । ४ । ४ । २ ॥

कर्मसम्बन्धतत्कृतदेहादिविनिर्मुक्तः स्वाभाविकरूपेणावस्थितोऽत्र १"स्वेन रूपेणाभिनिष्पद्यते" इत्युच्यते । अतो नित्यप्राप्तस्यापि स्वरूपस्य कर्मरूपाविद्यातिरोहितस्य तिरोधाननिवृत्तिरत्राभिनिष्पत्तिरुच्यते । कुतः? प्रतिज्ञानात्-सा हि प्रतिपाद्यतया प्रतिज्ञाता । कुत इदमवगम्यते ? २"य आत्मा" इति प्रकृतं प्रत्यगात्मानं जागरिताद्यवस्थात्रितयविनिर्मुक्तं,

---

१. छा. ८-१२-२ ॥—२. छा. ८-७-१ ॥

प्रियाप्रियहेतुभूतकर्मारब्धशरीरविनिर्मुक्तं च प्रतिपादयितुम् १"एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इति पुनःपुनरुक्त्वा २"एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यभिधानात् । अतः कर्मणा सम्बद्धस्य परं ज्योतिरुपसम्पद्य बन्धनिवृत्तिरूपा मुक्तिः स्वेन रूपेणाभिनिष्पत्तिरुच्यते । स्वरूपाविर्भावेऽप्यभिनिष्पत्तिशब्दो दृश्यते, 'युक्त्याऽयमर्थो निष्पद्यते' इत्यादिषु ॥ २ ॥

यदुक्तम्-आत्मस्वरूपस्य सुषुप्तावपुरुपार्थत्वदर्शनात्स्वरूपाविर्भावे मोक्षशास्त्रस्यापुरुपार्थावबोधित्वं स्यादिति कृत्वा देशाद्यवस्थावत्सुखसम्बन्ध्यवस्थान्तरप्राप्तिरभिनिष्पत्तिः-इति ; तत्रोत्तरम्-

## आत्मा प्रकरणात् । ४ । ४ । ३ ॥

स्वरूपेणैवायमात्मा अपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणकः प्रकरणादवगम्यते ; ३"य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" इति हि प्रजापतिवाक्यप्रक्रमः ; इदं च प्रकरणं प्रत्यगात्मविषयमिति ४"उत्तराच्चेदाविर्भूतस्वरूपस्तु" इत्यत्र प्रतिपादितम् । अतोऽपहतपाप्मत्वादिस्वरूप एवायमात्मा संसारदशायां कर्माख्याविद्यया तिरोहितस्वरूपः परं ज्योतिरुपसम्पद्याविर्भूतस्वरूपो भवति । अतः प्रत्यगात्मनोऽपहतपाप्मत्वादयस्स्वाभाविका गुणाः परं ज्योतिरुपसम्पन्नस्याविर्भवन्ति ; नोत्पद्यन्ते ; यथोक्तं भगवता शौनकेनापि ५"यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः । दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा । यथोदपानकरणात्क्रियते न जलाम्बरम् । सदेव नीयते व्यक्तिमसतस्सम्भवः कुतः । तथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते" इति । अतो ज्ञानानन्दादिगुणानां कर्मणा आत्मनि सङ्कुचितानां परं

१. छा. ८-९-३ ॥—२. छा. ८-१२-२ ॥—३. छा. ८-७-१ ॥—४. शारी. १-३-१८ ॥—५. विष्णुधर्मे. १०४, ५५, ५६, ५७ ॥

ज्योतिरुपसम्पन्न कर्मरूपबन्धक्षये विकाशरूपाविर्भावो नानुपपन्न इति सुष्ठूक्तं—सम्पद्याविर्भावः—इति ॥ ३ ॥

इति श्रीशारीरकमीमांसाभाष्ये सम्पद्याविर्भावाधिकरणम् ॥ १ ॥

—(श्रीशारीरकमीमांसाभाष्ये अविभागेनदृष्टत्वाधिकरणम् ॥)—

## अविभागेन दृष्टत्वात् । ४ । ४ । ४ ॥

किमयं परं ज्योतिरुपसम्पन्नः सर्वबन्धविनिर्मुक्तः प्रत्यगात्मा स्वात्मानं परमात्मनः पृथग्भूतमनुभवति, उत तत्प्रकारतया तदविभक्तम्-इति विशये [१]"सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" [२]"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" [३]"इदं ज्ञानमपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" इत्यादिश्रुतिस्मृतिभ्यां मुक्तस्य परेण साहित्यसाम्यसाधर्म्यावगमात् पृथग्भूतमनुभवति—

—( सिद्धान्तः )—

इति प्राप्त उच्यते-अविभागेन-इति। परस्माद्ब्रह्मणः स्वात्मानमविभागेनानुभवति मुक्तः । कुतः ? दृष्टत्वात्-परब्रह्मोपसम्पत्त्या निवृत्ताविद्यातिरोधानस्य याथातथ्येन स्वात्मनो दृष्टत्वात् । स्वात्मनः स्वरूपं हि [४]"तत्त्वमसि" [५]"अयमात्मा ब्रह्म" [४]"एतदात्म्यमिदं सर्वं" [६]"सर्वं खल्विदं ब्रह्म" इत्यादिसामानाधिकरण्यनिर्देशैः [७]"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" [८]"अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा" इत्यादिभिश्च परमात्मात्मकं तच्छरीरतया तत्प्रकारभूतमिति प्रति-

१. तै. आन. १-२ ॥—२. मु. ३-१-३ ॥—३. गी. १४-२ ॥—४. छा. ६-८-७॥ —५ ॥—६. छा. ३-१४-१ ॥—७. बृ. ५-७-२२. मा-पा ॥—८. आरण. १-३-२१॥

पादितम् १"अवस्थितेरिति काशकृत्स्नः" इत्यत्र । अतोऽविभागेन 'अहं ब्रह्मास्मि' इत्येवानुभवति । साम्यसाधर्म्यव्यपदेशो ब्रह्मप्रकारभूतस्यैव प्रत्यगात्मनः स्वरूपं तत्सममिति देवादिप्राकृतरूपप्रहाणेन ब्रह्मसमानशुद्धिं प्रतिपादयति । सहश्रुतिस्त्वेवंभूतस्य प्रत्यगात्मनः प्रकारिणा ब्रह्मणा सह तद्गुणानुभवं प्रतिपादयतीति न कश्चिद्विरोधः । ब्रह्मप्रकारतया तदविभागोक्तेर्हि २"सङ्कल्पादेव तच्छ्रुतेः" इत्यादि न विरुध्यते, ३"अधिकन्तु भेदनिर्देशात्" ४ "अधिकोपदेशात्" इत्यादि च ॥ ४ ॥

इति श्रीशारीरकमीमांसाभाष्ये अविभागेनदृष्टत्वाधिकरणम् ॥२॥

—( श्रीशारीरकमीमांसाभाष्ये ब्राह्माधिकरणम् ॥ ३ ॥)—

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः । ४ । ४ । ५ ॥

प्रत्यगात्मनः परं ज्योतिरुपसम्पद्य निवृत्ततिरोधानस्य स्वरूपाविर्भाव एवेत्युक्तम् । तत्र येन स्वरूपेणायमाविर्भवति; तत्स्वरूपं श्रुतिवैविध्याद्विचार्यते । किमपहतपाप्मत्वादिकमेवास्य स्वरूपमिति तेन रूपेणायमाविर्भवति, उत विज्ञानमात्रमेवेति तेन रूपेण, अथोभयोरविरोध इत्युभयरूपेणेति । किं तावत्प्राप्तम् ? ब्राह्मेणेति जैमिनिराचार्यो मन्यते । ब्राह्मेण—अपहतपाप्मत्वादिनेत्यर्थः । अपहतपाप्मत्वादयो हि दहरवाक्ये ब्रह्मसम्बन्धितया श्रुताः । ब्राह्मेणेति कुतोऽवगम्यते ? उपन्यासादिभ्यः; उपन्यस्यन्ते हि ब्रह्मगुणाः अपहतपाप्मत्वादयः प्रत्यगात्मनोऽपि प्रजापतिवाक्ये ५"य आत्माऽपहतपाप्मा" इत्यादिना ५ "सत्यसङ्कल्पः" इत्यन्तेन । आदिशब्देन सत्यसङ्कल्पत्वादिगुणायत्ता जक्षणादयः ६"जक्षत्क्रीडन्रममाणः" इत्यादिवाक्यावगता व्यवहारा गृह्यन्ते । अत एव

१. शारी. १-४-२२ ॥—२. शारी. ४-४-८ ॥—३. शारी. २-१-२२ ॥
४. शारी. ३-४-८ ॥—५. छा. ८-७-१ ॥—६. छा. ८-१२-३ ॥

उपन्यासादिभ्यः प्रत्यगात्मनो विज्ञानमात्रस्वरूपत्वं न सम्भवतीति जैमिनेर्मतम् ॥ ५ ॥

## चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः । ४ । ४ । ६ ॥

१ चैतन्यमात्रमेवास्य स्वरूपमिति तेन रूपेणाविर्भवतीत्यौडुलोमिराचार्यो मन्यते । कुतः ? तदात्मकत्वात्-तावन्मात्रात्मकत्वादस्य प्रत्यगात्मनः । २"स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" ३ "विज्ञान घन एव" इत्यवधारणात् विज्ञानमात्रमेवास्य स्वरूपमित्यवगम्यते । अतोऽस्य गुणान्तराभावात् ४"अपहतपाप्मा" इत्यादयः शब्दाः विकारसुखदुःखाद्यविद्यात्मकधर्मव्यावृत्तिपरा इति चिति तन्मात्ररूपेणाविर्भाव इत्यौडुलोमेर्मतम् ॥ ६ ॥

सम्प्रति भगवान् बादरायणः स्वमतेन सिद्धान्तमाह—

## एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः । ४ । ४ । ७ ॥

एवमपि—विज्ञानमात्रस्वरूपत्वप्रतिपादने सत्यपि, सत्यकामत्वादीनां पूर्वोक्तानां गुणानामविरोधं बादरायण आचार्यो मन्यते । कुतः ? उपन्यासात्पूर्वभावात्-औपनिषदात् ४ "य आत्माऽपहतपाप्मा" इत्याद्युपन्यासात्प्रमाणात् पूर्वेषाम्-अपहतपाप्मत्वसत्यकामत्वादीनामपि भावात्-विद्यमानत्वात् । तुल्यप्रमाणकानामितरेतरबाधो न युज्यत इत्यर्थः । नच वस्तुविरोधादपहतपाप्मत्वादीनामविद्यापरिकल्पितत्वं न्याय्यम्,

---

१. चैतन्यमात्रमेवात्मनः पा ॥—२. बृ. ६-५-१३ ॥—३. बृ. ४-४ १२ ॥—४. छां. ८-७-१ ॥

विशेषाभावात् 'विपरीतं कस्मान्न भवति" इति न्यायात्। तुल्यबलत्वे ह्यशक्यस्यावधारणस्यान्यपरत्वमेव न्याय्यम्। एवमप्यविरोध इत्यभ्युपगम्य वदन् ज्ञानमात्रमेवास्य स्वरूपं नान्यत्किञ्चिदस्तीत्ययमर्थः [1]"विज्ञानघन एव" इत्यादिभिर्न प्रतिपाद्यत इति मन्यते। कस्तर्हि[2]"विज्ञानघन एव" इत्यवधारणस्यार्थः? कृत्स्नोऽप्यात्मा जडव्यावृत्तस्वप्रकाशः नान्यायत्तप्रकाशः स्वल्पोऽपि प्रदेशोऽस्तीत्ययमर्थो वाक्यादेव सुव्यक्तः [3]"स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" इति। नचैवं प्रत्यगात्मनो धर्मिस्वरूपस्य कृत्स्नस्य विज्ञानघनत्वेऽप्यपहतपाप्मत्वसत्यसङ्कल्पत्वादिधर्मसम्बन्धो वाक्यान्तरावगतो विरुध्यते; यथा सैन्धवघनस्य कृत्स्नस्य रसघनत्वे रसनेन्द्रियावगते चक्षुराद्यवगताः रूपकाठिन्यादयो न विरुध्यन्ते। इदमत्र वाक्यतात्पर्यं—यथा रसवत्स्वाम्रफलादिषु त्वगादिप्रदेशभेदेन रसभेदे सत्यपि सैन्धवघनस्य सर्वत्रैकरसत्वम्; तथाऽऽत्मनोऽपि सर्वत्र विज्ञानस्वरूपत्वम्; स्वप्रकाशस्वरूपत्वमित्यर्थः॥ ७॥

इति श्रीशारीरकमीमांसाभाष्ये ब्राह्माधिकरणम्॥ ३॥

(श्रीशारीरकमीमांसाभाष्ये संकल्पाधिकरणम्॥ ४॥)

## संकल्पादेव तच्छ्रुतेः। ४। ४। ८॥

मुक्तः परं ब्रह्मोपसम्पद्य ज्ञानस्वरूपोऽपहतपाप्मत्वादिसत्यसङ्कल्पत्वपर्यन्तगुणक आविर्भवतीत्युक्तम्; तमधिकृत्य सत्यसङ्कल्पत्वप्रयुक्ता व्यवहाराः श्रूयन्ते [4]"स तत्र पर्येति जक्षन्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा" इति। किमस्य ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षा,

१. बृ. ४-४-१२॥—२. बृ. ४-४-१२॥—३. बृ. ६-५-१३॥
४. छा. ८-१२-३॥

उत परमपुरुषस्येव सङ्कल्पमात्रादेव भवतीति विशये; लोके राजादीनां सत्यसंकल्पत्वेन व्यवह्रियमाणानां कार्यनिष्पादने प्रयत्नान्तरसापेक्षत्वदर्शनादस्यापि तत्सापेक्षा—

—( सिद्धान्तः )—

इति प्राप्त उच्यते–सङ्कल्पादेव–इति। कुतः? तच्छ्रुतेः १ "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति" इति हि सङ्कल्पादेव पित्रादीनां समुत्थानं श्रूयते। नच प्रयत्नान्तरसापेक्षत्वाभिधायि श्रुत्यन्तरं दृश्यते; येनास्य "सङ्कल्पादेव" इत्यवधारणस्य २"विज्ञानघन एव" इतिवद्व्यवस्थापनं क्रियते ॥ ८ ॥

## अत एव चानन्याधिपतिः। ४। ४। ९ ॥

यतो मुक्तस्सत्यसङ्कल्पः; अत एवानन्याधिपतिश्च। अन्याधिपतित्वं हि विधिनिषेधयोग्यत्वम्। विधिनिषेधयोग्यत्वे हि प्रतिहतसङ्कल्पत्वं भवेत्। अतस्सत्यसङ्कल्पत्वश्रुत्यैवानन्याधिपतित्वं च सिद्धम्। अत एव ३"स स्वराड्भवति" इत्युच्यते ॥ ९ ॥

इति श्रीशारीरकमीमांसाभाष्ये सङ्कल्पाधिकरणम् ॥ ४ ॥

( श्रीशारीरकमीमांसाभाष्ये अभावाधिकरणम् ॥ ५ ॥ )

## अभावं बादरिराह ह्येवम्। ४। ४। १० ॥

किं मुक्तस्य देहेन्द्रियाणि न सन्ति, उत सन्ति, अथवा यथासङ्कल्पं सन्ति न सन्तिचेति विशये-शरीरेन्द्रियाणामभावं बादरिराचार्यो मन्यते; कुतः? आह ह्येवं—४ 'नह वै सशरीरस्य सतः प्रियाप्रिययो-

१. छा. ८-२-१ ॥—२. बृ. ४-४-१२ ॥—३. छा. ७-२५-२ ॥ ४. छा. ८-१२-१, २ ॥

रपहतिरस्ति। अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः" इति शरीरसम्बन्धे दुःखस्यावर्जनीयत्वमभिधाय [१]"अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति मुक्तस्याशरीरत्वं ह्याह श्रुतिः ॥ १० ॥

## भावं जैमिनिर्विकल्पामननात् । ४ । ४ । ११ ॥

मुक्तस्य शरीरेन्द्रियभावं जैमिनिराचार्यो मन्यते, कुतः ? विकल्पामननात्-विविधः कल्पो विकल्पः; वैविध्यमित्यर्थः, [२]"स एकधा भवति त्रिधा भवति, पञ्चधा सप्तधा" इत्यादिश्रुतेः। आत्मन एकस्यानेकधाभावासम्भवात् त्रिधाभावादयः शरीरनिबन्धना इत्यवगम्यते। अशरीरत्ववचनं तु कर्मनिमित्तशरीराभावपरम्; तदेव हि शरीरं प्रियाप्रियहेतुः ॥ ११ ॥

भगवांस्तु बादरायणः स्वमतेन सिद्धान्तमाह—

## द्वादशाहवदुभयविधं बादरायणोऽतः ।४।४।१२॥

'सङ्कल्पादेव' इत्येतदतश्शब्देन परामृश्यते; अत एव सङ्कल्पात्, उभयविधं सशरीरमशरीरं च मुक्तं भगवान् बादरायणो मन्यते; एवमुभयी श्रुतिरुपपद्यते; द्वादशाहवत्-यथा [३]"द्वादशाहमृद्धिकामा उपेयुः" [४]"द्वादशाहेन प्रजाकामं याजयेत्" इत्युपैतियजतिचोदनाभ्यां सङ्कल्पभेदेन सत्रमहीनं च भवति ॥ १२ ॥

यदा शरीराद्युपकरणवत्त्वम्; तदा तानि शरीराद्युपकरणानि स्वेनैव सृष्टानीति नास्ति नियम इत्याह—

## तन्वभावे सन्ध्यवदुपपत्तेः । ४ । ४ । १३ ॥

स्वेनैव सृष्टतनुप्रभृत्युपकरणाभावे परमपुरुषसृष्टैरुपकरणैर्भोगोपपत्तेः सत्यसङ्कल्पोऽपि स्वयं न सृजति। यथा स्वप्ने [५]"अथ रथान्

१. छा. ८-१२-१,२ ॥—२. छा. ७-२६-२ ॥—३ ॥—४ ॥—५, बृ. ६-३ १० ॥

रथयो गान् पथस्सृजते" इत्यारभ्य[१] "अथ वेशन्तान् पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्ता" इति [२] "य एषु सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते तस्मिन् लोकाश्श्रितास्सर्वे तदु नात्येति कश्चन" इति ईश्वरसृष्टैः रथाद्युपकरणैर्जीवो भुङ्क्ते; तथा मुक्तोऽपि लीलाप्रवृत्तेनेश्वरेण सृष्टैः पितृलोकादिभिर्लीलारसं भुङ्क्ते ॥१३॥

## भावे जाग्रद्वत् । ४ । ४ । १४ ॥

स्वसङ्कल्पादेव सृष्टतनुप्रभृतिपितृलोकाद्युपकरणभावे जाग्रत्पुरुषभोगवन्मुक्तोऽपि लीलारसं भुङ्क्ते; परमपुरुषोऽपि लीलार्थं दशरथवसुदेवादिपितृलोकादिकमात्मनः सृष्ट्वा तैर्मनुष्यधर्मलीलारसं यथा भुङ्क्ते; तथा मुक्तानामपि स्वलीलायै पितृलोकादिकं स्वयमेव सृजति कदाचित्; कदाचिच्च मुक्ताः सत्यसङ्कल्पत्वात् परमपुरुषलीलान्तर्गतस्वपितृलोकादिकं स्वयमेव सृजन्तीति सर्वमुपपन्नम् ॥ १४ ॥

नन्वात्माऽणुपरिमाण इत्युक्तम्; कथमनेकशरीरेष्वेकस्याणोरात्माभिमानसम्भव इत्यत्राह—

## प्रदीपवदावेशस्तथाहि दर्शयति । ४ । ४ । १५ ॥

यथा प्रदीपस्यैकस्यैकस्मिन्देशे वर्तमानस्य स्वप्रभया देशान्तरावेशः तथाऽऽत्मनोऽप्येकदेहस्थितस्यैव स्वप्रभारूपेण चैतन्येन सर्वशरीरावेशो नानुपपन्नः; यथा चैकस्मिन्नपि देहे हृदयाद्येकप्रदेशवर्तिनोऽपि चैतन्यव्याप्त्या सर्वस्मिन् देहे आत्माभिमानः, तद्वत् । इयान्विशेषः—अमुक्तस्य कर्मणा सङ्कुचितज्ञानस्य देहान्तरेषु आत्माभिमानानुगुणा व्याप्तिर्न सम्भवति; मुक्तस्य त्वसङ्कुचितज्ञानस्य यथासङ्कल्पमात्माभिमानानुगुणा व्याप्तिः 'इदम्' इति ग्रहणानुगुणा च नानुपपन्ना । तथाहि दर्शयति [३] "वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवस्स विज्ञेयस्स चानन्त्याय कल्पते" इति । अमुक्तस्य कर्म नियामकम्; मुक्तस्य तु स्वेच्छेति विशेषः ॥

१. बृ. ६-३-१० ॥—२. कठ. २-५-८ ॥—३. श्वे. ५-म. ९ ॥

ननु परं ब्रह्म प्राप्तस्यान्तरबाह्यज्ञानलोपं दर्शयति श्रुतिः १"प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किंचन वेद नान्तरम्" इति; तत्कथं मुक्तस्य सार्वज्ञ्यमुच्यते ? तत्रोत्तरं –

## स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि । ४ । ४ । १६ ॥

नेदं वचनं मुक्तविषयम; अपितु स्वाप्ययसम्पत्त्योरन्यतरापेक्षम्। स्वाप्ययः–सुपुप्तिः;सम्पत्तिश्च–मरणम्,२"वाङ्मनसि सम्पद्यते"इत्यारभ्य २"तेजः परस्यां देवतायाम्" इति वचनात् । तयोश्चावस्थयोः प्राज्ञप्राप्तिर्निस्सम्बोधत्वं च विद्येते । अतस्तयोरन्यतरापेक्षमिदं वचनम् । सुपुप्तिमरणयोर्निस्सम्बोधत्वं, मुक्तस्य च सर्वज्ञत्वमाविष्कृतं हि श्रुत्या ३"नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामि" इति सुपुप्तिवेलायां निस्सम्बोधत्वमुक्त्वा तस्मिन्नेव वाक्ये मुक्तमधिकृत्य ४"स वा एष दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके" इति सर्वज्ञत्वमुच्यते । तथा ५"सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति च स्पष्टमेव सर्वज्ञत्वमुच्यते । तथा मरणे च निस्सम्बोधत्वम् ६"एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानु विनश्यति" इत्युक्तम् । विनश्यति–नपश्यतीत्यर्थः । अतः ७"प्राज्ञेनाऽऽत्मना" इति वचनं स्वाप्ययसम्पत्त्योरन्यतरापेक्षम् ॥ १६ ॥

इति श्रीशारीरकमीमांसाभाष्ये अभावाधिकरणम् ॥ १० ॥



---

१. बृ. ६-३-२१ ॥— २. छा. ६-८-६ ॥— ३. छा. ८-११-२ ॥
४. छा. ८-१२-५ ॥— ५. छा. ७-२६-२ ॥— ६. बृ. ४-४-१२ ॥
७. बृ. ६-३-२१ ॥

—( श्रीशारीरकमीमांसाभाष्ये जगद्व्यापारवर्जाधिकरणम् ॥ )—

## जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च । ४ । ४ । १७ ॥

किं मुक्तस्यैश्वर्यं जगत्सृष्ट्यादि परमपुरुषासाधारणं सर्वेश्वरत्वमपि, उत तद्रहितं केवलपरमपुरुषानुभवविषयमिति संशयः। किं युक्तम्? जगदीश्वरत्वमपीति । कुतः? १"निरञ्जनः परमं साम्यमुपैति" इति परमपुरुषेण परमसाम्यापत्तिश्रुतेः, सत्यसङ्कल्पत्वश्रुतेश्च । नहि परमसाम्यसत्यसङ्कल्पत्वे सर्वेश्वरासाधारणजगन्नियमनेन विनोपपद्येते । अतस्सत्यसङ्कल्पत्वपरमसाम्योपपत्तये समस्तजगन्नियमनरूपमपि मुक्तस्यैश्वर्यमिति ॥

—( सिद्धान्तः )—

एवं प्राप्ते प्रचक्ष्महे--जगद्व्यापारवर्जम्-इति। जगद्व्यापारः-निखिलचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदनियमनम्। तद्वर्जं निरस्तनिखिलतिरोधानस्य निर्व्याजब्रह्मानुभवरूपं मुक्तस्यैश्वर्यम्। कुतः? प्रकरणात्-निखिलजगन्नियमनं हि परं ब्रह्म प्रकृत्याऽऽम्नायते २"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" इति। यद्येतन्निखिलजगन्नियमनं मुक्तानामपि साधारणं स्यात्, ततश्चेदं जगदीश्वरत्वरूपं ब्रह्मलक्षणं न सङ्गच्छते; असाधारणस्य हि लक्षणत्वम्। तथा ३"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" ४"ब्रह्म वा इदमेकमेवाग्र आसीत् तदेकं सन्न व्यभवत् तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवक्षत्राणि इन्द्रो वरुणस्सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति"

---

१. मु. ३-१-३ ॥--२. तै. भृगु. १-अनु ॥--३. छा. ६-२-१ ॥
४. बृ. ३-४-११ ॥

१"आत्मा वा इदमेकएवाग्र आसीत् नान्यत्किंचन मिषत् स ईक्षत लोकान्नु सृजा इति स इमान् लोकानसृजत" २"एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो न सूर्यः स एकाकी न रमेत तस्य ध्यानान्तस्थस्यैका कन्या दशेन्द्रियाणि" इत्यादिषु । ३"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः" इत्यारभ्य ४ "य आत्मनि तिष्ठन्" इत्यादिषु च निखिलजगन्नियमनं परमपुरुषं प्रकृत्यैव श्रूयते । असन्निहितत्वाच्च-नचैतेषु निखिलजगन्नियमनप्रसङ्गेषु मुक्तस्य सन्निधानमस्ति; येन जगद्व्यापारस्तस्यापि स्यात् ॥

## प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः । ४ । ४ । १८ ॥

५ "स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति" ६"इमान् लोकान् कामान्नी कामरूप्यनुसंचरन्" इति प्रत्यक्षेण-श्रुत्या मुक्तस्य जगद्व्यापार उपदिश्यते; अतो न जगद्व्यापारवर्जमिति चेत्–तन्न, आधिकारिकमण्डलस्थोक्तेः; आधिकारिकाः-अधिकारेषु नियुक्ता हिरण्यगर्भादयः; मण्डलानि तेषां लोकाः; तत्स्थाः-भोगाः मुक्तस्याकर्मवश्यस्य भवन्तीत्ययमर्थः ५ "तस्य सर्वेषु लोकेषु कामचारो भवति" इत्यादिनोच्यते । अकर्मप्रतिहतज्ञानो मुक्तो विकारलोकान् ब्रह्मविभूतिभूताननुभूय यथाकामं तृप्यतीत्यर्थः । तदेवं विकारान्तर्वर्तिनः आधिकारिकमण्डलस्थान् सर्वान् भोगान् ब्रह्मविभूतिभूताननुभवतीत्यनेन वाक्येनोच्यते; न जगद्व्यापारः ॥ १८ ॥

यदि संसारिवन्मुक्तोऽपि विकारान्तर्वर्तिनो भोगान् भुङ्क्ते, तर्हि बद्धस्येव मुक्तस्याप्यन्तवदेव भोग्यजातमल्पं च स्यात् ; तत्राह–

१. ऐत. १–१ ॥–२. महो. १–अ १ ॥–३. बृ. ५–७–३ ॥–४. शतपथ. १४–५–३० ॥–५. छा. ७–२५–२ ॥–६. तै. भृगु. १०–५ ॥

## विकारावर्ति च तथाहि स्थितिमाह । ४ । ४ । १९॥

विकारे—जन्मादिके न वर्तत इति विकारावर्ति; निर्धूतनिखिलविकारं निखिलहेयप्रत्यनीककल्याणैकतानं, निरतिशयानन्दं, परं ब्रह्म सविभूतिकं,स कलकल्याणगुणमनुभवति मुक्तः। तद्विभूत्यन्तर्गतत्वेन विकारवर्तिनां लोकनामपि मुक्तभोग्यत्वम्। तथाहि परस्मिन् ब्रह्मणि निर्विकारेऽनवधिकातिशयानन्दे मुक्तस्यानुभवितृत्वेन स्थितिमाह श्रुतिः—१"यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति" १ "रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्यादिका। तद्विभूतिभूतं च जगत्तत्रैव वर्तते २"तस्मिन् लोकाश्रिताः सर्वे तदु नात्येति कश्चन" इति श्रुतेः। अतस्सविभूतिकं ब्रह्मानुभवन्विकारान्तर्वर्तिनः आधिकारिकमण्डलस्थानपि भोगान् भुङ्क्त इति ३"सर्वेषु लोकेषु कामचारः" इत्यादिनोच्यते; न मुक्तस्य जगद्व्यापारः ॥ १६ ॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने । ४ । ४ । २० ॥

अस्य प्रत्यगात्मनो मुक्तस्य नियाम्यभूतस्य नियन्तृभूतपरमपुरुषासाधारणं जगद्व्यापाररूपं नियमनं न सम्भवतीत्युक्तम्; निखिलजगन्नियमनरूपो व्यापारः परमपुरुषासाधारण इति दर्शयतः श्रुतिस्मृती-४ " भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः " इति ५"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादि; तथा ६"एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय" इति

१. तै. आन. ७-२, १ ॥ २. कठ. २-१-८ ॥ ३. छा. ७-२५-२ ॥
४. तै. आन. ८-१ ॥ ५. बृ. ५-८-९ ॥ ६. बृ. ६-४-२२ ॥

च श्रुतिः । स्मृतिरपि १"मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम् । हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते" इति, २"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति च । तथा मुक्तस्य सत्यसङ्कल्पत्वादिपूर्वकस्याप्यानन्दस्य परमपुरुष एव हेतुरिति श्रुतिस्मृती दर्शयतः ३"एष ह्येवानन्दयाति" ४"मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते । ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च । शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्यच" इति । यद्यप्यपहतपाप्मत्वादिस्सत्यसङ्कल्पत्वपर्यन्तो गुणगणः प्रत्यगात्मनः स्वाभाविक एवाविर्भूतः, तथाऽपि तस्य तथाविधत्वमेव परमपुरुषायत्तम् ;तस्य नित्यास्थितिश्च तदायत्ता; परमपुरुषस्यैतन्नित्यतायाः नित्येष्टत्वान्नित्यतया वर्तत इति न कश्चिद्विरोधः । एवमेव परमपुरुषभोगोपकरणस्य लीलोपकरणस्य च नित्यतया शास्त्रायगतस्य परमपुरुषस्य नित्येष्टत्वादेव तथाऽवस्थानमस्तीति शास्त्रादवगम्यते । अतो मुक्तस्य सत्यसङ्कल्पत्वं परमपुरुषसाम्यं च जगद्व्यापारवर्जम् ॥ २० ॥

## भोगमात्रसाम्यलिङ्गाच्च । ४ । ४ । २१ ॥

ब्रह्मयाथात्म्यानुभवरूपभोगमात्रे मुक्तस्य ब्रह्मसाम्यप्रतिपादनाच्च लिङ्गाज्जगद्व्यापारवर्जमित्यवगम्यते ५"सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति । अतो मुक्तस्य परमपुरुषसाम्यं सत्यसङ्कल्पत्वं च परमपुरुषासाधारणनिखिलजगन्नियमनश्रुत्यानुगुण्येन वर्णनीयमिति जगद्व्यापारवर्जमेव मुक्तैश्वर्यम् ॥ २१ ॥

---

१. गी. ९-१० ॥—२. गी. १०-४२ ॥—३. तै. आन. ७-२१ ॥ ४. गी. १४-२६, २७ ।—५. तै. आन. १-२ ॥

यदि परमपुरुषायत्तं मुक्तैश्वर्यम्, तर्हि तस्य स्वतन्त्रत्वेन तत्सङ्कल्पान्मुक्तस्य पुनरावृत्ति १ सम्भवाशंकेत्यत्राह—

## अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ।४।४।२२॥

यथा निखिलहेयप्रत्यनीककल्याणैकतानो जगज्जन्मादिकारणं समस्तवस्तुविलक्षणस्सर्वज्ञस्सत्यसङ्कल्पः आश्रितवात्सल्यैकजलधिः परमकारुणिको निरस्तसमाभ्यधिकसम्भावनः परब्रह्माभिधानः परमपुरुषोऽस्तीति शब्दादवगम्यते; एवमहरहरनुष्ठीयमानवर्णाश्रमधर्मानुगृहीततदुपासनरूपतत्समाराधनप्रीतः उपासीनाननादिकालप्रवृत्तानन्तदुस्तरकर्मसञ्चयरूपाविद्यां विनिवर्त्य स्वयाथात्म्यानुभवरूपानवधिकातिशयानन्दं प्रापय्य पुनर्नावर्तयतीत्यपि शब्दादेवावगम्यते । शब्दश्च २"स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते न च पुनरावर्तते" इत्यादिकः । तथा च भगवता स्वयमेवोक्तं ३"मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानस्संसिद्धिं परमां गताः । आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति । नचोच्छिन्नकर्मबन्धस्यासङ्कुचितज्ञानस्य परब्रह्मानुभवैकस्वभावस्य तदेकप्रियस्यानवधिकातिशयानन्दं ब्रह्मानुभवतोऽन्यापेक्षातदर्थारम्भाद्यसम्भवात्पुनरावृत्तिशङ्का । न च परमपुरुषस्सत्यसङ्कल्पोऽत्यर्थप्रियं ज्ञानिनं लब्ध्वा कदाचिदावर्तयिष्यति, य एवमाह— ४"प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । उदारास्सर्व एवैते ज्ञानीत्वात्मैव मे मतम् ॥ आस्थितस्सहि युक्तात्मा मामेवानुत्तमां गतिम् । बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ॥ वासुदेवस्सर्वमिति स महा-

१. सम्भावनाशंके पा ॥—२. छा. ८-१५-१ ॥—३. गी. ८-१५,१६ ॥

४. गी ७-१७,१८,१९ ॥

त्मा सुदुर्लभः” इति । सूत्राभ्यासश्शास्त्रपरिसमाप्तिं द्योतयति । इति सर्वं समञ्जसम् ॥ २२ ॥

इति श्रीशारीरकमीमांसाभाष्ये जगद्व्यापारवर्जाधिकरणम् ॥६॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥
समाप्तश्चाध्यायः ॥ ४ ॥
शास्त्रं च परिसमाप्तम् ॥

अविस्तृतास्सुगम्भीरा रामानुजमुतेर्गिरः ।
दर्शयन्तु प्रसादेन स्वं भावमखिलं दृढम् ॥

श्रीमते रामानुजाय नमः

| | |
|---|---|
| शास्त्रेऽस्मिन् सूत्रसंख्या— | ५४५ |
| अधिकरण संख्या— | १५६ |

* श्रीमते रामानुजाय नमः *

# अधिकरणसारावली.

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

---

स्वस्ति श्रीरङ्गभर्तुः किमपि दधदहं शासनन्तत्प्रसत्त्यै
सत्यैकालम्बि भाष्यं यतिपतिकथितं शश्वदभ्यास्य युक्तान् ।
विश्वस्मिन्नामरूपाण्यनुविहितवता तेन देवेन दत्तां
वेदान्ताचार्यसंज्ञामवहितबहुविस्तार्थमन्वर्थयामि ॥१॥

श्रीमद्भ्यां स्याद्सावित्यनुपधि वरदाचार्यरामानुजाभ्यां
सम्यग्दृष्टेन सर्वंसहनिशितधिया वेङ्कटेशेन क्लृप्तः ।
सेव्योऽसौ शान्तचित्तैः श्रवणरसनया शान्तिलाभार्थिभिर्वा
सिद्धिश्शारीरकार्थे सहजबहुगुणः स्रग्धरादुग्धराशिः ॥२॥

त्रय्यन्तस्वान्त१वादिन्यधिकरणगणे पौनरुक्त्योक्तबाधौ
मन्दत्वासङ्गतत्वे विशयमफलतां मानबाधं च मन्तून् ।
दिङ्मोहव्यामदीनान् दिनकरकिरणश्रेणिकेवोज्जिहाना
हृद्या पद्यावलीयं हृदयमधिगता सावधानान्धिनोतु ॥३॥

गम्भीरे ब्रह्मभागे गणयितुमखिलं कः प्रवीणः प्रमेयं !
दिङ्मात्रं दर्शयन्नप्यहमिह निपुणैः प्राध्यमध्यन्नणीयः ।
मा भून्निश्शेषसिद्धिस्तदपि गुणविदः स्फीतनिस्सीमरत्ने
मध्येहारं निधेयम्महति जहति किम्मौक्तिकं लब्धमब्धौ ? ४

---

१. वेदिन्य इति पा.

वेदार्थन्यायचिन्त्ये प्रथममधिगतः कर्मवर्गः प्रमाणैः
भेदैरङ्गैः प्रयुक्त्या क्रमविरचनयाऽथाधिकृत्याऽतिदिष्ट्या ।
तत्राशेषैर्विशेषैस्तदनु तदनुवर्त्यूहतः प्राप्तबाधैः
तन्त्रेणाथ प्रसक्त्या तत उपरि चतुर्लक्षणी देवतार्था ॥ ५

प्राग्धर्मेऽल्पास्थिरार्थे प्रशमितविशये तादृशाराध्ययुक्तेऽ-
थातश्शारीरकांशे बहुविधमहिम ब्रह्म मीमांसितव्यम् ।
कृत्स्नस्वाध्यायसाङ्गाध्ययनसमुदितापातबुध्यैव कर्म
त्यक्त्वाऽऽद्यौ ब्रह्मचिन्तां किमिति न कुरुतान्तत्र तुल्योक्त्यबाधात्

प्राबल्यं प्राक्त्रिवर्गे सफलयतनतोपासनाङ्गत्वतोऽपि
व्याख्यारूपेऽत्र शास्त्रे क्रमनियतिरसौ स्याच्च मुख्यक्रमेण ।
मानत्वादिर्विचार्यः पुरत इह तथा वाक्यवेद्यात्पदार्थो
दृष्टान्तश्चोपमेयाद्यदि मधु सविधे यातु चाद्रिं किमर्थः ॥ ७

व्याचख्युः केऽपि तापत्रयहतिमितरे साधनानां चतुष्कं
काण्डेऽस्मिन् पूर्ववृत्तं कथयति निगमः कर्मचिन्ताफलन्तत् ।
साङ्गाधीतिर्हि सूते विषयमवसरः क्वात्र तन्त्रान्तरादे-
रौचित्यस्थापितोऽयं क्रम इह न पुनश्चोदनासंप्रयुक्तः ॥ ८

नित्यप्राप्तस्य कण्ठस्थितकनकनयान्निर्विशेषस्य लब्धि-
र्मिथ्याभूतं निवर्त्यं श्रुतिशकलभुवः प्रेक्षणात्तन्निवृत्तिः
कर्मैवक्वोपयुक्तं प्रतिभटमपि तद्वृत्तोक्तिर्मदुक्ते
प्राप्ताद्येति प्रलापे प्रनिवचनगतिर्भाषिता विस्तरेण ॥ ९

मीमांसायाः कबन्धं कतिचन जगृहू राहुकल्पं शिरोऽन्ये
किन्तैरन्तर्विरोधप्रमुषितमतिभिर्बाह्यकल्पैर्भ्रमद्भिः ।
स्वाध्यायाध्यायकार्त्स्न्यं स्वविधिपरविधिप्रेरणा तावदास्तां
कृत्स्नापातप्रतीतौ किमिति कृतधियः कृत्स्नचिन्तां न कुर्युः ॥१०

प्राधीतस्यैकरूपप्रयतननियतादेकरूपोपकारा-
द्विद्यास्थानैक्यसिद्धौ क्रमनियतियुताकाङ्क्षयैकप्रबन्धम् ।
अध्यायादिष्विवावान्तरविषयफलाद्यन्यताऽत्राप्यभेत्त्री
तत्तुल्यः कर्तृभेदः कलिमलकलुषैः कल्पितोऽर्थे विरोधः ॥ ११

तत्तद्वैशिष्ट्यभेदाद्यदगणि भिदुरा देवता पूर्वभागे
संज्ञावैषम्यामाम्नाद्दपि कथमियताऽधीतयज्ञैक्यभङ्गः? ।
उद्देश्याकारभेदोऽस्त्ययमिह हविषामुक्तिभिन्ने प्रयोगे
दौर्बल्यं त्वत्तवेद्यान्मितिचरमतया द्रव्यतो देवतायाः ॥ १२

जैमिन्युक्तं विरुद्धं यदिह बहुविधन्दर्शितं सूत्रकारै-
स्तस्मादन्वैकशास्त्र्यं हठकृतमिति न ब्रह्मसंवादद्दायदर्यात् ।
तत्रस्तात्पर्यभेदैर्विहतिपरिहृतिः काण्डयत्काण्डयोस्स्यात्
बाह्यत्वेपार्थगूढाशयवचनभयभ्रान्तिशान्त्यादिसिद्धेः ॥ १३

आक्षिप्य स्थापनीयाः कतिचिदिह नयाः पूर्वकाण्डप्रणीताः
केचिद्व्युत्पादिनीयाः क्वचिदपवदनं व्याप्यमौत्सर्गिकस्य ।
इत्थं सर्वत्र चिन्ताक्रम इति समतां वीक्ष्य मध्यस्थदृष्ट्या
शास्त्रैक्ये पौनरुक्त्यप्रभृतिपरिहृतिस्सावधानैर्विभाव्या ॥ १४

वृत्तिग्रन्थे तु जैमिन्युपरचिततया षोडशाध्य्युपात्ता
सङ्कर्षः काशकृत्स्नप्रभव इति कथं तत्त्वरत्नाकरोक्तिः ।
अत्र भ्रमस्तदुक्तो न वयमिह मुधा बाधितुं किञ्चिदर्हा
निर्वाहस्तूपचारात् क्वचिदिह घटते ह्येकतात्पर्ययोगः ॥ १५

सौत्री सङ्ख्या [1]शुभश्रीरधिकृतिगणना [2]चिन्मयी ब्रह्मकाण्डे
तादर्थ्येऽनन्तरत्वेऽप्यधिकरणभिदा नाल्पसारैः प्रकल्प्या ।

१. शुभश्रीः-४५२. । २. चिन्मयी-१५६

१अक्षोर्म्याशाऽहिकाष्ठाद्विरदमुनियसूर्म्यद्रितत्त्वातिशकर्य-
स्तैरक्षैः प्रयाजैरिह भवति रसैः पादनीतिप्रबन्धः ॥
शास्त्रं त्वेतत्समन्वित्यविहतिकरणप्राप्तिचिन्ताप्रधानं-
रध्यायैष्षोडशाङ्घ्रिद्वियुगभिदुरं षट्कभेदादिनीत्या ।
तत्राद्यं वक्ति सिद्धं विषयमपि परन्तत्प्रतिद्वन्द्वियुग्मं
स्वप्राप्तेस्साधनं च स्वयमिति हि परं ब्रह्म तत्रापि चिन्त्यम्॥१७
तत्राद्येऽत्यन्तगूढाविशदविशदसुस्पष्टजीवादिवाचः
पश्चात्स्मृत्यादिकैरक्षतिरहितहतिः कर्यताश्चेन्द्रियादेः ॥
दोषादोषौ तृतीये भवभृदितरयोर्भक्तिरङ्गानि चाथो-
पासारोहप्रभावोत्क्रमसरणिफलान्यन्तिमे चिन्तितानि ॥ १८
स्रष्टा देही स्वनिष्ठो निरवधिमहिमापास्तबाधश्रितास्स्वः
स्वात्मादेरिन्द्रियादेरुचितजननकृत्संसृतौ तन्त्रवाही ।
निर्दोषत्वादिरम्यो बहुभजनपदं स्वार्हकर्मप्रसाद्यः
पापच्छिद्ब्रह्मनाडीगतिकृदतिवहन् साम्यदश्चात्र वेद्यः ॥ १६
विध्युक्त्याऽधीत्य वेदान्विधिवलविरताश्च्यजादेव रागान्
कृत्स्नं मीमांसमानाः क्रमत इति परब्रह्मचिन्तान्तरन्ति ।
प्राप्ते तुर्ये युगेऽस्मिन् परिमितवलधीप्राणतद्विघ्नदृष्टया
कालक्षेपाक्षमत्वात् कतिचन कृतिनश्शीघ्रमन्ते रमन्ते ॥ २०
रागान्मीमांसते चेत् स्वयमिह यततां किं गुरूक्त्येतिचेन्न
ब्रह्मज्ञानाप्तये गुर्वभिगमनविधेस्तेन तत्त्वोपदेशान् ।
सद्विद्याचार्यवत्त्वे प्रथयति च परब्रह्मविच्चिन्तथान्या-
च्याचार्याद्वित्यधीते नियमविधिरसौ निश्चितो नीतिविद्भिः ॥२१

१. अक्ष-११, ऊर्मि-६, आशा -१०, । वसु-८ ऊर्मि-६, अद्रि-८, तत्त्व-२६, अहि-८, काष्ठ-१०, द्विरद-८, मुनि-७, । अतिशकरी-१५, अक्षैः-११, अक्षैः । ११, प्रयाजैः-५, रसैः-६.

सिद्धे व्युत्पत्तिराद्या न भवति न च धीर्लक्षणाद्युज्यतेऽस्मिन्
किं शास्त्रेणान्यसिद्धे न च निशमयितुस्सिद्धबोधे फलं स्यात् ।
ब्रह्मण्येवच मानान्युपनिषद इति स्तम्भिते तद्विचारे
शास्त्रारम्भं चतुस्सूत्र्यघटयदुचितैर्न्यायभेदैश्चतुर्भिः ॥ २२

सिद्धे व्युत्पत्त्यभावे स्वरिव फलतया लक्ष्मभङ्गे च लभ्यं
ब्रह्मान्योक्त्यानुमानप्रमितमपि भवत्यंशतश्शास्त्रयेयम् ।
विध्यर्थत्वेऽप्यबाधात्परविषयवचस्स्वार्थमानं भवेदि-
त्यन्यारुह्योक्तिर्दैन्यच हि सहत ऋजुस्सूत्रकृद्बादरूक: ॥ २३

द्वाभ्यामादौ प्रतीतिप्रजननमुदितं सिद्धरूपे परस्मिन्
द्वाभ्यां वैफल्यशङ्का तदनु परिहृता शास्त्रतज्जन्यबुद्ध्योः ।
औचित्यानेकभाष्यस्वरसगतिमती प्राक्तनी वर्तनीयं
शास्त्रारम्भार्थमेकं त्रितयमपि परं शास्त्रमित्याहुरेके ॥ २४

यत्तत्सेनेश्वरार्यैरगणि बकुलभृत्किङ्करैरङ्ग्ययकारि
व्यासार्यैर्न्यासि च द्विश्श्रुतमिति विशदं विष्णुचित्तैर्विचक्रे ।
अर्थौपं शेषकल्पादहमपि विदुषो वादिहंसाम्बुवाहात्
अद्धा निर्धार्यतेऽतश्चतुरधिकरणी ब्रह्मचिन्तोपयुक्ता ॥ २५

व्युत्क्रम्याद्याच्चतुर्थावभिदधति नयौ केचिदप्राप्तमेतत्
बोधासिद्धौ कथं तत्फलमिह विमृशेत् सिद्धवत्कारमान्द्यात् ।
मध्यौ द्वौ रूपनामप्रजननविषयौ यद्विदुस्तच मन्दं
सत्युक्तेऽपेक्षितेऽर्थे विफलविभजनं नोचितं नीतिसूत्रे ॥ २६

इति शास्त्रावतारः ॥

—( अथ जिज्ञासाधिकरणम् )—

कार्ये व्युत्पत्तिराद्या नियतमिति गिरस्तत्परा एव सर्वा
नान्या वेदेऽपि नीतिस्तत उपनिषदामूपरप्रायतैव ।
नातस्तद्वेद्यमीमांसनमुचितमिति प्रत्यवस्थीयमाने
सिद्धे व्युत्पत्तिमाद्यां बहुमुखमवयन् ब्रह्म जिज्ञास्यमाह ॥ २७

अङ्गुल्या निर्दिशन्तः किमपिकिमपि तद्वाचकांशैः प्रयुक्तैः
बालान् व्युत्पादयन्ति क्रमभवमिलितज्ञापकत्वं विदन्तः ।
सङ्घातास्ते पदानां विदधति च धियं क्वापि सिद्धे विशिष्टे
कर्तव्ये क्वापि चेति क्वचिदिह नियतिश्शब्दशक्तेर्न कल्प्या ॥ २८

संसारेऽनादिसिद्धे मुहुरनुभवतस्सञ्चितास्संस्क्रियास्स्यु-
स्संस्कारोद्बोधकाश्च स्वयमुपनिपतन्त्यप्रकम्प्यात्प्रवाहात् ।
तत्तज्जातीयभेदग्रहणसमुचिता वृत्तयस्तन्निदानाः
तद्वत्स्याच्छिन्नकादिव्यवहृतिषु शिशोरैदमर्थ्याद्विबोधः ॥ २९

दक्षैराधोरणाद्यैरनुमितविविधस्वप्रयासोपयोगैः
शिक्षाभेदा विचित्रा गजविहगमुखान् ग्राहयद्भिः प्रयुक्ताः ।
तस्मात्स्वार्थो मनुष्यप्रभृतिषु च तथाभूतशिक्षाविशेषः
कल्पो भाष्योदितो यत्र यदि कथमसौ कल्पतेऽन्योऽपि मार्गः ॥

कस्मैचित्सिद्धमर्थं कमपि कथयितुं चेष्टया चोद्यमानः
तस्मै तं वक्ति तद्धीसमधिपयतया शिक्षते तद्वचोऽन्यः ।
आदिष्टो बोधनार्थं यदहि वितनुते तत्तदर्थं हि युक्तं
तद्वाक्यात्सिद्धवेदी प्रयततद्रति चेद्वस्त्वनादेशिकन्तत् ॥ ३१

पुत्रस्तेऽभून्न सर्पोऽयमिति वचनतः प्रीत्यभीत्यादिलिङ्गैः
तद्बोध्यार्थस्तद्रूपं विषयनियतिरासक्तिपूर्वैः क्वचित्स्यात् ।

आचार्योद्वापभेदात् प्रतिपदनियता शक्तिरप्यत्र सिद्धेयत्
भूयोदृष्ट्यादिसाह्याय्यकमिह वचसः कार्यपक्षाविशिष्टम् ॥३ ॥
कार्ये व्युत्पत्तिराद्या भवतु तदपि किं शक्तितात्पर्यसिद्धेः
प्राग्व्युत्पत्तिः क्रियायां नृवचसि निगमे त्वन्यथेत्यभ्युपेयि ।
स्थाप्याऽतोनन्यथासिद्धयनुगमनियतैस्सत्प्रयोगैर्हि शक्तिः
कोऽसौ पाञ्चालइत्याद्युचितविरतिकं सिद्धमात्रेऽपि वाक्यम् ३३
दुःखासंभिन्नदेशप्रभृतिफलतया चोदनास्वेव सिद्धं
श्रौतत्वादार्थवादिष्वपि भवति फलं रात्रिसत्रे प्रतिष्ठा ।
अङ्गीकुर्मो निषेधानुगुणमिति तथाऽनर्थकृत्त्वं निषेद्धये
सिद्धयर्थैरप्यतस्स्यादवितथविषया ब्रह्मधीरर्थवादैः ॥३४॥

इति जिज्ञासाधिकरणम् ॥ १ ॥

---

—( अथ जन्माद्यधिकरणम् )—

जन्माद्यैश्चेद्विशेष्यं भवति बहुलताथोपलक्ष्यं ब्रवीषि
ज्ञाताज्ञातादिदौःस्थ्यं व्यतिपजति न चालक्षिते स्यात्परीक्षा ।
उद्दिष्टब्रह्मचिन्ता तत इह कथमित्यत्र हेतुस्त्वलक्ष्यः
पुंसूक्तादिप्रसिद्धो गुणनिधिरघजिद्ब्रह्मशब्दार्थ उक्तः ॥३५॥
नाना चेल्लक्षणानि स्वरसभिदुरता ब्रह्मणि स्याद्विशेष्ये
खण्डो मुण्डश्च गौरित्यभिलपनसमा धर्मिशब्दैक्यताऽत्र ।
तेष्वेकं चेद्यथाऽन्यत्समुदितमफलं स्याद्व्यवच्छेद्यहानेः
खण्डत्वादिक्रमाच्चेत्यसदविहतितः खण्डतादेर्विशेषात् ॥३६॥
तत्तत्स्वप्रत्यनीकव्युदसननियतं भेदकं नान्यबाधि
व्याघातः कालभेदाच्च भवति जननस्थापनध्वंसनानाम् ।

प्रत्येकं लक्षणत्वं सुवचमिह बहूदाहृतिर्धीमहिम्ने
संभूयाप्याहुरेके फलमपि च तदाशङ्कितार्थव्युदासः ॥३७॥

ज्ञातं चेन्नोपलक्ष्यञ्च यदि नतरां लक्ष्मयोगाप्रतीतेः
ज्ञाताज्ञातांश भेदस्त्विह दुरभिलपो लक्षणेनैव वेद्ये ।
ब्रह्मत्वं ब्रह्मशब्दान्वितिरपि विदितेऽन्यत्र नोचेन्न शङ्का
मैवन्नानागमोद्यद्विशयप्रशमनतः श्रीमति ब्रह्मतोक्ते ॥३८॥

याचल्लक्ष्याचबोधं यदवगतिरतो लक्षणात्तद्विशेष्यं
यस्याबोधेऽपि पश्चाद्यदवगतिरिदं स्यात्कुतो नोपलक्ष्यम् ।
तस्माद्द्वेधापि भाष्येऽनुमतिरनुचितेत्याशयाद्यस्य चोक्तं
मोक्षार्थोपास्यभेदे द्युभयमपि समन्त्रेति विद्याविकल्पात् ॥३९॥

चन्द्रे शाखेव शान्ते महसि तटगतं लक्षणं कारणत्वं
सत्यज्ञानादिवाक्यैरपमृदितगुणन्तद्विभातीति डिम्भाः ।
एकत्रार्थो विशेष्ये प्रतिपदनियतावर्ज्यतत्तन्निमित्त-
द्वारावृत्ति पदानामिह विदुररुणायुक्तिवन्न्यायवृद्धाः ॥

इति जन्माद्यधिकरणम् ॥ २ ॥



—( अथ शास्त्रयोन्यधिकरणम् )—

वीतावीतप्रयोग क्रमनियतिमती कार्यता विश्वमेतत्
सर्वज्ञेन प्रक्लृप्तं गमयति विफलस्त्वत्र शास्त्रैर्विचारः ।
इत्युन्नीतो लघुत्वादनुमितिवशतः कर्मजैश्वर्ययुक्तो
विश्वाभिन्नादिनीत्या स्फुरति विभुमिहासूत्रयच्छास्त्रवेद्यम् ४१

क्षित्याद्यं कार्यताद्यैः कटकमकुटवत् कर्तृपूर्वं स कर्ता
सिद्ध्येदत्राण्वदृष्टप्रभृतिजनकदृक् सर्वशक्तिश्च मैवम् ।

श्रोत्राद्यैस्सौरभादिग्रहणरुचिरियन्तादृशव्याप्त्यभावात्
सर्वं हेतुश्च पश्येत् घटकृदिह न चाकर्तृता तावताऽस्य ॥ ४२
कार्यत्वात् स्याद्विवादास्पदमिदमखिलं सर्ववित्कर्तृपूर्वं
यन्नैवन्तद्धि नैवं पुरुषवदिति नानन्यथासिद्ध्यभावात् ।
हेतावेतादृशात्मन्यविदुरभिदुरं व्याप्तिसिद्ध्यादिदौःस्थ्य-
न्तद्भङ्गे लक्षणानामगणि गमनिका तत्त्वमुक्ताकलापे ॥ ४३

यद्यप्यात्मान्तरादेरनुमितिरनघा लिङ्गभेदैस्तथाऽपि
प्रत्यक्षव्याप्तिशैली न खलु शिथिलिता कुत्रचित्पक्षभेदे ।
आम्नाये त्वद्भुतोक्तिर्न भवति वितथा तादृशाप्तोक्तनीत्या
बाधाभावादिसाम्याद्विहतिमति भवेल्लौकिकवत् गौणतादिः ॥ ४४

नन्वाम्नायप्रधानाः क्वचिदनुकथयन्त्यस्मदादेरशक्यः
कार्यैः कर्ताऽनुमेयः पर इति तदभिप्रैतु जन्मादिवाक्यम् ।
तस्मादीशानुमानत्यजनमनुचितं वैदिकस्येति चेन्न
काप्यौचित्योपदेशाद्यत इति च सदायुक्तिसिद्धानुवादात् ॥ ४५

इति शास्त्रयोन्यधिकरणम् ॥ ४ ॥

---

—( अथ समन्वयाधिकरणम् ॥ ४ ॥ )—

कर्तव्ये ह्यर्थ उक्ते निशमयितृफलं सिद्धरूपे तु न स्यात्
प्रीत्या साफल्यक्लृप्तौ वितथमपि वचः किञ्च दृष्टन्तदर्थम् ।
विद्यार्थत्वेऽन्यदृष्टेर्विषयवदनृतं तत्र परीक्ष्यन्न भावी-
त्याक्षेपेऽनन्यशेषे निरवधिकसुखे शास्त्रतात्पर्यमाह ॥ ४६ ॥

तात्पर्यं ब्रह्मतत्त्वेऽप्यनिहतविधिनाऽप्येकवाक्यत्वपक्षे
भेदेऽपि स्यादसिद्धेर्न भवति बलिभुग्दन्तसङ्ख्योक्तिसाम्यम् ।
स्वादार्थत्वं भूपात्यक्तमभिति न मृषेत्यूहने प्रीत्ययोगा-
द्वालोपच्छन्दनादिष्वपि विषयतथाभावबुद्ध्यैव हर्षः ॥ ४७

यत्प्रीत्यर्थं वचस्तन्निखिलमनृतमित्यर्भकप्राप्यवाक्यं
सत्योक्त्यानन्ददृष्टेर्न च विहतिरिहाद्धयत्ततश्शास्त्रतो वा ।
तेनानन्यार्थसिद्धोक्त्यनृतविषयताशङ्कनस्तम्भनेन
त्रय्यन्तास्सत्यनित्याद्भुतपरमपरब्रह्मनिष्ठाः प्रमाणम् ॥४८॥

त्रय्यंके निष्प्रपञ्चीकरणविधिपदं ध्यानविध्यर्थमन्ये
निर्धर्माद्वैतवाक्योपचरितमितरे सिध्यतीति ब्रुवन्ति ।
तेषामेषां स्वपक्षस्ववचनविहतिव्याकुलानेकजल्पाः
कल्पोऽयं बाह्यकल्पः कृतमतिपरिषत्पीठमर्दैरमर्दि ॥४९॥

कन्यार्था ह्यर्थवादस्तुतिमुखमुखतः स्थापितः प्रागिदानीं
स्वातन्त्र्येण प्रमाणी क्रियत इति ततः काण्डयोस्स्याद्विरोधः ।
न स्यात्सामान्यतो हि प्रथममभिदधे मानतास्थापनार्थं
केषांचित्स्वार्थतोक्ता स्वत इहसुभगे बोधमात्रात्पुमर्थे ॥५०॥

त्रेधा सर्वत्र वेदे नियतविभजने चोदनाद्यंशभेदै-
श्चत्वारोऽप्यर्थवादा मुनिभिरभिहिता ब्राह्मणांशस्य शेषाः ।
अत्रातच्छेषतोक्तौ स्मृतिहतिरिति चेद्विद्धि दत्तोत्तरन्तत्
सामान्योक्तिर्हि सेयं तत उपरि यथामन्त्रविध्यन्यतोक्तिः ॥५१॥

आम्नातैरैहिकार्थैरविगुणसफलैश्शाकुनज्यौतिषाद्यैः
पारत्रिक्या प्रवृत्त्याऽप्यतिनिपुणधियामागमाश्वाससिद्धौ ।
शब्दे तस्माच्च बोधे सति परविषये दोषबाधव्यपेते
मानं तत्र स्वतोऽसौ न कथमितरथा नैगमाध्वापलापः ॥५२॥

शास्त्रारम्भोपपत्त्यै चतुरधिकरणीपेटिकेयं प्रवृत्ता
लक्ष्यस्योक्तं विशेषद्वयमिह घटते वक्ष्यमाणोपजीवि ।
सद्ब्रह्मानुक्तिर्वेद्यः पर इति हि वदेन्कारणत्वाधिकारे
वक्ष्यत्यस्य ह्यलिङ्गाद्यधिकृतिषु पुनस्तादृशानन्दतादीन् ॥५३॥

आत्मन्येवं परस्मिंश्च कृत इति मिते विश्वहेतुत्वलक्ष्ये
शास्त्रैकस्थापनीये निरुपधिपरमप्रेमयोग्ये प्रसक्ते ।
ईदृक्त्वं स्याद्यथार्हं प्रकृतिपुरुषयोर्नानुमानाद्ययोग्यौ
दुःखास्पृष्टौ च तावित्यथ परकथनं दोषचोदि क्रमेण ॥५४॥

इति समन्वयाधिकरणम् ॥४॥

---

—( अथेक्षत्यधिकरणम् ॥ ५ ॥

गौणेक्षासाहचर्यान्न तु बहुभवनप्रेक्षणं नैव मुख्यं
दृष्टान्ताद्यैरिहात्मन्यनुमितिरचितस्तादृशाज्जन्म युक्तं ।
सच्छब्दस्तेन मूलप्रकृतिमविकृतिं व्याहरेदित्ययुक्तं
श्रुत्याऽन्येषां निरोधात्त्वदभिमततिरस्कारिलिङ्गादिभिश्च ॥५५॥
ज्ञाते ह्येकत्र सर्वं विदितमिति भवत्यैक्यसिद्ध्यै प्रतिज्ञा
मृत्तत्कार्यादयश्च त्रय इह कथितास्तस्य दृष्टान्तभेदाः ।
तेनाव्यक्तानुमानं कथितमिति वृथोत्कण्ठितं हेत्वनुक्ते-
स्तारुप्यादेश्च हेतोरुपरि परिहृतेरत्र संभावनोक्तेः ॥ ५६ ॥
आदेशात्मस्वशब्दैरनितरशरणैस्त्वन्तदैक्योपदेशा-
ज्जीवेन स्वेन साहंकरणमनहमोऽविद्गणस्य प्रवेशात् ।
एकज्ञानेन सर्वं विदितमितिगिरा सर्वतादात्म्यवाचा
शाखाविद्यान्तरादेरपि बहुभणिता विश्वविद्विश्वमूर्तिः ॥५७॥

इतीक्षत्यधिकरणम् ॥ ५ ॥

---

—( अथानन्दमयाधिकरणम् ॥ ६ ॥ )—

मुख्येक्षा यद्यभीष्टा भवतु तदुचिते सा पुनर्जीवतत्त्वे
सद्विद्यायां हि शब्दैस्त्रिभिरुपरि सतस्तस्य जीवैक्यमुक्तम् ।

इत्यूहाद्दुर्जिहानं प्रशमयितुमथ प्रस्तुतो विश्वकर्ता
जीवस्याप्यन्तरात्मा निरुपधिकमहानन्दथुस्स्थाप्यतेऽत्र ॥ ५८ ॥

स्पष्टः पूर्वं विकारे मयडिति चरमेऽप्येवमस्त्वित्ययुक्तं
मद्धेय तद्रूढदृष्टेः प्रचुरमिह वदेत् प्रत्ययोऽन्यस्य बाधात् ।
आनन्दप्राचुरी च प्रकृतपरसुखाल्पत्वलब्धावधित्वा-
द्दुःखाल्पत्वानपेक्षा परदुरितभिदश्शासितुस्तद्विरोधात् ॥५९॥

आत्मा तस्यैव पर्वेत्युदितमनितरात्मत्वमस्यैव वक्तुं
शारीरोक्तिश्च तस्मिन्निखिलतनुतया स्यादसङ्कोचवृत्तिः ।
शोध्यत्वन्तत्तदर्थानुगुणमिति विभोस्तत्प्रसाद्यत्वमात्रं
प्राप्येऽस्मिन्प्राप्तिरूपा परमिह उपसंक्रान्तिरानन्दसिन्धौ ॥६०॥

निर्देहेऽस्मिन्निरंशे न हि भवति शिरःपक्षपुच्छादि किञ्चि-
त्तस्मात्पुच्छं प्रतिष्ठेत्युदितमिह परं ब्रह्म भातीति चेन्न ।
सोढापुच्छत्वक्लृप्तिर्यदि कथमितरस्यानुगन्येत कल्प्यं
ब्रह्मण्यात्मप्रतिष्ठा वचनमनितराधारताख्यापनाय ॥६१॥

इत्यानन्दमयाधिकरणम् ॥ ६ ॥

---

--( अथान्तरधिकरणम् ॥ ७ ॥ )--

भूयिष्ठानन्तपुण्योपचयबलसमुद्बुद्धपूर्वोकभूम्नां
शक्रादिन्यायतस्स्यात् त्रिगुणतनुभृतामीश्वराणां प्रवाहः ।
तच्चाकर्मोत्थदिव्याकृतिजनिमहिमा शासिता सर्वपुंसां
नित्यश्रीबन्धयिष्ये श्रुत इति स य इत्युक्त एवैष एकः ॥६२॥
सर्वेभ्यः कल्मषेभ्यो मुदित इति यदत्यन्तरादित्यविद्या
तस्माच्छ्रेयाभ्यनुज्ञानयत इति विभोः पुण्ययोगोऽस्तु मैवम् ।

आम्नातोऽनन्यशास्यस्त्वयशपरफलस्साधुना नैष भूयान्
स्यात्पुण्ये तद्वयोगादपि न सुकृतमित्यादिना पाप्मशब्दः ॥६३॥

प्रख्यातं शुद्धसत्त्वं किमपि तदनघं द्रव्यमव्यक्ततोऽन्य-
त्तद्रूपं रूपमैशं दिवि कनति तथा शेषशेषाशनाद्यैः ।
नित्यं तत्सूरिसेव्यं परतरमजहत्स्वस्वभावस्स देवः
पुंसां संसारशान्त्यै विपरिणमयति व्यूहपूर्वैर्विभागैः ॥६४॥

देहत्वात् सप्तधातुत्रिमलमघभयन्दुःखकृन्माशयुक्तं
सांशत्वादेश्च हेतोरिति यदि तदसद्धर्मिमानेन बाधात् ।
बाधश्शास्त्रैकवेद्ये क्वचिदपि न भवेदन्यथाऽतिप्रसङ्गात्
यत्तु स्वेच्छावतारेष्वभिनयति तदन्यासुरोपप्लवार्थम् ॥६५॥

इत्थं विद्यात्रयेण स्थिरचरचिदचिद्देहिनस्सर्वहेतो-
रव्यक्ताज्जीवतस्त्वादपि समधिकता यद्यपि स्यात्तथापि ।
उत्थानद्वारभेदान् क्रमत इह मृदूपक्रमान् क्रूरनिष्ठान्
अद्धयायेऽस्मिन्निरुन्धन्नधिकरणगणैस्तद्गुणानुद्गृणाति ॥६६॥

शब्दैस्सद्ब्रह्ममुख्यैश्श्रुतिशिरसि मितं कारणं किञ्चिदेकं
सङ्कल्पाभ्यासरूपैरतदननुगुणैश्चिन्तितश्चिद्विशेषः ।
भूताकाशादिशङ्काजननसमुचितैर्नामभिः कारणस्थैः
क्षिप्त्वा तत्पादशेषश्रुतिसमुदयनासम्भवोक्त्या भुनक्ति ॥६७॥

आकाशप्राणशब्दावनितरगतिकौ रूढिभङ्गेन नेयौ
ज्योतिश्शब्दस्तु रूढ्या प्रथयति पुरुषं दिव्यतेजोविशिष्टम् ।
प्रख्यातेन्द्रादिशब्दस्तदनु नियमितस्तद्विशिष्टप्रवृत्त्ये-
त्येवं स्यात् पेटिकैषा द्विकयुगलवती शब्दवृत्तिक्रमेण ॥६८॥

इत्यन्तरधिकरणम् ॥ ७ ॥

—( अथाकाशाधिकरणम् ॥८॥ )—

अत्राकाशस्त्वशेषप्रभवविलयभूस्साम्नि दृष्टस्स्वनाम्ना
निर्दिष्टस्तैत्तिरीयेऽप्यनितरजनितस्वात्मनस्सम्भवोक्त्या ।
मैवं सिद्धानुवादो ह्ययमथ च परप्राप्यतादिर्न तस्मि-
स्तत्कर्तात्मा विपश्चिच्छ्रुत इति विहता स्वात्मनस्तत्प्रसूतिः॥६६॥

इत्याकाशाधिकरणम् ॥८॥

---

—( अथ प्राणाधिकरणम् ॥९॥ )—

प्राणायत्तं हि देहादिकमिह विदितं तेन तत्कारणत्वं
श्रुत्युक्तं रूढिशक्त्या सुदृढमिति न तद्व्योमवत् साधनीयम् ।
तच्च प्राणस्य काष्ठादिषु महिमहतेः पूर्ववच्चानुवादाद्
आकाशोक्तेरिवोक्ते भगवति निखिलप्राणनस्यापि दृष्टेः ॥७०॥

नोक्तिं व्याहन्ति लिङ्गं किमपि भवति तु ख्याततत्त्वानुकूलं
शब्दश्चानन्यनिष्ठश्श्रुत इति न परो ज्योतिराद्युक्तिवेद्यः ।
विश्वोत्पत्त्युक्त्यभावेऽप्यवगतमिह तल्लिङ्गमित्याक्षिपन्तं
रुन्धेऽथाधिक्रियाभ्यां तदुचितचिदचिद्वर्गवैशिष्ट्ययुक्त्या ॥७१॥

इति प्राणाधिकरणम् ॥ ९ ॥

---

—( अथ ज्योतिरधिकरणम् ॥१०॥ )—

कौक्षेयज्योतिषैक्यं कथितमिह परज्योतिषस्तस्य विश्वो-
पादानत्वं च विद्यान्तरविदितमतः कारणं वह्निरस्तु ।
मैवं पुंसूक्तवाक्योदितपरपुरुषप्रत्यभिज्ञप्रथयाथान्
गायत्र्युक्तिस्तु साम्याद्यपि च निगदितास्तस्य भूतादिपादाः॥७२॥

उत्थानं ज्योतिराद्यावधिकरणयुगे कारणत्वात्मलिङ्गा-
दित्याभाष्यान्यलिङ्गं स्ववचसि विहितं नेति भाष्यं कथं स्यात् ।

इत्थं विश्वादिलिङ्गं सविदि न तु पराभीष्टलिङ्गं समस्ती-
त्युत्पश्यन् पूर्वपक्षी व्यवहरति तथा व्याहृतिस्तत्र शङ्का ॥७३॥

इति ज्योतिरधिकरणम् ॥१०॥

—————

—( अथेन्द्रप्राणाधिकरणम् ॥११॥ )—

विद्या प्रातर्दनी सा वदति हिततमोपास्तिकर्मैन्द्रमेव
ख्यातप्राणेन्द्रचिह्नान्वितमपि तदसौ विश्वकर्तेति चेन्न ।
ब्रह्म त्रेधा ह्युपास्यं बहुविधचिदचित्कञ्चुकं स्वात्मना च
प्राणेन्द्रप्रक्रमोऽपि प्रबलतरमहावाक्यवैयर्थ्यभङ्गः ॥७४॥

यल्लिङ्गं कारणैकस्थितमिति कथितं ज्योतिषीन्द्रे च तत्तु
प्रख्यातान्यैकनिष्ठं प्रथममितमतस्तन्मुखोत्थित्ययोगः ।
अप्राप्ते तद्विमर्शे प्रकृतशिथिलता नेति चेत्सत्यमेतत्
विष्णुत्वत्यादिनीतिभ्रमत इह पुरोवादमुत्प्रेक्ष्य शङ्का ॥७५॥

ज्योतिःप्राणेन्द्रशब्दाः परतरविषयाः कारणख्यातधर्मा-
दित्येतत्साध्वमीषां बहुविहृतिमती ख्यानमात्रे तु वृत्तिः ।
तत्कौक्षेयानलात्मा कथित इह तथा ध्यानतस्तत्फलाप्त्यै
मुख्यप्राणादिलिङ्गं तदुपहितपरोपासनान्मोक्षणाय ॥७६॥

कार्यं यत्कर्मवश्यं यदपि दृढमितं तन्निरूढैस्तु शब्दैः
निर्दिष्टे ब्रह्मणि स्यात्कचिदगतिहृता रूढिरैन्द्रीनयेन ।
तल्लिङ्गान्न्यथासिद्ध्यधिगमनबलात्तद्विशिष्टे विवक्षा
स्यादीशे ज्योतिरिन्द्राद्यभिलपनपदेऽदृत्वमादीरिते च ॥७७॥

स्वेच्छातस्सर्वहेतुश्शुभगुणविभवानन्तनिस्सीमदर्प-
श्शुद्धाकर्मोत्थनित्याकृतिरनुपधिकाकाशनादिस्वभावः ।

सप्राणाप्राणभेदत्र्यतिभिदुरजगत्प्राणनो दिव्यदीप्तिः
प्राणेन्द्राद्यन्तरात्मा प्रभुरधिकरणैस्सप्तभिः प्रत्यपादि ॥ ७८

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
प्रथमस्याध्यायस्य प्रथमः पादः.

—( अथ प्रथमस्याध्यायस्य द्वितीयः पादः ॥ )—

अत्रायोगान्ययोगव्यपनयननयैर्ब्रह्मपादत्रिपादी-
भागारूढैर्मृदुपक्रमकठिनपरैः प्राय आद्ये प्रसाद्यम् ।
कृत्स्नाक्षेपोपशान्त्यै प्रथम इह ततः पाद उक्तस्त्रिपादी
काचित्काक्षेपपूर्वाखिलकलहसमुन्मूलनाय प्रणीता ॥ १

अस्पष्टस्पष्टरूपस्फुटतरचिदचिल्लिङ्गयद्वाक्यचिन्ता
भाष्ये दीपावतारेऽप्यभणि नयगणैस्सम्प्रवृत्ता त्रिपाद्याम् ।
अत्यन्तास्पष्टलिङ्गान्वितविषयमुशन्त्याद्यपादं तु केचित्
तत्रेदन्तारतम्यं नियतनिजबलैः कर्मतार्तीयमानैः ॥ २

पूर्वत्रासिद्धरूपैस्स्वमतिविरचितोन्नीतिभिः पूर्वपक्ष-
स्सिद्धैस्साधारणैरप्युपधिनियमितैः प्रत्यवस्था द्वितीये ।
स्पष्टासाधारणत्वैरपरपरमतानूक्तिकल्पैरथेति
न्यायैकत्रिंशदत्र प्रतिचरणविभक्त्यन्विता न्वेषणीया ॥ ३

विश्वं पादे द्वितीये वपुरिति कथयंश्चिन्त्यते वाक्यवर्गो
विश्वाधारस्स आत्मेत्यभिलपनपरस्तत्कणीयस्तृतीये ।
तुर्ये साङ्ख्यादिपक्षोदितपरिपठनभ्रान्तिरुन्मूलनीये-
त्येवं केचित्त्रिपादीं जगदुरयमपि श्रोतृबुद्धेस्समाधिः ॥ ४

—( अथ सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १२ ॥ )—

———

यस्य प्राणश्शरीरं स खलु हिततमोपास्तिकर्मप्रसक्त-
स्तस्मिञ्जीवत्वशङ्कां जगदुपजनके सौति शाण्डिल्यविद्या ।
पूर्वन्यायाच्च युक्तन्दमनमिह महावाक्यतः प्रक्रमस्थे-
त्युत्थाने प्रक्रमोक्तानुगुणमिति महावाक्यमेकीकरोति ॥ ५
अन्याख्यात्र भेदं प्रथममधिकृतिर्भापिता किंनिमित्तं
विद्यैकत्वेऽनुवादः पर इह गुणविद्ध्यर्थमेवेति युक्तम् ।
सत्यं ब्रह्मानुमत्य क्वचिदुपनिषदि क्वापि कल्प्ये विवादे
चिन्तैषोदाहृतिस्स्यात्परमतरचितेत्यर्थसिद्धिस्तु बोद्धया ॥ ६
सर्वत्वं कर्मभिस्स्वैर्जनिमति घटते ब्रह्मशब्दोऽत्रचैवे-
त्यल्पस्थानोऽल्पमानस्सुखतदितरभुग्जीव एवेति चेन्न ।
तज्जत्वादेरनूक्तेर्यिविधगुणभिदादर्शनात्सर्वतादे-
स्सारस्याद्ण्यणुत्वं ह्युपधिकृतमिहोपास्तये ज्यायसि स्यात् ॥ ७
इति सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १२ ॥

———

—( अथात्त्रधिकरणम् ॥ १३ ॥ )—

अत्ता खल्वोदनादेर्भवभुगिति कठश्रुत्यधीतोऽप्यसौ स्या-
न्न स्यान्मृत्यूपसिक्तस्थिरचरनिखिलग्रासतस्तज्ज्ञयोक्तेः ।
जीवव्यावर्तनं च प्रकरणविदितं भोक्तृतोक्तिर्द्वयोस्तु
प्रेर्यत्वप्रेरकत्वप्रतिनियतरसाच्छत्रिन्यायाऽथवा स्यात् ॥ ८
सत्त्वं स्याद्धरत्यनश्नन् द्व इति विभजनात्पैङ्ग्यधीतन्तु सत्त्वं
बुद्धिः प्राणोऽथवेति त्वृतमिह पिबतोर्जीव एकस्तयोश्चेत् ।
मैवं जन्तौ तु सत्त्वश्रुतिरियमुचिता कर्मभुङ्नाप्यनश्नन्
तत्प्रश्नप्रक्रमोऽन्याशय इदमपि चाभापि पूर्वापरार्थैः ॥ ९

इत्यत्त्रधिकरणम् ॥ १३ ॥

———

—( अथान्तराधिकरणम् ॥ १४ ॥ )—

यद्वृत्तादेर्य एषोऽक्षिणि पुरुष इति श्रूयमाणोऽस्तु जीवो
यद्वाऽक्ष्णोर्देवताऽर्कः प्रतिकृतिरथवा तत्र दृश्येति चेन्न ।
एतद्ब्रह्मैतदेवामृतमभयमिदं कं खमित्याद्यधीते-
स्संयद्वामत्वमुख्यैस्स्थितिनियतिबलादर्चिराद्युक्तितश्च ॥ १०
स्थातन्त्र्योत्तंसितासु श्रुतिषु न फलदस्यैव वेद्यत्ववादः
कल्याणालोकनादेरिव विधिबलतो वेदनस्यार्थवत्त्वात् ।
तस्मादक्ष्यन्तरस्थः प्रतिकृतिपुरुषो युज्यते पूर्वपक्षे
सेयं पूर्वापरास्वप्यधिकृतिषु यथासम्भवं नीतिरूह्या ॥ ११
पूर्वन्यायेऽग्निविद्या पुरत उपनता मध्यतस्त्वत्र तस्मा-
त्तद्वन्न ब्रह्मविद्यानुगतिरिति भवेदक्षिविद्या ततोऽन्या ।
मैवं विच्छित्तिरङ्गैर्न हि भवति मिता चाङ्गताऽमेकस्याऽस्याः
प्रोक्तं च ब्रह्मविद्यानुगुणमिह फलं प्राक्तु न ब्रह्मदृष्टिः ॥ १२

इत्यन्तराधिकरणम् ॥ १४ ॥

———

—( अथान्तर्याम्यधिकरणम् ॥ १५ ॥ )—

अन्तर्यामी स जीवो बहुविधकरणायत्तधीवृत्त्यनूक्ते-
र्नान्यो द्रष्टेति चोक्तेरिति यदि न नियन्त्रन्तरस्य व्युदासात् ।
द्रष्टृत्वाद्यं च तत्तद्विषयघटितधीरूपमीशे हि मुख्यं
तद्धर्माः काण्वमाध्यन्दिनपठितिगतास्तस्य चात्मा शरीरम् ॥ १३
स्थानैक्यादत्र शाखाद्वयपरिपठितावात्मविज्ञानशब्दा-
वेकार्थावित्यकम्प्यन्तदपि कथयतो बुद्धिमेवेत्यपार्थः ।
लोकाम्नायप्रसिद्ध्योरनुगमत इमौ चेतने ह्येकतानौ
बाधः केनापि नास्मिन्भवति च सत इत्यादिभिरप्तामरस्यम् ॥ १४

इत्यन्तर्याम्यधिकरणम् ॥ १५ ॥

———

—( अथादृश्यत्वादिगुणकाधिकरणम् ॥ १६ ॥ )—

दृश्यत्वादेर्निषेधो विकृतिमति भवत्यक्षरे सन्निकर्षात्
पञ्चम्युक्तात्परन्तत्तदवधिकपरः पञ्चविंशोऽस्तु मा भूत् ।
सर्वज्ञत्वादिदृष्टेः प्रथमसमुदितं त्वक्षरं ब्रह्म शुद्धं
पश्चादुक्तन्तु जीवादिकमवधितया भेदतस्तत्परोक्तेः ॥ १५ ॥

इत्यदृश्यत्वादिगुणकाधिकरणम् ॥ १६ ॥



—( अथ वैश्वानराधिकरणम् ॥ १७ ॥ )—

स्वर्लोकादित्यवाताम्बरसलिलमहीरूपमूर्द्धादिक्लृप्त्या
ध्येयो वैश्वानरात्मा स्थिरबहुविशयशब्दलिङ्गादिसाम्यात् ।
मैवं ब्रह्मेत्यधीतेर्भुवनतनुतया योगतस्त्वग्निशब्दो
वैशिष्ट्याद्वा क्रियाङ्गं स्ववपुषि परधीर्गार्हपत्यादिधीश्च ॥१६॥

अन्यस्मिन्नन्यदृष्ट्या न भवति विदुषां क्वापि निश्श्रेयसाप्ति-
स्तस्माद्वैश्वानरोऽसौ न पर इति फलं त्वन्नसिद्ध्यादि मैवम् ।
ब्रह्मैव ह्यन्यदृष्ट्यन्वितघटितमिह ब्रह्मशब्दाद्यभावात्
सर्वाघध्वंस उक्तः फलमपि परमं ब्रह्म च व्याप्तमन्नम् ॥१७॥

त्रिष्वत्रोपासितॄणां मितहृदयगुहाद्यन्तरश्चिन्त्य उक्तो
विश्वान्तर्यामितादेर्विपुलपरिमितश्चिन्तनीयस्त्रयेऽथ ।
षट्सु ब्रह्मात्मशब्दा पुरुषपदमपि क्षेत्रतज्ज्ञप्रपञ्च-
व्यावृत्ते विश्वहेतौ प्रकरणनियमाच्चामवृत्त्या नमन्ति ॥ १८ ॥

तज्जत्वादेर्हि सर्वं जगदभिगदितं ब्रह्मभावेन पूर्वं
सर्वान्तर्यामिता च प्रभवितुरुदिता सर्वतद्देहता च ।
तस्माद्विश्वैक्यबाधप्रभृतियहुविधापार्थवम्भम्यमाण-
क्षुद्रद्रीयोक्तिजालं निखिलमिह नयैस्सूत्रकारो निरास ॥ १९ ॥

स्वाधीनाशेषसत्तास्थितियतनतया सर्वभावेन तिष्ठन्
ग्रस्ताशेषोऽक्षितिनित्यस्थितिरखिलतनुः कल्पिताग्न्यादिगात्रः ।
स्वर्लोकाद्यङ्गवैश्वानर१पदविषयो लक्षणस्यादिमस्य
प्रोक्तः पादे द्वितीये श्रुति निकरशिरश्शेखरः श्रीनिवासः ॥ २०

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
प्रथमस्याध्यायस्य द्वितीयः पादः ॥ २१ ॥

—( अथ प्रमथस्याध्यायस्य तृतीयः पादः ॥ )—

स्पष्टैर्जीवादिलिङ्गै २र्युतमिह हि वचस्साध्यते ब्रह्मनिष्ठं
मध्येऽत्राधिक्रियोक्तिस्त्रिषु किमिति न तत्तत्प्रसङ्गात्तदुक्तेः ।
किञ्चास्यामर्थलौकायतिकनिरसनं प्रस्तुतार्थोपयुक्तं
ब्रह्मोत्कर्षश्च सिद्ध्येद्गलति क्षिपिपदां कारणैक्यभ्रमश्च ॥ १
न्यायास्सप्तैव साक्षात् परविषयतया सङ्घटन्तेऽत्र पादे
सर्वाधारस्स आत्मा स्वमहिमनिलयस्तत्र तात्पर्यभूमिः ।
तत्सिद्ध्यै शासनाद्यं कथितमिह मिथस्स्यूतमालोचनीयं
सर्वेशत्वं च षष्ठप्रमितनयमितं पश्चिमन्यायरत्नम् ॥ २
सिद्धं प्रागेव मुण्डोपनिषदि परमं ब्रह्म तद्धर्मभेदै-
र्भेदोक्तेश्चेत्यकाण्डे किमिति पुनरिमां पिष्टपेषम्पिनष्टि ।
सत्यं क्षेत्रज्ञधर्मैः षड्भिरुपनता प्रक्रियाभेदशङ्का
प्रख्याप्य प्रत्यभिज्ञामपुनरुदयमुन्मूल्यते शब्दपूर्वैः ॥ ३
यस्मिन्नोतम्मनोऽन्यैस्सह करणगणैर्ज्ञायते यश्च नाना
नाड्याधारश्च योऽन्तश्चरति सकरणी कर्मभोक्तेति चेन्न ।
विश्वाधारात्मभावादमृतवितरणान्मुक्तसृप्यत्ववादात्
प्रागुक्तप्रक्रियैक्यादनशनसहितात् काशनाचान्यसिद्धेः ॥ ४

१. मति. पा ॥ २. युतमथहि. पा ॥

१ व्याप्ते तत्राक्षमोतं यदि किमिह ततो जन्म चास्येच्छ्योक्त-
स्नाडीचक्रस्य नाभिर्भवति च स परो हार्दरूपेण तिष्ठन् ।
निष्कम्पव्यापिनोऽन्तश्चरणमपि शुभैर्विग्रहैरस्ति लोके
सौत्रालाम्नातवद्वा चरणमिदमपि स्यादधिष्ठानमात्रम् ॥५॥

इति द्युभ्वाद्यधिकरणम् ॥ १ ॥

—*—

—( अथ भूमाधिकरणम् ॥ २ ॥ )—

आत्मज्ञानाभिलापादनुपरतशुचे नारदाय प्रयुक्तं
प्राणे सानत्कुमारं विरमति वचनं हिंसनार्हस्स जीवः ।
अल्पप्रत्यर्थिभूमा निरवधिकसुखोऽप्येष एवेति चेन्न
प्राणाख्यात्सत्यशब्दोदितमधिकतयोपास्यमत्र ह्युपात्तम् ॥६॥
नामाद्याशान्तवेद्ये प्रतिवचनवशात् प्रश्नतश्चाधिकोक्ते
प्राणे विश्रान्तिदृष्ट्या भवतु तदवधिः प्रस्तुतात्मोपदेशः ।
मैवं जातो हि नामादिवदिह परमादात्मनः प्राण उक्तः
स्वस्मादित्यत्र तस्मादिति न विघटनात् स्वारसिक्या विभक्तेः॥७॥
प्राणद्रष्टाऽतिवादी तदनुवदनतश्चोदितस्सत्यवाद-
स्तस्मात्सर्वार्हमर्थस्सकलजनयिता प्राण एवेति चेन्न ।
एष त्वित्यन्यतोक्तेरतिवदनकृतः प्राक्तनाद्यस्य तद्वन्
नत्वन्योऽस्त्यग्निहोत्री स्वमहिमनिलये ह्यत्र धर्मोपपत्तिः ॥८॥
नामादी वाक्च तस्योपरि तदनु मनश्चाथ सङ्कल्पनामा
चित्तं ध्यानं च तस्माद्बलमपि च ततस्स्याच्च विज्ञानपूर्वम् ।
अन्नं तोयं च तेजो गगनमपि ततो मन्मथस्स्यात्तथाशा
प्राणस्सत्यः परात्मा सकलनियमिता गम्यते भूमवाक्ये ॥९॥

इति भूमाधिकरणम् ॥ २ ॥

---

१. व्याप्तेरिमजच. पा ॥

—( अथाक्षराधिकरणम् ॥ ३ ॥ )—

प्रख्याताकाशपूर्वस्वविकृतिवहनादक्षराख्यं प्रधानं
तस्याप्याकाशतोक्तौ धृतनिखिलजगत् क्षेत्रितस्त्वन्तु तस्यात् ।
मैवन्द्रष्टृत्वपूर्वैरनितरनियतैश्शासनायत्तधृत्या
किञ्च द्रष्ट्रन्तरस्य व्युदसनमिह तत्तुल्यतद्द्रष्टृपोहः ॥ १० ॥

इत्यक्षराधिकरणम् ॥ ३ ॥

—( अथेक्षतिकर्माधिकरणम् ॥ ४ ॥ )—

लक्षीभूतोऽयमेकः खलु पुरुष इह ध्यायतेरीक्षतेश्च
क्षेत्रज्ञस्सोऽयमण्डाधिप इतरपरात्स्वान्यजीवात्परोऽसौ ।
नो चेद्भौमादिभोगप्रकरणविहतिर्नोभयीतीत्ययुक्तं
तस्मिञ् शान्तामृतत्वप्रभृतिपरगुणश्रुत्यनूक्त्योरयोगात् ॥११॥

नन्वत्रोङ्कारमात्रात्रयफलगणनारूढभूम्यन्तरिक्ष-
प्रत्यासत्त्या निवासस्सरसिजवसतेर्ब्रह्मलोकोऽस्तु मैवम् ।
पापोन्मुक्तेन लभ्यो ह्ययमिह कथितस्सूर्यसम्पत्तिपूर्वं
सोढव्यो मध्यलोकैर्श्वधिरिति समस्तस्समाधानमार्गः ॥१२॥

इतीक्षतिकर्माधिकरणम् ॥ ४ ॥

—( अथ दहराधिकरणम् ॥ ५ ॥ )—

दहं हृत्पुण्डरीके गगनमभिहितन्तैत्तिरीयश्रुतौ य-
च्छन्दोगैस्तत्र गीतं यदपि च दहराकाश इत्येतदेकम् ।
भूतार्थं तत्र प्रसिद्धेर्महिमत इति न प्रत्यनीकैरनेकैः
श्रौती च स्यात् प्रसिद्धिर्भगवति बलिनी लिङ्गवर्गैस्सनाथा ॥१३॥

बाह्याकाशश्च यावानयमपि हि तथेत्येतदङ्घ्रिप्रमीशे
सत्यात्मप्राणशब्दा नभसि न कथमप्यन्वयं प्राप्नुवन्ति ।

कामाधारश्च योऽसौ समगणि दहराकाशवाचाऽत्र नित्य-
स्तस्यैव होप आत्मेत्यनुवदनमतस्तद्गुणाश्चिन्त्यकामाः ॥१४॥

सर्वेशाधारतोक्त्या भवतु च हृदयव्योम तद्वाज्यधीतं
छान्दोग्यस्थो निपादस्थपतिनयपदं ब्रह्मलोकादिशब्दः ।
आपस्तम्बश्च वैभाजनपुरमवदद्ब्रह्म सर्वात्मभूतं
पूस्तस्य प्राणिनस्स्युस्तदपि तदपि हि स्यात् पुरं सर्वयात्मा ॥१५॥

जीवस्तर्ह्येष आत्मा गुणगणघटनात्तत्परामर्शदृष्टे-
रव्पत्याद्युक्तितश्चेत्यसदनुपधिकात्सत्यसङ्कल्पतादेः ।
विश्वैकाधारतादेरपि स खलु परो दह्रतौपाधिकी स्यात्
प्राजापत्यात्तु वाक्यात्परसमदशया तद्गुणोक्तिर्विमुक्ते ॥१६॥

दह्राकाशोऽपवर्गप्रद इति गदितुं सम्प्रसादोक्तिरत्र
प्राजापत्ये तु वाक्ये परपरिपठनं प्राप्यनिष्कर्षणार्थम् ।
आकाङ्क्षाद्यैस्तदेवं परतदितरयोरन्विते वाक्ययुग्मे
युक्तान्योन्यथाधप्रभृतिकमिह तत्सामरस्यं हि सौत्रम् ॥१७॥

इति दहराधिकरणम् ॥ ५ ॥

---

—( अथ प्रमिताधिकरणम् ॥ ६ ॥ )—

प्राणेशोऽङ्गुष्ठमात्रः क्वचिदनुकथितस्सञ्चरन् कर्मभिः स्वै-
रन्यत्राङ्गुष्ठमात्रं पुरुषमपि यमो निश्चकर्षेति दृष्टम् ।
तस्मादेतत्प्रमाणप्रमितमुपनिषज्जीवमादेत्ययुक्तं
वाक्यस्थेशानतादेर्नरहृदयपरिच्छित्तितस्तद्धि मानम् ॥१८॥

नह्यङ्गुष्ठप्रमाणं हृदयमखिलजन्त्वाश्रयन्तत् परस्मि-
न्व्याप्ते तन्मानतोक्तिः क्वचिदिति मनुजाधिक्रियोक्तिप्रसङ्गे ।

सूत्रद्वन्द्वद्वयान्तस्त्रिभिरधिकरणैश्चिन्त्यते तद्विशेष-
स्तार्तीयैस्स्थापनीया स्वयजिगमिषिता नेतिकर्तव्यताऽत्र ॥१६॥

इति प्रमिताधिकरणम् ॥ ६ ॥

—( अथैतद्गर्भे देवताधिकरणम् ॥७॥ )—

शब्दात्मा लौकिकार्थाकृतिरियमथवा देवताऽतो न तस्या
ब्रह्मोपासेत्यनार्षं श्रुतपरिहरणं कल्पनं चाश्रुतस्य ।
विश्वस्रष्टा च मा भूदनुमितिविषयस्तत्परैस्त्वेव शास्त्रै-
र्निर्बाधैस्स्थापितः प्राक्स्वयमपि विभुना नैव शक्यापलापः ॥२०॥
सामर्थ्यं देवतानामुचिततनुभृतामर्थितत्वं तापभाजां
सम्पद्येतेति तासामपि भवति परोपास्तिवर्गाधिकारः ।
ख्यातम्मन्त्रार्थवादप्रभृतिषु निखिलं दोषबाधाद्यभावे
मिथ्येत्युद्घोषयन्तस्स्वत इह कथिताम्मानतां प्रस्मरन्ति ॥२१॥
द्वेधा वृत्तिः स्तुतौ स्यात् स्वपरगुणमुखी प्राक्तनी तावदर्थ्या
निर्धार्यः पश्चिमायामपि निपुणधियाम्मुख्यधर्मैकदेशः ।
रुच्यर्थायां च तस्यामनृतकथनतो रोचना नह्यमुग्धे
भूतार्थे का स्तुतिस्स्यादिति मुनिगदिता गौणतादेर्निवृत्त्यै ॥२२॥
नानादेहातिशक्ताः कथमिह युगपत्कर्मसन्निध्यनर्हा-
स्तत्तद्वृत्तान्तसत्त्वे श्रुतिषु भवति नानित्ययोगः प्रवाहात् ।
काण्डादौ कर्तृवादः प्रवचननियतो चेदनित्यत्वसिद्धे-
रीशः प्राचीनरूपक्रमत उपदिशेद्वर्णसर्गेऽपि वेदान् ॥२३॥
वेदानामीशबुद्ध्या क्रमनियमहतिः कल्पभेदे यदीष्टा
मन्त्रांशानान्तथा स्यान्न खलु तदुचितं व्रीहिसोमादिसाम्यात् ।
इत्थं विद्धयर्थवादक्रम इति नियमे पाक्षिके वा तथात्वे
पक्षोऽसावाद्यपादः परमतपरिपत्कोटिमाटीकताम्नः ॥२४॥

सौक्ष्म्यात्तुल्याभिचारात् १ सहकृदपनयाच्छादकाद्दान्यपर्या-
दत्याऽसत्याऽतिदूराद्बलवदभिभवानुद्भवाद्योपघातैः ।
नेक्ष्यन्ते वर्तमानान्यपि हि सुरगणस्तद्वदन्तर्द्धिशक्तेः
प्रख्यातास्सिद्धिभेदा अपि जननतपोयोगमन्त्रौषधीभ्यः ॥२५॥
इत्येतद्गर्भे देवताधिकरणम् ॥७॥

—( अथैतद्गर्भे मध्वधिकरणम् ॥८॥ )—

स्याद्वेयं देवमात्रे मनुज इव परोपास्तिमात्रे तथापि
स्वस्यैवाराध्यभावस्स्वपदमपि फलं यत्र नात्राधिकारः ।
मैवं सर्वान्तरात्मा स्वतनुभृदिति चोपासते मुक्तिकामाः
कामाद्यावर्तते तु स्वपदमपि फलं कल्पमन्वन्तरादौ ॥२६॥
इत्येतद्गर्भे मध्वधिकरणम् ॥ ८ ॥

—( अथैतद्गर्भे अपशूद्राधिकरणम् ॥ ९ ॥ )—

जैमिन्युक्तापशूद्राधिकरणसरणेर्नास्ति विद्याग्निलब्धिः
शूद्रादीनान्तथापि स्मृतपरभजनाधिक्रिया जाघटीति ।
श्रोतृत्वाद्धारतादेस्स्वजनिसमुचितैः कर्मभिश्चेत्ययुक्तं
प्राप्ते ब्रह्मोपदेशे ह्युपनयनपरामर्शनादि प्रसिद्धम् ॥२७॥
शूद्राणां भारतादेश्श्रवणमनुमतं पापशान्त्यादिसिद्ध्यै
वेदार्थापातबुद्धिर्यदनधिकरणा नोपबृंह्येत तैस्सः ।
विद्यास्थानानि शूद्रैर्मुरभिदकथयत् पाण्डवाय द्विसप्ता-
न्यप्रख्यानि तस्मान्नहि विकलधियां स्यादुपासाधिकारः ।२८।
गीतं शूद्रादिकानामपि परभजनं केवलं स्वार्हधर्मै-
र्धर्मव्याधस्तुलाधृग्विदुर इति च ते प्राग्भवाभ्याससिद्धाः ।

१. सहकृदपगमात्. पा ॥

वक्ता शूद्रेति जानश्रुतिमभिमुखयन् शोकमस्य व्यनक्ति
क्षत्रप्रेषादिलिङ्गैस्स्फुटतरविदितं क्षत्रियत्वं हि तस्य ॥२९॥
धूत्वेति प्राच्यवाक्यप्रकृत इह भवेन्मुक्त आकाशनामा
बन्धेऽसौ नामरूपे वहति तदनु च ब्रह्मभावे जहाति ।
इत्यन्याय्यं पुरोक्तः पुनरयमभिसम्भाव्य एव ह्युपात्तो
ब्रह्मत्यत्र ह्यवस्था श्रुतिषु च युगपज्ज्ञाततादिर्विभक्तः ॥३०॥
विश्वात्मानन्तभूमा नियमनधृतिकृन्मुक्तभोग्यस्वभावो
दह्रस्याधारसर्वो हृदयपरिमितावस्थया सर्वयन्ता ।
देवादीनामुपास्यो वसुमुखविबुधैस्स्वात्मभावेन सेव्य-
श्शूद्राद्योपास्त्यनर्हः प्रभुरिह बुबुधे नामरूपैककर्ता ॥ ३१ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
प्रथमस्याध्यायस्य तृतीयः पादः ॥३॥

———

—( अथ प्रथमस्याध्यायस्य चतुर्थः पादः ॥ )—

निर्णीतं वाक्यजातं परविषयतया स्पष्टजीवादिलिङ्गं
तत्तच्छायानुसारि प्रथयति तु वचस्तत्परं तुर्यपादे ।
षड्भिर्द्वाभ्यां च तत्र प्रशमयति नयैस्साङ्ख्ययोगोक्तशङ्कां
षट्कौ जाग्रह इत्थं कथितनिगमनं त्वष्टमं केचिदूचुः ॥१॥
द्वाभ्यां तेष्वं प्रधानं कपिलमतमथ त्वेकतोऽन्योक्तसङ्ख्या
तुर्येणाव्याकृतोक्तेरपि विभुरवधिस्स्थाप्यते द्वारवृत्त्या ।
शुद्धाशुद्धौ च जीवावधिकरणयुगेऽनन्तरं वारणीयौ
शेषन्त्वान्तरोक्तेश्वरनिरसनकृत्तुर्यपादाष्टकेऽस्मिन् ॥२॥
अज्ञाद्यव्यक्तनिष्ठं जडमथ पुरुषान्तरव्यक्ताष्ठां विविच्य
ब्रूते वशी कठानां परमतपठितां प्रक्रियामित्ययुक्तम् ।

१तत्रस्थानेकवाक्योदितविविधवशीकार्यमुख्यक्रमोक्ते-
श्शान्तात्मा विष्णुरुक्तः पर इह पुरुषः प्रत्यभिज्ञाप्यते च ॥३॥
नह्यर्था इन्द्रियाणां प्रकृतिरथ मनोहेतुरेवाग्रचेष्टं
बुद्धिश्चैतन्न सूते नच महति महाञायते बुद्धिसंज्ञः ।
भोक्तुर्युक्तम्महत्त्वम्महति नहि भवेदात्मता पारिशेष्या-
त्स्यव्यक्तोक्तिश्शरीरे तदिह न कपिलप्रक्रियाप्रत्यभिज्ञा ॥ ४ ॥

इत्यानुमानिकाधिकरणम् ॥ १ ॥

—( अथ चमसाधिकरणम् ॥ २ ॥ )—

स्वातन्त्र्येण ह्यजाया निखिलजनकता सूच्यते क्वापि वाक्ये
बद्धोऽजस्तत्र शेते त्यजति पुनरिमां भुक्तभोगामजोऽन्यः ।
इत्युक्तेस्तान्त्रिकी सा स्थिरमिति यदि नाजात्वमात्राभिधाना-
दस्वातन्त्र्यप्रसिद्धेस्सृजतिरपि परप्रेर्यताद्योपलब्ध्यात् ॥५॥

इति चमसाधिकरणम् ॥ २ ॥

—( अथ संख्योपसंग्रहाधिकरणम् ॥ ३ ॥ )—

यस्मिन् २पञ्चेति वाक्ये परपरिगणिता विंशतिः पञ्चयुक्ता
प्रोक्ता सप्तम्यधीतस्त्विह पुरुषगणोऽनन्यनिष्ठोऽस्तु मैवम् ।
आकाशस्य स्वनाम्ना पृथगनुकथनात् सप्तमीशक्त्यबाधात्
षड्विंशोऽसत्र सर्वाश्रय इति विधितोऽनूद्यते ब्रह्मतार्थैः ॥ ६ ॥
संज्ञोपाधिस्समासो ह्ययमिति निगमे सप्तसप्तर्षिनीत्या
प्राणाद्यन्नन्मनोन्तं प्रकरणनियतं पञ्चकं धीन्द्रियाख्यम् ।
ज्योतिश्शब्देन शाखान्तरविदितमिदं न्यूनवादस्तु पूर्यो
घ्राणं वक्त्यन्नशब्दो रसनमपि सह प्राणशब्दस्त्वयमर्थः ॥ ७ ॥

इति सङ्ख्योपसंग्रहाधिकरणम् ॥ ३ ॥

१. तत्रस्थानेक. पा ॥ २. पञ्चेतिमन्त्रे पा ॥

—( अथ कारणत्वाधिकरणम् ॥ ४ ॥ )—

विश्वोपादानवक्त्री श्रुतिषु सदसदव्याकृतोक्तिः परोक्ते
ह्यव्यक्तेऽन्वेति तस्मात्तदितरदखिलं नेयमत्रेतिचेन्न ।
यत्रासत्त्वादि दृष्टं प्रकरणविदितन्तत्र सर्वज्ञताद्यं
लिङ्गं स्यादित्यधीतं स्थिरमपि तदिहाबाध्य आत्मादिशब्दः ॥८॥
आसीदग्रे त्वसद्वा इदमिति विलयावस्थतामात्रमुक्तं
नैवासीत् किञ्चिदित्याद्यपि विलयपरं शून्यतादेर्निषेधात् ।
सर्वस्याव्याकृतत्वं विभजनविरहात्तादृशावस्थतत्तद्
द्रव्यस्तोमान्तरात्मा तदिह सदसदव्याकृताद्युक्तिवाच्यः ॥९॥

इति कारणत्वाधिकरणम् ॥ ४ ॥

———

—( अथ जगद्वाचित्वाधिकरणम् ॥ ५ ॥ )—

यस्यैतत्कर्म वेद्यस्स इति वचनतः कर्मवश्यप्रतीतेः
कर्ता पुंसां सएव स्वकृतपरिणतेरित्युपक्रान्तिभङ्गम् ।
बालाक्यज्ञाततत्त्वान्तरमुपदिशतः स्यादिहाजातशत्रो-
स्तज्ज्ञातोक्तिर्निरर्था जगति कृततया कर्मशब्दोऽत्र मुख्यः ॥१०॥
एवं जीवातिरिक्ते प्रकरणनियते तत्र यज्जीवमुख्य-
प्राणाख्यानं न तेन क्षतिरिह हि तथा तद्विशिष्टे ह्युपासा ।
प्राणस्य प्राणभाजोऽप्यधिकरणतया वाजिवाक्योक्तनीत्या
ब्रह्मप्त्यै तदन्यप्रकथनमिति हि स्थापना सार्वभौमी ॥११॥

इति जगद्वाचित्वाधिकरणम् ॥ ५ ॥

———

—( वाक्यान्वयाधिकरणम् ॥ ६ ॥ )—

पत्यादीनां प्रियत्वं श्रुतिरनुवदति ह्यात्मनः कामसिद्ध्यै
तेनासौ पुण्यपापोदितफलभुगिति प्रक्रमाद्विप्रनीयम् ।

तत्तद्भोगप्रदातुः प्रथयति हि विभोः कामतस्तत्प्रियत्वं
दृष्टव्यश्चैव मुक्त्यै श्रुतिनिकरमितः प्रत्यभिज्ञाप्यतेऽत्र ॥१२॥
व्युत्पत्त्या ह्यात्मशब्दः प्रथयति परमं ब्रह्म यद्वा समासात्
सार्थोऽयं जीवशब्दो वदति च परमं द्वारवृत्त्येति पक्षाः ।
व्यक्त्यैक्यादाश्मरथ्यो निरुपधिकदशाद्वैततस्त्वौडुलोमि-
स्तत्स्थत्वात्काशकृत्स्नः परविषयतया जीवशब्दं जगाद ॥१३॥
भेदोपाधिव्यपाये भवभृदयमियाद्ब्रह्मतामित्ययुक्तं
नित्यन्तद्भेददृष्टेरतिपतितभवे साम्यसाधर्म्यशब्दात् ।
मृत्तत्कार्यक्रमश्च श्रुतिशतविहतस्तेन जीवोक्तिमीशे
तत्स्थत्वात्काशकृत्स्नो यदिह निरवद्यस्यासिद्धान्त एषः ॥१४॥

इति वाक्यान्वयाधिकरणम् ॥६॥

---

—( अथ प्रकृत्यधिकरणम् ॥ ७ ॥ )—

मृत्पिण्डादेः कुलालप्रभृतिरिह पृथक्तद्वदेवादिकर्ता
नोपादानं विकारैर्विरहत इति न द्वारमात्रे विकारात् ।
मृद्दृष्टान्तादिमात्राच्च विकृतिरसौ स्यात् परस्य स्वरूपे
देहद्वारोर्णनाभिप्रभृतिविकृतिवद्व्यापृतेर्दर्शितत्वात् ॥१५॥
स्वज्ञानाद्यं स्वजन्यं भवति सृजति च स्वान्यसंयोगमीश-
स्संयोगे मूर्तनिष्ठे प्रकृतिरपि हि तस्यान्निमित्तं क्रियातः ।
एकस्यादौ बहुस्यामिति बहुभवनं सौभरिन्यायसिद्धं
भेदाभेदश्रुतीनामविहतिरिह च स्याद्विशिष्टैक्ययोगात् ॥१६॥
कार्यैक्ये हि प्रतिज्ञा तदनुगुण उदाहारि दृष्टान्तवर्गः
स्रष्टुस्स्यामित्यभिध्यां श्रुतिरिह वनतां वृक्षतादिं च वक्ति ।
आत्मानं चैष एव स्वयमकुरुत तद्भूतयोनित्यमुक्तं
तस्मात्कर्ताऽपि देवः प्रकृतिरपि भवेत् सर्वतस्यान्तरात्मा ॥१७॥

नोपादानं निमित्तं किमपि तदितरत्कारणन्तद्धि धिन्नो
यद्वा सिद्धं निमित्तं न भजति तदुपादानतामित्ययुक्तम् ।
इष्टाद्याकारभेदादुभयघटनतो लोकवेदानुरोधे
सिद्धे स्वच्छन्दलक्ष्मप्रणयनकुसृतिः पाकचिन्ताविपाकः ॥१८॥

उक्त्वा तत्त्वान्तराणां विलयमथ तमस्येकतामात्रमुक्तं
प्रोक्तं चानादितादि प्रकृतिपुरुषयोर्वैदतद्वेदिवाक्यैः ।
लीयेते तौ परस्मिन्निति तु लयवचस्स्यादयस्तोयनीत्या
तेनासौ भोक्तृभोग्यप्रभृतिकचचिताद्विश्वसृष्टिस्समीची ॥१९॥

इति प्रकृत्यधिकरणम् ॥७॥

---

—( अथ सर्वव्याख्यानाधिकरणम् ॥ ८ ॥ )—

अग्रेसंवर्तनं भात्यवितथवचसि क्वापि हैरण्यगर्भे
ग्रस्ताशेषस्वकार्ये तमसि च शिव एवेति केचित्पठन्ति ।
एतादृग्वाक्यवर्गस्स्फुटभवदधिकाशङ्कनस्तम्भनार्थं
प्रागुक्तार्थातिभेदानतिदिशति परं शिष्यशिक्षैकचित्तः ॥२०॥

विश्वेशश्श्रीपतिश्चेद्भवति कथमसौ त्राणमात्राधिकारी
दूरं गत्वापि दुःस्थद्विधिशिनतुलया घट्टकुट्यां प्रभातम् ।
नैवं मत्स्यादिभावेष्विव निजविभवानुक्रियानाट्यमेत-
दूब्रह्मेशस्रष्टरि स्यान्निरवधिकबृहत्पौरुषेपूरुषे नः ॥ २१ ॥

सांख्योक्तप्रक्रियोक्तेस्तदभिमतसृजेस्तत्प्रसंख्यानक्लृप्तेः
स्तत्प्रोक्ताव्याकृतैक्यात्स्ववृजिनयचनात्तत्फलावश्ययोगात् ।
भेदात्कर्तृप्रकृत्योर्द्रुहिणशिवमुखानेकहेतुश्रुतेश्च
क्षिप्तं पादत्रयोक्तं श्रुतिहृदयसमुद्घाटनाद्न्वरक्षत् ॥२२॥

जिज्ञास्यत्वेन सिद्धेस्स्थिरचरचिदचिद्देहिनि ब्रह्मतत्त्वे
श्रुत्याद्यैरेव सूक्तो स्वरसगतिरियं कारणाम्नायवाचाम् ।
बाधं रोधं च बाह्यान्तरमिह बहुधा वर्णयन्तो मुसल्या
निष्काल्यैरन्यरस्तान्निपदुपनिषदां निश्चलत्वप्रसिद्ध्यै ॥२३॥

आदौ जिज्ञास्यताऽऽस्तां बहुविहतिहता सह्यतां लक्षणोक्तिः
मृष्यामश्शास्त्रयोनिप्रलपितमपि चस्स्यात् समन्वित्यपोक्तिः ।
सूत्रैरेतैस्स्फुटार्थैस्सविषयवचनैर्निर्विशेषैक्यपक्षे
मुख्येक्षाद्यैस्स्वधर्मः प्रकृतिपुरुषतो भेदवादः कथं स्यात् ॥२४॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
प्रथमस्याध्यायस्य चतुर्थः पादः ॥४॥

॥ समाप्तश्चाध्यायः ॥

---

* श्रीमते रामानुजाय नमः *

# अधिकरणसारावली



—( अथ द्वितीयस्याध्यायस्य प्रथमः पादः )—

स्मृत्यधिकरणम् ॥

तत्तादृक्कर्कतन्त्रक्रमनिपुणमहाबुद्धिसन्तोषसिद्धि-
र्यद्यप्युक्तेन लभ्या तदपि मृदुधियां हेतुकास्कन्दशङ्की।
स्थूणाखातक्रमेण स्थिरयति कथितं ब्रह्मणः कारणत्वं
कार्यत्वं यस्य यादृक्छ्रुतिभिरवगतं तस्य तत्तादृशञ्च ॥१॥
पादद्वन्द्वं द्वितीये परिहरति परे कारणे बाह्यपीडां
कार्यद्वारेण पादान्तरयुगमुदयत्यान्तरक्षोभशान्त्यै।
हेतुत्वायोगभङ्गः प्रथममिह विभोस्तस्य सार्वत्रिकत्वा-
योगक्षेपः परस्तात् फलति स च भवेच्छ्रौतनित्यं विहाय ॥२॥
तन्त्रच्छायानिदाने स्वयमुपनिषदामान्यपर्ये निरुद्धे
तन्त्रेभ्यो दुर्बलत्वात्तदनुसरणमित्युज्जिहीते परोऽद्य।
इत्थं सत्यत्र तत्तत्स्मृतिनय१पृतनातिक्रमन्तत्तदर्हैः
प्रत्यस्त्रैर्वारयित्वा द्रढयति चलितं पादतः प्राच्यमर्थम् ॥३॥
निर्णीतं कर्मकाण्डे स्मृतिनयविहती निश्चलत्वं श्रुतीनां
चर्चा तत्सिद्धयेऽसौ पुनरिति विफलः स्याद्द्वितीयाद्यपादः।
मैवं गम्भीरनानाश्रुतिशिखरपरिच्छेद्यदुर्बोधताया-
माप्तोक्त्या तर्कतश्च क्षममनुसरणं पश्यतो ह्यत्र भङ्गः ॥४॥
द्वाभ्यां स्मृत्या विरोधं परिहरति ततस्त्वष्टभिस्तर्कबाधं
तेनोपादानभावं द्रढयति तु विभोः कर्तृतान्तद्द्वयं च।

---

१ कलिता इति चिन्तामणौ व्याख्यातं ॥

तत्तत्त्वेषात्तुलाग्रस्थयनमनसमुन्नामनीत्या प्रवृत्ते
शङ्कावर्गैर्परीक्षा समनिहितमतिः पक्षपातं रुणद्धि ॥५॥
स्मर्ता श्रुत्यैव गीतः कपिलऋषिरसौ वासुदेवांशभूतः
ख्यातो रामायणादौ प्रथितिनिपुणधीर्वक्ति वेदान्ततत्त्वम् ।
तस्माद्स्मद्विदूरे श्रुतिशिरसि तदुक्त्यैव निष्कर्षणं स्या-
च्च स्यादेकार्थमन्वाद्यनघवहुगिरा तत्र तत्त्वार्थसिद्धेः ॥६॥

--( अथ योगप्रत्युक्त्यधिकरणम् ॥ २ ॥ )--

वेदान् पूर्वं विधाताऽलभत भगवतस्सर्वविद्यानियुक्तो
वागीशश्चैव तस्मात्तदुदितविहतौ कम्पनं वेदमूर्ध्नः ।
मैवन्तस्यापि वेदापद्धतिमुखविपदर्शनात्त् त्वेत्रिभावान्
भ्रान्त्यादिस्सम्भवेदित्यगतिकविषये पूर्ववन्निर्वहामः ॥७॥

--( अथ विलक्षणत्वाधिकरणम् ॥३॥)--

विश्वं त्रैगुण्यवत् स्यात् त्रिगुणत उदितत्वात्समादित्ययुक्तं
सर्वाकारेण साम्यं क्वचिदपि न भवेत् केनचित् साम्यमिष्टम् ।
भग्ना हेतुव्यय[illegible]चितगुणसमता गोमयाद्वृश्चिकादौ
स्थूलत्वं यातिचशः प्रकृतितनुरतस्सर्वचोद्योपमर्दः ॥८॥
ईक्षा तादृग्बहु स्यामिति सति पठिता तेजसोऽपाञ्च दृष्टा
सालक्षण्यं ततस्स्याज्जगत इति मृदुप्रश्नपार्श्वस्थचोद्ये ।
तत्तन्मूर्तेः परस्येक्षणमिदमिति तद्वाक्यभावापलापी
सामान्येनाभिमानिव्यवहरणमिदं व्याहरन् पूर्वपक्षी ॥९॥

--( अथ शिष्टापरिग्रहाधिकरणम् ॥४॥ )--

संवाक्षादक्षपादक्षपणककणभुग्भिक्षुपक्षेष्वणूनां
विश्वन्तद्धेतुकं स्यादिति मृदुमतिभिश्श्वावराहक्रमोक्तौ ।

---

१. द्वितीयनति-पा ॥

अन्योन्यव्याहतार्थस्थपुटितकुहनायुक्तिदोषापनुत्त्यै
भाति त्रैय्यन्तसूर्यः प्रतिमततिमिरस्तोमकुक्षिंभरिर्नः ॥१०॥

—( अथ भोक्त्रापत्त्यधिकरणम् ॥५॥ )—

एको यस्यास्ति देहस्स भवति विविधानन्तदुःखैकभोक्ता
विश्वं देहः प्रभोश्चेत् स कथमतिपतेद्विश्वदुःखानुभूतिम् ।
इत्थं जीवेशसीमामपलपितुमनाः क्लेशभाजा श्रुतीनां
सम्राड्भृत्यादिनीत्या शममिह लभतां साम्यवैषम्यदर्शी ॥११॥

—( अथारम्भणाधिकरणम् ॥ ६ ॥ )—

कार्यं धर्मैर्विरुद्धैः कट इव शकटात् कारणद्रव्यतोऽन्य-
द्व्यापारः कारकाणां विफल इतरथेत्यर्धवैनाशिकोक्तौ ।
द्रव्यैक्येऽप्यस्तु सर्वं तदभिमतदशाभेदतोऽसच्छ्रुतिश्चे-
त्यद्वयत्वाल्लाघवाच्च श्रुतिकथितजगद्ब्रह्मतादात्म्यमुक्तम् ॥१२॥
मायोपाधिस्वशक्तिव्यतिकरितपरब्रह्ममूलः प्रपञ्चो
येषान्तेऽप्यद्वितीयश्रुतिमवितथयन्त्यत्र तत्तद्विशिष्टे ।
अप्राधान्यात्तथा नः प्रकृतिपुरुषयोरन्तरात्मप्रधाने
वाक्येऽस्मिन् स्थूलसूक्ष्मान्वय इति जगतोऽनन्यभावोपपत्तिः ॥
विश्वारम्भे विवर्तं शकलपरिणतिं शक्तिशेषस्य सूतिं
व्यक्त्युल्लासौ विसृष्टिं विकृतिमनियतां तत्त्वपंक्तौ च सृष्टिम् ।
तत्तद्वाक्यैकदेशे स्वरस इति मुधा कल्पयन्तस्तु मुग्धा-
स्सर्वश्रुत्यैकरस्यप्रणयिभिरधरीचक्रिरे तत्त्वविद्भिः ॥१४॥

—( अथेतरव्यपदेशाधिकरणम् ॥ ७ ॥ )—

उक्तेऽनन्यत्वपक्षे चिदपि परिणतिर्ब्रह्मणस्स्यात्ततस्त-
ज्जीवैक्यं तत्त्वमस्याद्यवगतमहतन्दुःखसिन्धुश्च जीवः ।
अभ्रान्तस्तु स्वदुःखं न सृजति न च तत्क्रीडयाप्यस्य मैवं
तात्स्थ्येनानन्यतोक्तेस्तदपि चिदचितोस्तच्छरीरत्वसिद्धेः ॥१५॥

—( अथोपसंहारदर्शनाधिकरणम् ॥ ८ ॥ )—

शक्तौ कर्तृप्रकृत्योरुपकरणगणोपस्थितौ कार्यकृत्व-
न्तस्मादग्रे सदेकं किमुपकरणयेदित्यसच्छक्तिभेदात् ।
क्षीरायस्कान्तलूताऽत्रिदशमुनिमुखान्वीक्ष्य तोष्ठ्यमस्मिन्
संकल्पादेव जीवो नुदति निजवपुर्विश्वरूपस्तथेशः ॥१६॥

—( अथ कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥ )—

कृत्स्नं कार्यात्मना चेत् परिणमति परं नावशिष्येत किञ्चि-
यगंशाच्चिष्कलत्वश्रुतिविहितरिदं स्याद्विशिष्टेऽपि तस्मिन् ।
ब्रह्मोपादानतैवं न घटत इति चेन्न स्वपक्षेषु साम्या-
त्तन्मानात्तद्गृहीतौ श्रुतिमितमिति तल्लोकवत् स्वीकुरुष्व॥ ७॥
संयोगाख्यं हि कार्यं विभुतदितरयोस्स्यादणूनाम्मिथो वा
कार्त्स्न्येनांशेन वा तद्विहतमिति यदन् शून्यवादे निमज्जेत् ।
सांख्योऽपि प्राह विभ्वीं प्रकृतिमिति कथन्न्यूनसृष्टिस्ततस्स्या-
न्मायादिष्वेवमूह्यं निगमनिगदितात्वत्ता पद्धतिनः ॥१८॥

--( अथ प्रयोजनवत्त्वाधिकरणम् ॥ १० ॥ )--

आत्मार्थं विश्वसृष्टिः कथमपि सततावाप्तकामस्य न स्यात्
कारुण्याद्दुःखसृष्टिर्न भवति न च सा सर्वशक्तेश्चिकित्सा ।
सर्वज्ञस्यात्मतृप्तस्तदिह न जगतो हेतुरित्यन्धचोद्यं
लीलासौ लोकवत्स्यादभिमतिसमये सिद्धितस्त्वाप्तकामः ॥१९॥
विश्वन्दुःखैकतानं विषममपि सदा निर्मिमाणस्य लीला
संजायेतासमञ्जक्रमत इति भवेन्निर्दयत्वादिदोषः ।
नैवं बीजांकुरादिक्रमविषमभयानादिकर्मौघभाजां
जीवानां सौति तत्तत्फलमिति करुणासाम्ययोरप्रहाणात् ॥२०॥

दृष्टन्यायेन विश्वप्रजनकचिदचित्तत्त्वभेदक्लृप्तौ
स्वेष्टप्रत्यर्थिधर्मोपनयननियतव्याप्तिर्येयाकुली स्यात् ।
अत्यन्तादृष्टमर्थं भणितुमधिकृताच्छास्त्रतस्सर्वकर्तु-
स्सिद्धौ बाधाद्यनर्हप्रमितपरवती सर्वधर्मोपपत्तिः ॥२१॥

सांख्यस्मृत्या विरोधाद्विधिमतविहतेः कार्यवैरूप्यतोऽस्मि-
न्नेकार्थानेकतन्त्रोदितविहततया देहभोगाविमुक्त्या ।
कार्योपादानभेदात् स्वहितविहतितः कारकस्तोम हानेः
कृत्स्नांशाद्यूहबाधात् कृतिविफलतयाप्युत्थितं प्रत्यधिक्षिपत् ॥२२

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
द्वितीयस्याध्यायस्य प्रथमः पादः ॥१॥

---

—( अथ द्वितीयस्याध्यायस्य द्वितीयः पादः ॥ )—

रचनानुपपत्त्यधिकरणम् ॥ १ ॥

---

बाधाभावादकल्पे स्थिरयति निगमैर्ब्रह्महेतुत्ववादे
भूयः किं वीतरागो वदति परपरीवादमत्रेत्ययुक्तम् ।
प्रख्यातप्राच्यनैकप्रनिसमयभयन्मन्दसन्देहशान्त्यै
तुल्यत्वभ्रान्तिसिद्धा प्रकरणसमता तर्कपादे हि वार्या ॥१॥
षड्विंशालम्बिसांख्यं स्फुटतरपठितं भारते योगतुल्यं
तत्स्थत्वात् पञ्चविंशस्त्विति च निगदितस्सर्वतश्शान्तरात्मा ।
तस्मात् सेशानतन्त्रं श्रुतिसमधिगतं स्थापयित्वात्र सूत्रैः
पत्नं त्वीशानपेक्षं प्रतिवदति नयैरक्तकूटप्रत्यवायम् ॥२॥
अव्यक्तादीन्पदार्थाननुमितिमुखतस्स्थापयन्तस्स्वबुद्ध्या
षट्त्रिंशत्तत्त्ववादप्रभृतिषु न कथं सङ्गमिच्छन्ति सांख्याः ।

स्याच्चाकर्मोद्भवन्तन्निखिलमपि परब्रह्मवत्तत्समस्य ॥१७॥

मोक्षेपुण्याद्यभावात्तदुपधिकवपुर्वर्जितत्वं न दूष्यं
तस्मिन्दुःखाद्यदेहत्यजि च शुभवपुस्तस्यपक्षोप्यबाढ्यः ।
इत्थं सत्यत्र मुक्तस्थितिरिह मुनिना कीदृशी सूत्रिता स्या-
न्मैवं स्वच्छन्ददेहग्रहतदनियमस्थापनेऽत्राभिसन्धेः ॥१८॥

नानादेहा यदि स्युर्युगपदधिगतब्रह्मसाम्यस्य पुंस-
स्तेषां व्याप्तस्वरूपान्वय उचित इति प्राक्तनाणुत्वहानम् ।
नैतद्धीव्याप्तिसिद्धेर्भवति न जगदावेशवाक्यविदाना
सौभर्यादौ प्रक्लृप्तां गतिमपवदितुं न क्षमं ब्रह्मसाम्यम् ॥१९॥

देहानां यौगपद्ये बहुषु कथमणुर्धारकोऽस्त्वेष मुक्त-
श्चैतन्यद्वारतश्चेत् सकलमपि तदा धारयेद्व्याप्तबोधः ।
मैवम्मुक्तस्य शक्तिर्नियमितविषया स्विच्छया सर्वशक्तेः
प्राकाम्ययोगशक्त्या बहुतनुभजने कर्मबन्धोऽप्यपेयः ॥२०॥

शक्तिः क्षेत्रज्ञसंज्ञा मुनिभिरभिदधे वेष्टिता कर्मभिस्स्वैः
पुंसोऽनंशाप बुद्धिर्बहुविधविकृतिस्स्वीकृतैवं स चास्तु ।
वालाग्रेत्यादिवाक्यात्तदयमणुरपि स्यादनन्तोऽपि मुक्तौ
न स्याज्जैनादिभंगे परिहृतविकृतेरैकरूप्यानपायात् ॥२१॥

जीवस्यैकैकशो हि त्वजनत उदितो वृत्तशाखासु शोप-
स्तस्मादद्वारकं स्यादपगतवरणे मुख्यमानन्त्यमस्मिन् ।
मैवं शाखासु भोगाश्रयनियतिकरोपाधिनाशः प्रहाणं
क्षेत्रादिन्यायतोऽसावभिमतिविरहात स्यादधीतो जहातिः ॥२२

एकोऽनेकः परस्मात् पृथगपृथगपि स्वस्वरूपेण मुक्त-
स्स्वाभीष्टाशेषभोक्ता स्वयमिति पृथुकत्तीवबद्धे भ्रमन्ति ।
तेऽन्वीदय स्वोक्तिबाधं श्रुतिशतविहतिं तत्तदुक्त्यान्यपथं

दृष्टन्यायेन विश्वप्रजनकचिदचित्तत्त्वभेदक्लृप्तौ
स्वेष्टप्रत्यर्थिधर्मोपनयननियतव्याप्तिर्वैयाकुली स्यात् ।
अत्यन्तादृष्टमर्थं भणितुमधिकृताच्छास्त्रतस्सर्वकर्तु-
स्सिद्धौ बाधाद्यनर्हप्रमितपरवती सर्वधर्मोपपत्तिः ॥२१॥

सांख्यस्मृत्या विरोधाद्विधिमतविहतेः कार्यवैरूप्यतोस्मि-
न्नेकार्थानेकतन्त्रोदितविहततया देहभोगाविमुक्त्या ।
कार्योपादानभेदात् स्वहितविहतितः कारकस्तोम हानेः
कृत्स्नांशाद्यूहबाधात् कृतिविफलतयाप्युत्थितं प्रत्यविद्ध्यत् ॥२२

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
द्वितीयस्याध्यायस्य प्रथमः पादः ॥१॥

---

—( अथ द्वितीयस्याध्यायस्य द्वितीयः पादः ॥ )—

रचनानुपपत्त्यधिकरणम् ॥ १ ॥

---

बाधाभावादकम्पे स्थिरयति निगमैर्ब्रह्महेतुत्ववादे
भूयः किं वीतरागो वदति परपरीवादमत्रेत्ययुक्तम् ।
प्रख्यातप्राच्यनैकप्रतिसमयभवन्मन्दसन्देहशान्त्यै
तुल्यत्वभ्रान्तिसिद्धा प्रकरणसमता तर्कपादे हि वार्या ॥१॥
षड्विंशालम्बिसांख्यं स्फुटतरपठितं भारते योगतुल्यं
तत्स्थत्वात् पञ्चविंशस्त्विति च निगदितस्तत्त्वतश्शान्तरात्मा ।
तस्मात् सेशाननन्त्यं श्रुतिसमधिगतं स्थापयित्वाथ सूत्रैः
पक्षं त्वीशानपेक्षं प्रतिवदति तथैतत्कूटप्रत्यवायम् ॥२॥
अव्यक्तादीन्पदार्थाननुमितिमुखतस्थापयन्तस्स्वबुद्ध्या
षट्त्रिंशत्तत्त्ववादप्रभृतिषु न कथं सङ्गमिच्छन्ति सांख्याः ।

तुल्याक्षेपोपपत्तीश्श्रुतिनियतिमुचां कल्पनास्सम्मृशन्तो
दृष्टन्नापह्नुवीरन् लघुमनुमिनुयुश्शेषमिच्छन्ति शास्त्रात् ॥३॥

कार्यं किंचित् कुविन्दप्रभृतिविरचितन्दृश्यतेऽन्यच्च सर्वं
कर्त्रायत्तं श्रुतन्तत् क्वचिदपि न पराधीनताभङ्गदृष्टिः ।
पङ्ग्वन्धर्त्तारपाथस्तृणजलदतटिद्भ्राम्ययस्कान्तपूर्वैः
दृष्टान्तैर्न त्वदिष्टं फलति तदखिलं चेतनाधिष्ठितं नः ॥ ४ ॥

नन्वत्राचेतनानां स्वसमुचितविधौ कर्त्रधीनत्वमुक्तं
शास्त्रारम्भे विधातुर्व्यनुददनुमितिं किं परस्सूत्रकारः ।
पृच्छेयं नातितुच्छा शृणु तदवहितस्सर्वकृत्तानुमातुं
नापह्नोतुं च शक्यस्तदुभयनियमादर्शनादित्यमंस्त ॥ ५ ॥

सत्त्वाद्यान् द्रव्यभेदांस्त्रिगुणमितिसमाहारतः कल्पयन्त-
स्तेषां नित्यं विभुत्वे समविषमदशाद्यत्र कीदृग्वदेयुः ।
अन्योन्याध्यासक्लृप्तिः प्रकृतिपुरुषयोर्भोगमोक्षोपपत्त्यै
च्छायापत्त्यादिनीत्या कथमियमुभयाचेतनत्वे घटेत ॥ ६ ॥

पुंसां भोगापवर्गप्रभृति फलमिदन्तच्च सर्वं प्रधाने
द्रष्टृत्वादेश्च क्लृप्तिः पुरुष इह पृथग्द्रष्टृतादिश्च बुद्धौ ।
मुक्त्यै बद्धस्य शास्त्रं मुनिरकृत ततो नित्यमुक्तोऽस्मि चेत्या-
द्यन्योन्यव्याहतोक्तिं वृषलपरिणये जैनभक्ता जपन्तु ॥ ७ ॥

—( अथ महद्दीर्घाधिकरणम् ॥ ३ ॥ )—

कल्प्योपादानकं परममहदधिक्षिप्य नानाविधाणू-
पादानौघस्य दृष्टात् समधिकवपुषः कल्पनेऽनिष्टमाह ।
प्राग्ब्राधिष्ठानशून्यप्रकृतिपरिणतिः प्राङ्निरस्ताथ सेश्वं
सूक्ष्माणुद्रव्यमूलद्व्यणुकमुखजगत्सृष्टिपक्षं पिनष्टि ॥ ८ ॥

प्रागेवारम्भणोक्तावपहृतविषया प्रागसद्द्रव्यक्लृप्तिः
काणादानामिदानीं क्षिपति बहुमुखं कारणप्रक्रियांशम् ।
त्रेधा हेतौ विभक्ते त्वनुमितिशरणैस्तत्तदंशैर्यथार्हं
व्याघातादीन्विकल्पक्रमविविधगतीन् व्याहरत्यत्र सूत्रैः ॥९॥

दृष्टस्याणोः प्रसूतिं द्व्यणुकमणुमपि स्थापयन्तोऽनुमित्या
दृष्टाकारानुसारान्न निरवयवतायत्र वक्तुं क्षमेरन् ।
सर्वं सह्येत सूक्ष्मे प्रमितिपरवतां जालकालोकलक्ष्ये
तद्भागान् ख्यापयेद्वा स्मृतिरफलतया त्वान्यपर्येण नेया ॥१०॥

विश्रान्तिर्न क्वचिच्चेदवयवनिवहानन्त्यतो मानसाम्यं
मापत्क्षोणीभृतोस्स्यादिति यदि तदसत्तारतम्यादनन्ते ।
वैषम्यं पक्षमासप्रभृतिषु नियतं नह्यनन्तेष्वनिष्टं
पारावर्यञ्च जात्योन किमनुकथितं व्यक्त्यनन्तत्वसाम्ये ॥११॥

नादृष्टं किञ्चिदन्यच्छ्रुतिसरणिजुषान्दैवतानुग्रहादे-
रन्यत्वे तस्य तद्वैरधिकयतनवत् क्लृप्तिरादौ व्युदस्ता ।
यत्ने यत्नानपेक्षां न किमनुमनुते स्याददृष्टेऽपि तद्वत्
भूतस्थादृष्टवादे द्व्यणुकृदणुगतादृष्टकल्पोऽत्र लूनः ॥१२॥

नित्यं सम्बन्धमेके निजगदुरपृथक्सिद्धसर्वानुवृत्तं
नित्यं नित्येष्वनित्येष्वपि कतिचिदिमन्तावदायुष्कमाहुः ।
तत्तद्द्वन्द्वस्वभावप्रतिनियतिमुचां स्यान्न तेन व्यवस्था
गुर्वी त्वन्यस्य क्लृप्तिः कथमधिकजुषां नानवस्था न दोषः ॥१३॥

निर्धूते सूत्रकारैरवयविपरमाण्वात्मके द्रव्यवर्गे
विश्वं व्याप्त्यैकलक्ष्यं परममहदसत् स्याद्यथाद्रव्यमेव ।
नैवन्दृष्टाणुतत्संहति तदुभयसम्बन्धसिद्धेरबाधा-
दागन्तुक्षोपितार्थैः श्रुतिरपि जगदारम्भणं बम्भणीति ॥१४॥

—( अथ समुदायाधिकरणम् ॥ ३ ॥ )—

बाह्योक्ताचारभागश्रुतिविहतिवशाज्जैमिनीये निरस्त-
स्तत्त्वांशन्तर्कितन्त्रैः प्रतिवदति गुरुर्जैमिनेरत्र पादे ।
निर्धूते तत्र पूर्वं निरुपधिकनयैरर्धवैनाशिकोक्ते
पश्चात्वैनाशिकानां जिनगिरिशमतक्षेपतः प्राक् क्षिणोति ॥१५॥

बुद्धोऽसौ स्वावतारैस्सह परिगणितः श्रीधरेण स्वशास्त्रे
सर्वज्ञो नैव मुह्येच्च निखिलसुहृद्विप्रलिप्सेत कश्चित् ।
तस्मात् बुद्धोक्तभङ्गे भजति भिदुरतां सात्त्वतादीति चेन्न
स्वाभीष्टप्रत्यनीकप्रमथनमनसा मोहनादिप्रवृत्तेः ॥१६॥

दुर्वारा मोहनेच्छा निखिलजनयितुः केन मोहोऽन्यथा न-
स्तस्मात्कर्मानुरूपन्दिशति फलमसौ तत्त्वबोधं भ्रमं वा ।
स्वोक्त्यादेस्सिद्धमेतन्निरुपधि विषमो नैव तस्मात् समोक्तिः
कारुण्याद्विप्रलिप्सा न यदि वृजिनजं नेशनिघ्नं फलं स्यात् ।१७।

कल्प्यो बोद्धेति सर्वे सुगतमतविदो बोध्यमध्यक्षमेके
बुध्याकारानुमेयं कतिचन कतिचित् बोध्यमिथ्यात्वमाहुः ।
तत्तुल्यन्यायतोऽन्ये धियमपि जगदुः संवृतेरेव सिद्धां-
तान्सर्वांस्तर्कमानैर्धुनोति दितिजगुरूनद्य वैभाषिकादीन् ॥१८॥

एकद्व्यादिस्वभावैर्यदणुभिरथवा तत्तदेकस्वभावैः
क्षोणीदेहादिपुञ्जप्रसृतिरिति समाभाषि वैभाषिकेण ।
ज्ञानादानादि तत्र क्षणभिदुरतया बोध्यबुद्ध्योर्न सिद्ध्ये-
न्निर्बाधा प्रत्यभिज्ञाप्यनुमितिमथनी शेषमन्यत्र सूक्तम् ॥१९॥

बोधेष्वाकारभेदं निजमुपरितनेष्वर्पयन् प्राक्तनोऽर्थ-
स्तद्वैचित्र्यानुमेयः क्वचिदपि न तदाध्यक्षतेति प्रजल्पन् ।
प्राक् पश्चाच्च प्रवृत्तैर्विहतिबहुलतां गौरवञ्च ब्रुवाणैः
शिक्षादक्षैस्सगूर्ध्यैर्दमित उपशमं यातु सौत्रान्तिकाख्यः ॥२०॥

—( अथोपलब्ध्यधिकरणम् ॥ ४ ॥ )—

न ग्राह्यग्राहकौ स्तः क्वचिदपि विविधानादिसन्तानचित्रो
बुद्ध्यात्मा ग्रथात्मकोऽत्र स्फुरति भवदशातिक्रमे स्वात्मनैव ।
योगाचारोक्तिरित्थं विषयविषयिणोर्बोधबाधौ समानौ
मन्वानैर्वारणीया स्वपरविभजनाद्यत्र न क्वापि सिद्ध्येत् ॥२१॥

बुद्ध्यैक्यं बोध्यबोद्ध्रोर्न घटत इह ते सत्ययोरन्ययोर्वा
भिन्नत्वे ग्राह्यलब्धमत्तिमभिमनुपे नात्र चित्रैक्यमर्थ्यम् ।
चित्रन्द्रव्यं गुणं वा किमपि न च विदुः केऽपि भिन्नैकरूपं
तेनात्मख्यातिवादे स्थितिमिह भजतु स्वप्रकाशत्वमात्रे ॥२२॥

—( अथ सर्वथानुपपत्त्यधिकरणम् ॥ ५ ॥ )—

सत्त्वेऽसत्त्वे द्वये च द्वितयपरिहृतावप्यनिष्टप्रसङ्गै-
स्सर्वं शून्यञ्चतुष्कोट्यतिगतमिति नामानतस्त्वेष्टवादात् ।
अक्षोभ्यन्तत् प्रहाणे परमतमसती संवृतिर्नार्थसिद्ध्यै
तस्मादित्थं निषेधो निरुपधिक इह क्वाप्यदृष्टो न कल्प्यः ॥२३॥

प्राक्पश्चात् सत्त्वहानेर्गगनकुसुमवत् स्यान्न मद्ध्येऽपि कार्य-
म्मैवन्तत्रैव दृष्टेर्न यदि कथमसौ मध्यकार्यादिशब्दः ।
कार्यारम्भे निदानं विकृतिमदुत नेत्यादिचिन्तापि वन्ध्या
सामग्र्या कार्यसिद्धेर्भजति च गुणतां १कारणस्यानवस्था ॥२४॥

साध्यं हेतुस्तदङ्गप्रभृति च यदि वस्संवृतेरेव सिध्ये-
दस्मद्वाक्यानुरोधादिह न कथमसिद्ध्यादिदोषा भवेयुः ।
तत्र प्रामाण्यबुद्धिर्न यदि पठत तन्मानमित्यस्मदुक्तिं
वस्तुस्थित्या न मानन्त्विति यदि समं त्वन्मतस्थापकेऽपि ॥२५॥

अख्यातिस्त्वन्यथाधीर्विषयरहितधीस्सानधिष्ठानबुद्धि-
र्बाह्यार्थाकारयोगस्सदसदितरधीश्शून्यधीरात्मधीश्च ।

१. कारणस्यानवस्था. पा.॥

भ्रान्तौ सर्वत्र तत्तत्परमतकथकैराहृताः पक्षभेदाः
प्रायो बुद्धिर्यथार्था श्रुतिविदभिमता क्वापि भेदाग्रहादि ॥२६॥

—( एकस्मिन्नसम्भवाधिकरणम् ॥ ६ ॥ )—

संवादात् क्वापि भागे जिनमुनिवचसश्शेषमप्यस्तु मान-
न्तस्मात्तेनोपरोध्योपनिषदिति कथोल्लुञ्छनानान्दुराशा ।
वैषम्यस्यापि दृष्टेर्न यदि सुगतवागेवमेवास्तु सत्या
तेनान्योन्यं निरोधात् पुरुषवचनयोरप्रकम्प्या श्रुतिर्नः ॥२७॥

सच्चासच्च द्वयञ्च द्वितयसमधिकन्तच्च पूर्वैस्सहेति
स्यादस्तीत्यादिवाचा परिहितगगनैर्गीयते सप्तभङ्गी ।
व्याघातस्तैर्यदीष्टस्स्वसमयविहतिर्यद्यनिष्टः परोक्ते-
स्तद्वाक्यैर्न क्षतिस्स्यान्न च निरुपधिकः क्वाप्यसत्त्वादियोगः २८

वृद्धिह्रासौ यथार्हं प्रतितनु भवितान्देहमङ्ग विमान-
न्मुक्तौ नित्योर्ध्वयानप्रभृति गुरुतया नित्यपातं क्षमादेः ।
धर्मादेर्व्यापकत्वं गगनवदथवा तादृशं पुद्गलत्व-
न्दुस्तर्कैः कल्पयन्तश्श्रुतिनयकुशलैर्दूरमुत्सारणीयाः ॥२९॥

—( अथ पशुपत्यधिकरणम् ॥ ७ ॥ )—

सर्वं जानाति रुद्रश्श्रुतिषु च महितस्सत्यवादी च दृष्टः
प्रख्यातन्तद्व्रतञ्च क्वचिदुपनिषदीत्यस्तु मानन्तदुक्तिः ।
मैवन्देवेन दैत्यप्रमथनरुचिना मोहशास्त्राणि कुर्वि-
त्यादिष्टो ह्येष तन्त्रं निजमकृत ततस्तन्न शिष्टोपजीव्यम् ॥३०॥

प्राजापत्ये हि वाक्ये प्रकटमुपनिषत् प्राह देहात्मवादं
चक्रे लोकायतन्तत् सुरगुरुरभजन्मोहनत्वं मुकुन्दः ।
कण्वस्थाने च लौकायतिकपरिवृढा भारतेऽपि प्रगीताः
कार्यार्थं विप्रलम्भस्तदिह पशुपतेस्तद्वदेवोपपन्नः ॥३१॥

शैवाद्याख्याविशेषैः पशुपतिसमयस्याच्चतुर्धान्यथा वा

श्रुत्यान्योन्यं च बाधस्स्फुट इह तदसौ शापदुष्टाद्युक्तः ।
अग्राह्यान् [1]भैतिकानामनुसृतनिगमास्तस्मरुस्तत्प्रविष्टान्
तत्त्वेऽप्यत्रान्यथात्वं सुगतजिनमतानन्तरोक्तिः क्रमात्ता ॥३२॥

निष्ठा सर्वेषु नारायण इति वचनाद्धेत्यहन्तव्यतोक्ते-
र्मानत्वोक्त्या च तन्त्रान्तरमपि महितं वेदवद्भारतादौ ।
नातो बौद्धादिवत्तन्निरसनमिति चेत् सत्यमंशे तु बाध-
स्स्यान्नासौ पञ्चरात्रे क्वचिदपि तदिह स्वीकृतिर्वेदतुल्या ॥३३॥

दृश्यन्ते संगृहीता जगति हि समयास्ते च राज्ञानुपाल्या-
स्तस्मान्नः पक्षपातः क्वचिदनुचित इत्यर्भकप्रायचोद्यम् ।
मुग्धैरन्ये गृहीता भवतु समयसंरक्षणोक्तिश्च धर्म्यै
निष्ठैक्योक्तिस्तदन्यग्रहविहतिपरा तद्विरुद्धोक्तिदृष्टे ॥३४॥

—( अथोत्पत्त्यसम्भवाधिकरणम् ॥ ८ ॥ )—

प्रामाण्यं कर्मकाण्डस्मृतिनयवशतस्सात्त्वतस्यापि सिद्धं
पादेऽस्मिन् संगतिश्च प्रतिमतदमने नास्त्यमुष्येति चेन्न ।
प्रत्यर्थित्वं विरोधभ्रममपनयता पञ्चरात्रस्य वार्यं
दुस्तर्काद्युत्थितोक्त्या तदितरसमयेष्वित्यनुस्यूतसिद्धिः ॥३५॥

दृष्टास्मिन्वेदनिन्देत्यनभिमतमृषेस्सात्त्वते वैदिकत्वं
मैवं वैशद्यमूलस्तुतिपरवचने वेदवैरस्यहानेः ।
संगृह्याम्नायसारं प्रणयति भगवांस्तद्धि भक्तानुकम्पी
श्रौतस्मार्तादियद्व्यभजदिह विभुर्वैदिकन्तान्त्रिकं च ॥३६॥

वेदानां मानतोक्तेस्तदनुसरणतस्स्वस्य तन्मूलतोक्त्या
व्यावृत्तिर्भाति बाह्यागमत इति न तत्तुल्यभावोक्तिरार्षी ।
का हानिः क्षुद्रविद्याशबलमिति यथा तादृशे वेदभागे
मोक्षस्य प्रत्ययार्थं स्वगणितपरं सात्त्वते सिद्धिभेदाः ॥३७॥

---

१. वैदिकाना. पा ॥

जीवस्योत्पत्तिमाह प्रथयति च मनो जीवतत्त्वप्रसूत-
न्तच्चाहंकारहेतुं व्यपदिशति ततः पञ्चरात्रञ्च मानम् ।
मैवं जीवादिवाचो ह्यभिदधति विभोर्व्यूहभेदानिहात-
स्तत्तत्तत्त्वाभिमानान्नियतिमधिगता तेषु तत्तत्समाख्या ॥३८॥

जीवोऽत्रानाद्यनन्तः कथित इति तदुत्पत्तिपक्षो न दृष्ट-
श्शब्दस्संकर्षणादिर्न कथमपि समन्वेति जीवादिमात्रे ।
श्रौतस्सृष्टिक्रमश्च स्वयमनुपठितस्तद्विरुद्धश्च कल्प्य-
स्तस्माच्छ्रुत्या मिथो वा न विहतिरिह तत्तन्त्रतात्पर्यदृष्टेः ॥३९॥

सांख्या वैशेषिकाश्च श्रुतिपरिपठितन्धर्ममैच्छन्न तत्त्वं
तत्त्वाचारौ तु बुद्धक्षपणकपशुपत्युक्तिषु श्रुत्यपेतौ ।
वेदोपस्कारिविष्णुस्मृतिवदवितथे पञ्चराजाख्यतन्त्रे
तत्त्वं त्र्यन्तसिद्धं चरणमपि समं गृह्यभेदादिनीत्या ॥ ४० ॥

स्मर्यन्ते पञ्चयज्ञा मुनिभिरपि नमस्कारमन्त्रेण शूद्रे
तत्राधीतं हविष्कृत्प्रभृतिपदमिहाप्यंशतोऽस्याधिकारः ।
योज्या दक्षोक्तकालक्रमगतिरभिगत्यादिभेदे तदुक्ते
ग्राह्यं पश्विष्टिसोमप्रभृतियदखिलं युक्तितस्सङ्कलय्य ॥ ४१ ॥

जातावाचार्यशब्दः क्वचिदिति न तथाचार्यदेवो भवेत्या-
द्याम्नाते तत्प्रतीतिस्स्मृतिषु नियमिताल्लक्षणात्तत्प्रवृत्तेः ।
तद्वत् स्यात् सात्वताद्यावगतिकविषये रूढिभङ्गो न दोषः
विप्रादेरत्र शास्त्रे स्थितिरपि बहुधा भारतादौ प्रसिद्धा ॥४२॥

योगास्सांख्यव्युदासात् कणचरदमनादक्षपादानुयाता
बौद्धोन्माथेन लोकायतमुषितधियो जैनभङ्गात्तदुत्थाः ।
पत्युस्तन्त्रे पशूनां प्रकटितविहतौ तादृशापष्ठनिष्ठा
ध्वस्तास्तत्तुल्यतर्कागमशरणतया साकमस्मिन् कुदृग्भिः ॥४३॥

पादेऽस्मिन् कापिलस्थैः कणभुगनुगतैर्वृद्धवैभाषिकाद्यै-
र्योगाचाराभिधानैस्सुगतमतरहश्शून्यवादप्रसक्तैः ।
अर्हत्सिद्धान्तभक्तैः पशुपतिसमयस्थायिभिश्चोपरोधं
क्षिप्त्वाथो पञ्चरात्रे श्रुतिपथमवदत् पञ्चमाम्नायदर्शी ॥ ४६ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
द्वितीयस्याध्यायस्य द्वितीयः पादः ॥२॥

—( अथ द्वितीयस्याध्यायस्य तृतीयः पादः )—

उपोद्घातः ॥

सर्वं साङ्ख्यास्तु नित्यं क्षणिकमखिलमप्यत्र वैभाषिकाद्या
नित्यानित्यं समस्तं जिनपरिपठितां सप्तभङ्गीं पठन्तः ।
नित्यानित्ये विभज्याप्यभिदधति विपर्यस्य वैशेषिकाद्या-
स्थ्युन्युस्थांस्तान् निरुन्धन् श्रुतिभिरथ वियत्प्राणपादो युनक्ति ॥

वियदधिकरणम् ॥ १ ॥

पूर्वत्राधिक्रियायां पुरुषजनिवचो नित्यतोक्त्या निरूढं
व्योमोत्पत्तौ तथैव स्थितिरिति वचसोर्व्याहतौ वक्ति कश्चित् ।
सिद्धान्ती व्योमसृष्टिर्निगमशतमिता नान्यथा सिद्धिरस्यां
वाय्व्योमामृतोक्तिर्जनिविधिविहतेत्युक्तिवैषम्यमाह ॥ २ ॥
तेजः प्राथम्यदृष्टेरमृतवचनतोऽनंशकद्रव्यभावा-
द्व्योमन्युत्पत्तिवाक्याद्युपहितविषयैवात्मनीवेति चेन्न ।
प्राथम्यस्याश्रुतत्वात् प्रथमपठनतः क्व नेऽन्येन बाधात्
किंचामर्त्योक्तितुल्यं स्वमृतपदमिहानेकवाक्यैककण्ठ्यात् ॥३॥
यौक्तस्सत्कार्यवादश्श्रुतिभिरनुमतो नावयव्यस्ति सृज्य-
स्तत्तद्द्रव्येषु नामान्तरभजनसहायस्थया सृष्टिवादः ।

इत्याशब्दाद्यवस्थास्त्विव निरवयवद्रव्यवर्गेऽपि तस्मात्
व्योमन्युत्पत्तिरुक्ता श्रुतिषु तदितरोत्पत्तितुल्या न बाध्या ॥४॥

—( अथ तेजोधिकरणम् ॥ २ ॥ )—

कूटस्थाद्ब्रह्मणस्स्याज्जगदखिलमिदं पुत्रपौत्रादिनीते-
रेतस्मात् प्राण इत्याद्यपि सुगममिहेत्यादिरूढोऽत्र मोदः ।
प्राणखान्तादिपाठक्रमत इतरसंक्षोभणेऽतिप्रसङ्गा-
दीशानुस्यूतिदृष्टेः प्रथममिव परं सौति तत्तच्छरीरम् ॥५॥

—( अथात्माधिकरणम् ॥ ३ ॥ )—

द्रव्यं सर्वं हि नित्यं कथितमवयविद्रव्यभङ्गेन पूर्वं
नित्यत्वं सूत्रकारः पुनरपि पुरुषे किं विशिष्याभिधत्ते ।
सत्यद्यामान्तराद्यामिह नुदति दशां चेतनस्यानुपाधेः
प्रत्यक्त्वकर्तृत्वधर्मौ तदिह नियमितौ शाश्वतौ क्षेत्रिणोऽपि ॥६॥

सच्छब्दार्थातिरिक्तं ज्ञनिमदखिलमित्यैतदात्म्यादिसिद्धं
प्रोक्ता सृष्टिश्च जीवे निरवयवनयस्त्वस्थरादौ निरस्तः ।
जीवोत्पत्तिस्ततस्यादिति न सदकृताभ्यागमादिप्रसङ्गा-
न्नित्यत्वाजत्वकण्ठोक्तिभिरपि जननं त्वस्य देहादियोगः ॥७॥

देहात्मत्वे जनिस्स्यान्न तदिह घटते जातमात्रस्य रागात्
ज्ञाने किण्वादिमेघोपलशबलपटप्रक्रियाप्यत्र दुस्स्था ।
देहे गेहादितुल्या ममकृतिरनघा दोषतस्त्वैक्यमोहः
क्षिप्तं चैवानुमानं त्वलवदनुमितेश्शास्त्रतस्तर्कतश्च ॥८॥

देहं देहातिरेके तदवधिनियतप्राणबुद्ध्यन्तरूपं
धीसन्तानं च नित्यं प्रलयविलयिनं स्यात्सुमप्यापवर्गात् ।
डिण्डीराभं सदन्धायवितथयिकृतौ जीवमिच्छन्त इत्थं
निर्धूता दूरमत्र श्रुतिभिरितरवद्बाधदोषोज्झिताभिः ॥९॥

— ( अथ ज्ञाधिकरणम् ॥ ४ ॥ )—

कैश्चिज्ज्ञानत्वमात्रं कथितमुपधिजा ज्ञातृतैवात्मनोऽन्यै-
स्तत्राम्नायादिबाधं प्रथयति विविधं ज्ञोऽत इत्यादिसूत्रैः ।
पूर्वन्यायादमुष्मिञ् जनिलयरहिते नित्यबोधेऽत्र चोक्ते
संकोचाद्यर्हबुद्धेर्विकृतिवचनमप्यस्य सद्वारकं स्यात् ॥१०॥

ज्ञातृत्वं ज्ञानता च श्रुतिभिरभिदधे नाथ पक्षे पताम-
स्सर्वत्रात्मा न भायात् किमिति न निगमैर्देहिनोऽणुत्वसिद्धेः ।
स्वाभासैकस्वमूर्तेरविशदमहसस्सर्वदा भानमिष्टं
धीसंकोचात् सुषुप्तिप्रभृतिषु विशदोल्लेखमात्रोपरोधः ॥११॥

धर्मस्थे त्वेवकारे त्रिविधमपि भवेत्तद्व्यवच्छेदकत्वं
धर्मिण्यस्यान्वये स्यात्तदितरविषये तस्य धर्मस्य हानिः ।
ज्ञानात्येवेत्ययोद्धा न भवति जडता ज्ञानमात्रोक्तियार्थो
ज्ञानालोपादियाक्यानुगुणविषयतां यात्यसावेवकारः ॥१२॥

उत्क्रान्तिस्पन्दनाणूपमितिवचनतोऽणीयसश्शक्तिलाभे
धीभूम्ना यौगपद्यं त्ववयवनयतोऽनेकमूर्तिग्रहेऽपि ।
यत्राम्नातं विभुत्वं परविषयमिदं भाति तात्पर्यलिंगै-
र्जीवे व्यापित्ववादो मतिमहिमपरस्स्वच्छताद्याशयो वा ॥१३॥

—( अथ कर्त्रधिकरणम् ॥ ५ । )—

ज्ञातृत्वं पुंस इत्थं भवतु तदपि नामुष्य कर्तृत्वसिद्धि-
श्श्रुत्याद्यैस्तन्निषेधाद्विकृतिविरहितश्चेत्यसदृढश्रुबाधात् ।
कर्तृत्वापह्नवोक्तेरविकृतिवचसोऽप्यान्यपर्यं हि गीतं
कर्ताशास्त्रार्थवत्त्वात्तदयमिह न न स्याद्बोद्धुर्नियोगः ॥१४॥

किञ्च स्वोक्त्यादिभङ्गो निगदितुरहमः कर्तृताया निषेधो
यद्यन्यस्याहमर्थात्तदिदमपनिषद्धेदिनरसिद्धसाद्ध्यम् ।

भोक्तृत्वस्याप्यभावे प्रसजति वितथं बन्धमोक्षादिशास्त्रं
प्राणादानादिहारात् प्रकृतिसमधिकोऽस्मीति योगाच्च कर्ता॥१५॥

व्यापारज्ञानवाञ्छाप्रशकनयतनायोगयुक्तिस्तु मन्दा
कार्ये सामग्र्यपेक्षे विधितदितरयोर्लोकसिद्धा प्रवृत्तिः।
सार्थं शास्त्रं हितोक्त्या नियतिनियमिता शास्त्रयोग्या दशा सा
ज्ञाता कर्ता च भोक्ता तदयमिह पुमान् भाति सर्वैः प्रमाणैः॥१६॥

—( अथ परायत्ताधिकरणम् ॥ ६ ॥ )—

कर्ता नह्यन्यतन्त्रस्स्मरति खलु तथा पाणिनिश्चान्यथा चेत्
आज्ञा कुर्यान्न कुर्यादिति तु निगलिते धावनादेशवत् स्यात्
मैवं कर्माक्तकालप्रकृतिपरवशो कर्तृनां तत्फलं च
स्वीकुर्यात्मेशमात्रे श्रुतिशतविदिते ह्येष इत्थं दुरन्तः॥१७॥

साधारण्येन हेतुस्सलिलमिव विभुस्सर्वकार्याङ्कुराणां
वैषम्यं त्वाविरिञ्चात् प्रतिनियतफलैः प्राणिनां कर्मबीजैः।
साम्यं स्वस्य स्वगीतं श्रुतमपि तदिहाथोनिनीषादिभेद
स्तादृक्कर्मानुरूपं फलमिति नियतोऽनादिरेष प्रवाहः॥१८॥

काले दुःखोपशान्तिञ्जनयति भगवान् व्याजमात्रावलम्बी
या दुःखापाचिकीर्षा परहितमनसस्सैव तस्यानुकम्पा।
दत्ते देहादियोगं दिशति च निगमं वक्ति वेदान्तसारं
निस्सीमानन्दयागं निरुपधि समयं सौति पुंसान्तयैव॥१९॥

दोषस्स्यान्निग्रहांशो यमयितुरिति चेन्नोपमर्दानहत्वात्
स्वानिष्टेश्वरे हि प्रसजति न पदानिग्रमस्य प्रतीपम्।
कारुण्यं सावकाशं क्वचिदिति कथितं साक्षिनाथश्च सुस्थं
दृष्टे चैतत्स्वाभावे फलद इति धिया युज्यते तत्प्रपत्तिः॥२०॥

प्रत्यङ्ङात्माहमर्थः प्रमितिपरवतां कर्तृतादिश्च तस्मिन्
स्वेच्छापूर्वप्रवृत्तेरयमचिदधिकस्तावदीशानतुल्यः ।
ईशस्तु स्वेच्छयैव प्रयतत इति तन्निघ्नमन्यत्समस्तं
सारथ्यादिक्रमेण प्रतिनियतगतिस्स्यात् त्रयाणां प्रवृत्तिः ॥२१॥

कर्तृत्वं स्यात् कदाचित् करणवति परप्रेरणानिर्व्यपेक्षं
नोचेत् तन्निग्रहाद्यं कथमिति यदि न स्वेष्टपक्षेऽपि साम्यात् ।
स्वेनापथ्यप्रवृत्तन्नहि पुनरपि तत् कारयेयुर्दयार्द्रा-
स्तच्चेत्तस्य स्वभादितरदपि न किं निष्फलोऽधीतभङ्गः ॥२२॥

क्षेत्रज्ञानां समानां विषमयतनता तादृशादृष्टभेदा-
त्तादृष्टं त्वन्यदिष्टं नियमनभिदया शासितुस्तत्र भाव्यः ।
साक्षित्वाद्यश्चसेतुस्समनिगममितं प्रेरकस्त्वन्न रुन्धे
भाष्यादिग्रन्थलेशोऽप्यवहितमनसामैदमर्थ्यं भजेत ॥२३॥

कर्ता देवः फलानां न तु करणभृतः प्रेरकश्चेत्ययुक्तं
सर्वश्रुत्यादिकोपान्न भवति फलं कर्मणः पापचर्या
कर्माधीनं तु चिन्त्यान्यपि हि भवभृतो भाषितं भाष्यकारै-
र्जन्तूनान्देवतानामपि करणगणाधिष्ठितं वक्ष्यतीत्थम् ॥ २४ ॥

—( अथांशाधिकरम् ॥ ७ ॥ )—

जीवादत्यन्तभिन्नः पर इति बहुधा व्याहरन् सूत्रकारो
भेदाभेदश्रुतीनां घटकनिगमतश्शास्त्रयं च व्यपोढम् ।
उक्ताक्षेपे समाधावपि न समधिको हेतुरत्रास्ति सत्यं
पादांशाद्युक्तिमुख्यद्रढुकुमतिमतक्षिप्तये त्वंशचिन्ता ॥ २५ ॥

अंशत्वं रामकृष्णप्रभृतिषु घटतां विग्रहांशाधिकारा-
ज्जीवे ब्रह्मांशतोक्तिर्न हि निरवयवं ब्रह्म वक्तुर्घटेत ।

ब्रह्मादिष्वित्थमिष्टः प्रतिपुरुषमिह त्वंशता चेत्ययुक्तं
विश्वस्त्रष्टुर्बहु स्यामिति बहुभवनध्यातुरेकत्वसिद्धेः ॥ २६ ॥

व्योमैकं स्याद्घटाद्यैः पृथगुपधिमयैर्ब्रह्म बद्धांशमेव-
न्तत्रोपाधिव्यपाये भयभृदयमियाद्ब्रह्मतामित्ययुक्तम् ।
स्वानर्थारम्भदौस्थ्यात् प्रतिनियतगुणप्रत्यभिज्ञाद्यदृष्टे-
श्छिन्नाच्छिन्नांशचिन्तोदितबहुविहतेस्साम्यशब्दाच्च मुक्तौ ॥२७॥

मायोदन्वत्यपारे प्रतिफलति मृषावीचिषु ब्रह्मचन्द्र-
श्छायांशास्तस्य जीवा इति कतिचिदुशन्त्येतदुन्मत्तगीतम् ।
न ब्रह्मद्रष्टृतैषामचिदपि हि तथा स्वेन कल्प्यो न जीवः
क्लृप्तेःप्राक् स्यात्महानेस्त्रितयसमधिकः कल्पकस्त्वत्र मृग्यः॥२८

सन्मात्रं ब्रह्म सर्वानुगतमिह पुनर्नित्यसिद्धास्त्रयोंशाः
जीवेशाचित्प्रभेदादिति च कतिचनेदं च नोद्ग्रहणीयम् ।
सत्तामात्रानुवृत्तोस्तदधिकवपुषश्शासितुर्ब्रह्मतोक्ते-
र्ब्रह्मत्रैविध्यवाक्यं निरवयवतया निश्चितेऽन्याशयं स्यात् ॥२९॥

मेरोरंशः किरीटप्रभृतिरिति नयाच्चित्यभिन्नेऽशंतोक्ति-
स्साजात्याल्पत्वमूला गमयितुमुचितेत्यागमास्सम्पद्ये ।
अंशोक्तिस्स्यादमुख्या स हि निपुणधियामेकवस्त्वेकदेश-
स्तस्माज्जीवो विशिष्टे भगवति गुणवत्तत्प्रकारांश उक्तः ॥३०।

उक्तं नित्योपलब्धिप्रभृति परमते पूर्वमेव ह्यनिष्टं
भूयस्तादृक्प्रसङ्गः प्रकथित इह किं भोगसङ्कीर्णतादेः ।
मैवं पूर्वेहि बाह्यप्रसृतिमशमयत्साम्प्रतं ब्रह्मवाद-
व्याजोत्सिकान् कुदृष्टीन् परिहृतिरिति च स्याद्विपश्चन्मतेषु ॥
मिथ्याज्ञानादिचक्रे मरुति भगणवद्घूर्णमानस्य जन्तोः
प्रत्यक्तत्त्वप्रबोधाद्भयपरिहरणे सर्वतन्त्राविगीते ।

शुद्धात्मज्ञानगर्भां परमजनभिदामङ्गभेदांश्च वक्ष्य-
न्मीमांसारम्भसिध्यद्वपुषमपि पुनश्शोधयामास जीवम् ॥३२॥
फल्गुत्विर्व्योमादिकेऽपि क्रमभुवि च विभोः प्राच्यतत्त्वैर्विशिष्टा-
ज्जीवस्यौपाधिकौ तु प्रजननविलयौ चिद्घनज्ञातृतास्य ।
कर्तृत्वं पारतन्त्र्यं गुणतनुनयतो विश्वरूपांशताचे-
त्याम्नायान्योन्यबाधव्यपनयनवियत्पादसाध्यानि सप्त ॥३३॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
द्वितीयस्याध्यायस्य तृतीयः पादः ॥३॥



—( अथ द्वितीयस्याध्यायस्य चतुर्थः पादः )—

उपोद्घातः ॥



अक्षाद्युत्पत्त्यनूक्तौ नहि फलमधिकाशङ्कनं त्वत्र मन्द-
न्तत्संख्यादेः परीक्षाप्यनुकृतबलिभुग्दन्तचिन्तेति चेन्न
एतेष्वब्रह्मकार्यं किमपि कथयतां बाधनेनार्थवत्त्वा-
त्तत्साक्षात्संगतिस्स्यात् प्रथमचरमयोर्मध्यमानां प्रसङ्गात् ॥ १ ॥
अष्टावत्राधिकाराः प्रथममिह वियन्नीतिरुक्तेन्द्रियाणा-
न्तेजोबन्नोक्तनीतिन्द्रढयति चरमे व्यष्टिभेदस्य सृष्टौ ।
संख्यामानादिचिन्तास्वपि तदुपहितोपासनाद्यैः फलं स्यात्
प्राणादिभ्यः प्रमाता पृथगिति विशदीकर्तुमप्येष पादः ॥२॥

प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

अग्रे सत्तामृषीणां श्रुतिरभिदधती प्राणतां वक्ति तेषा-
न्नात्र ब्रह्मैव वाच्यं बहुवचनहतेस्तेन नित्यत्वसिद्धिः ।
मैवन्तत्सृष्टिवाक्याद्बहुवचनमिदं पाशनीत्यैव नेयं
प्राणत्वे परात्मन्यपि हि सुघटिते तन्निरुक्त्यादिसाम्यात् ॥३॥

—( अथ सप्तगत्यधिकरणम् ॥ २ ॥ )—

सप्त प्राणाश्चरन्तीत्युदितमभिहितास्ते विशिष्यापि योगे
तस्मात् सप्तेन्द्रियाणीत्यसदधिकवचोदृष्टितोऽत्रान्यपर्यात् ।
लक्ष्मैषां सात्त्विकाहंकरणपरिणतद्रव्यता चाविशिष्टा
भेदेनोक्तिः प्रधाने मनसि फलवती कर्मबोधेन्द्रियेभ्यः ॥४॥

देहव्याप्त्येकमक्षं कतिचिदकथयन् भागतो भिन्नकृत्यं
केचित् कर्मेन्द्रियाणि श्रुतिपथविमुखास्तत्यजुः क्षुद्रतर्कैः ।
क्षेत्रज्ञस्याहुरेके सह करणगणं बुद्ध्यहङ्कारचित्तै-
रन्ये तं चित्तवर्जं निजगदुरिति तानर्थतोऽत्र व्युदास ॥५॥

—( अथ प्राणाणुत्वाधिकरणम् ॥ ३ ॥ )—

सर्वस्यानन्त्यवादात् परिमितिनियमानुक्तितश्चेन्द्रियाणां
व्याप्तिस्सिद्धेतिचेन्न प्रयदखिलतनूत्क्रान्तिगत्यागतिभ्यः ।
वृत्त्या दूरस्थधीस्स्याद्भजनविधिपरेऽनन्ततोक्तिस्स्वकार्यैः
कन्दस्थानां च तत्तत्तनुषु विकृतिमद्द्रव्यभावात् पृथुत्वम् ॥६॥

—( अथ वायुक्रियाधिकरणम् ॥४॥ )—

प्राणः प्रागुक्तनीत्या परजनित इति स्थापितो वायुमात्र-
न्देहान्तस्तत्क्रिया वा स इति न पृथगुत्पत्तियादात् सहास्य ।
द्रव्यत्वन्द्रव्यवर्गे पठनत उचितन्नैव तत्त्वान्तरं स्या-
दोजस्त्वे वाय्ववस्थात्यजनयदिह तत्त्यागहानेः कदापि ॥७॥

—( अथ श्रेष्ठाणुत्वाधिकरणम् ॥ ५ ॥ )—

उक्तः प्राणस्त्रिलोक्या सम इति स जगद्व्यापकोऽस्त्वित्ययुक्तं
जीवात्तन्यायतस्तत्सहपठिततदुत्क्रान्तिगत्याद्यबाधात् ।
स्तुत्यर्था सर्वसाम्यश्रुतिरिह करणतंत्रभृत्यादिहेतो
देहेऽनल्पोपकारस्स्फुरति च दशधा वृत्तिभेदैर्विभक्तः ॥८॥

—( अथ ज्योतिराद्यधिष्ठानाधिकरणम् ॥ ६ ॥ )—

भोक्तृणान्दैवतानामपि तनुकरणाधिष्ठितिर्नेशतन्त्रा
तत्स्वातन्त्र्यप्रदानादिति न तनुभृतस्तच्छरीरं हि सर्वं ।
नित्ये तत्पारतन्त्र्ये क्वचिदपि न भवेद्राजसामन्तनीतिः
प्राणन्यायात् प्रभुत्वन्तदिह परवशं चेतनानां स्वशक्त्ये ॥६॥

—( अथेन्द्रियाधिकरणम् ॥ ७ ॥ )—

प्राणोऽपि स्यादृषीकं भृशमुपकरणात्तेषु मुख्यत्ववादा-
दुत्क्रान्त्यादौ च साह्यादिति यदि न [1]पृथक्छब्दतस्तस्य भेदात् ।
कण्ठोक्तादिन्द्रियत्वान्मनसि तु घटते गोबलीवर्दनीति-
र्न प्राणे सात्त्विकाहंकरणविकृतिता शब्दशाम्यादि मन्दम् ॥१०॥

—( अथ संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥ ८ ॥ )—

मन्त्राद्यैस्स्मर्यतेऽसौ सरसिजवसतिर्व्यष्टिनामादिकर्ता
जीवेनानुप्रविश्येत्यपि कथितमतः प्रेष्यकृत्यक्रमोऽत्र ।
तन्नैकोऽद्धि प्रवेष्टा त्रिवृतमकृत च व्याकरोदित्यधीत-
स्तत्तज्जीवान्तरात्मा सृजति स भगवांस्तद्दशं कार्यजातम् ॥११॥

या जीवेनात्मनेति श्रुतिरियमपि न ब्रह्मजीवैक्यमाह
प्रागेवैकोऽन्तरात्मा वपुरितरदिति स्थायिभेदाभिधानात् ।
तेनेशस्तद्विशिष्टस्स्वकरणकतयानुप्रवेशेऽपि कर्ता
जीवे तत्कर्तृतायामिह न हि घटते त्वाश्रुतिः कर्तृभेदात् ॥१२॥

अग्न्यादावण्डमध्यस्थितिमति कथितं रूपभेदैस्त्रिवृत्त्वं
तेजोबन्नाशितांक्तावपि विशदमिदन्तेन वेधास्त्रिवृत्कृत् ।
मैवं ब्रह्माण्डसृष्टिर्भवतु कथमसावत्रिवृत्कारपूर्वा
भुक्तेऽन्नादौ त्रिधोक्ता परिणतिरितरत् सन्निकृष्टः प्रदिष्टः ॥१३॥

---

१. पृथक्छब्दनैस्तस्य, पा ॥

## निगमनम् ॥

अक्षाणां जन्मसंख्यापरिमितय इह प्राणवाय्वोस्स्वरूप-
न्तत्सौक्ष्म्यन्देवतादेस्तदुभयविषयाधिष्ठितौ पारतन्त्र्यम् ।
प्राणस्यानिन्द्रियत्वं बहुविधचिदचिद्व्यष्टिनामादिबाधा-
त्पश्चीकर्तुः स्वनाभिप्रभवकवचितादूचिरे प्राणपादे ॥१४॥

नित्यत्वं व्योम्नि वाताद्यणुषु च पुरुषेऽप्यव्रतादीनपार्थान्
श्रोत्रादौ भूततावं मनसि च विभुतां नित्यतत्त्वान्तरत्वम् ।
प्राणेऽप्यात्मादिभावं स्वपदनियमनस्वैरितां स्वर्गिवृन्दे
वेधस्युन्मुक्तयन्त्रक्रममपि वदतां पादयुग्मेऽत्र भङ्गः ॥१५॥

तर्कैरापातसत्यैरचिदितकथने व्याहतिः स्थापिता स्यात्
सम्यग्भिर्वस्तु¹गत्या तदिति यदि तदा स्वाभिमानोपरोधः ।
तेनाद्यायो विरोधप्रशमनकृदसौ यौद्धयन्धोविरुद्ध-
स्सौत्री तर्कप्रतिष्ठा श्रुतिपथविमुखस्वैरवादेषु योज्या ॥१६॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कट-
नाथस्य वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
द्वितीयस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

॥ समाप्तश्चाध्यायः ॥ २ ॥

—:*:—

१. वृत्त्या. पा ॥

श्रीमते रामानुजाय नमः

# अधिकरणसारावली

—( अथ तृतीयस्याध्यायस्य प्रथमः पादः )—

## उपोद्घातः ॥

साध्या मुक्तिर्न चेत्स्यात्प्रसजति विफला साधनाद्ध्यायक्लृप्ति-
स्साध्या चेन्नश्वरी स्यात् कथमिह पुनरावृत्तिशून्योऽपवर्गः ।
मैवं ब्रह्मानुभूतिः परभजनवता प्रागसिद्धैव साध्या
धीसंकोचप्रणाशस्त्वियमिति च भवत्युत्तराध्यायनीता ॥ १

पादाभ्यामत्र पूर्वं जनयति भविनां ब्रह्मविद्याधिकारं
पश्चात्तेषामुभाभ्यां वदति बहुविधान्तामशेषैस्सहाङ्गैः ।
ऐश्वर्यादौ विरक्तिं निरवधिविभवे पूरुषे चाभिलाषं
विद्याभेदावलम्बन्तदुपकरणमप्याह पादैः क्रमेण ॥ २ ॥

संसारोद्विग्नचेतास्तनुभृदधिकरोत्यत्र शारीरकांशे
वैराग्यार्थस्तु पादः किमिति पुनरसौ सूत्रकारैर्निबद्धः ।
सत्यं प्राप्यान्तराणां निरयगणतुलारोपणम्मुक्त्युपाय-
प्रारम्भेऽभ्यर्हितं स्यात्स्वरस इह खलु स्पष्टदृष्टस्वबोधः ॥ ३ ॥

### तदन्तरप्रतिपत्त्यधिकरणम् ॥ १ ॥

देहाद्यं भोग्यनीत्या दिवि भुवि च गतौ तत्रतत्रैव लभ्यं
प्राणाद्यैर्भूतसूक्ष्मैरपि किमिह मुधा पूर्वदेहादुगृहीतैः ।
जीवस्याणोर्गतिं च स्वयमुपजनयेदीश्वरः प्राणनीत्या
मैवं स्वच्छन्दकृत्ये श्रुतिमितनियतौ गौरवोक्तेरयुक्तेः ॥ ४ ॥

नानाजातीयराशिं व्यपदिशति जनो भूयसांशस्य नाम्ना
प्राचुर्यादेवमापः पुरुषवचस इत्युच्यते भूतवर्गः ।

व्यष्टिं पञ्चीकृतैस्तैस्सृजति हि स विभुस्तारमम्यं पुनश्च
श्रद्धाशब्दस्त्विहापः कथयति निगमे तत्समाख्यावदुक्तेः ॥ ५ ॥

द्यौः पर्जन्योऽथ पृथ्वी तदनु च पुरुषो योषिदित्येवमेतान्
पञ्चाग्नीन् कल्पयित्वा परिकरसहितांस्तेषु पञ्चाग्निविद्या ।
श्रद्धाख्यं भूतसूक्ष्मं क्रमपरिणतितस्सोमवर्षान्नरेतो-
रूपं द्रव्यं सजीवन्तनुधरमरुतो जुह्वतीति ब्रवीति ॥ ६ ॥

—( अथ कृतात्ययाधिकरम् ॥७॥ )—

इष्टापूर्तादिरूपन्तनुभृदिह शुभं कर्म यत्किंच कुर्यात्
भुक्त्वा कृत्स्नन्तदन्ते पुनरवनिमियादित्यसद्दृष्टबाधात् ।
कार्त्स्न्येनैत्यश्रुतत्वात् सुकृतफलतया धतिभेदाद्यधीते-
स्तस्मात् प्रारब्धशेषैस्तदितरसहितैरापतत् स्वर्गपान्थः ॥ ७ ॥

धूमं रात्रिं च पक्षं तिमिरकलुषितन्दक्षिणावृत्तिमासान्
पश्चाल्लोकं पितॄणां गगनमपि मृतश्चन्द्रमभ्येति कर्मी ।
प्रत्यावृत्तौ तु चन्द्राद्गगनसततगौ धूममभ्रं च मेघं
व्रीह्यादीन्याति रेतस्सिचमथ जननीं यात नाचक्रवर्ती ॥८॥

आचारांशस्य साद्ध्यं चरणवचनतो जातिभोगादिकं स्यात्
कर्माचारौ विभक्तौ श्रुतित इति न सद्गत्यभावात्तथोक्तेः ।
मुख्यं वृत्त्या हि कर्मण्यपि चरणवचो नैकदेशे निरोद्धयं
जात्यादिः कर्मभेदप्रभव इति मिते चिन्त्याचारसाद्ध्यम् ॥९॥

प्रासाचारातिवृत्तौ प्रतिपदमृषयस्तस्मरुः प्रत्यवायान्
प्राचीनांहःप्रणाशन्तदनुसरणतः पुण्यकर्मार्हतां च ।
नानस्सत्कर्ममात्रात् त्रिदिव इति धिया तत्परित्यागशङ्का
नष्टाचारप्रदीपे स्वहतिजलसमश्शोधको वेदवर्गः ॥ १० ॥

—( अथानिष्टादिकार्यधिकरणम् ॥ ३ ॥ )—

सर्वेषान्देहपाते सति नियमवती चन्द्रमःप्राप्तिरुक्ता
तस्मात् पापोत्तराणां निरयगतिपुरस्कारिणी सेति चेन्न ।
लोकस्संपूर्यते तैर्न पर इति गिरा संकुचेत् सर्वशब्द-
स्ते तत्तद्यातनान्ते तत इह सहसा कुत्सितां यान्ति योनिम् ॥११

जन्मप्राप्तिर्जरायुप्रभृतिषु भविनां कर्मपाकैर्विचित्रा
भूयिष्ठैः पुण्यपापैस्त्वपवदनवती पञ्चमाहुत्यपेक्षा
तद्वद्धूमादिमार्गाः कति कति च शुभैरुत्कटैर्देहपाते
दिव्यं रूपं विमानादिकमपि सपदि प्राप्य याताः प्रसिद्धाः॥१२॥

—( अथ तत्स्वाभाव्यापत्त्यधिकरणम् ॥ ४ ॥ )—

आहुत्योर्देहवत्त्वं प्रथमचरमयोर्निर्विवादं तथा स्या-
ज्जन्मैवाकाशवायुप्रभृतिषु भवतेरन्वयादित्यसारम् ।
रेतस्सिग्भावनीत्या पृथगभिलपनानर्हतामात्रमत्र
शुभ्योः पुण्यप्रसाद्धयं फलमिह पठितं नास्ति भोगश्च मध्ये ॥१३

—( अथ नातिचिराधिकरणम् ॥ ५ ॥ )—

व्योमादिस्थित्यवस्था चिरमचिरमिति व्यक्तनिर्देशहाने-
श्शुक्लावस्थानयात्स्यादनियतिरिति न स्वारसिक्याः प्रवृत्तेः ।
व्रीह्यादिभ्यो हि दुर्निष्प्रपततरमिति तु श्रूयते तेन पूर्वं
शीघ्रं तत्तद्दशायास्त्यजनमिति परिज्ञायते वाक्यशक्त्या ॥१४॥

—( अथान्याधिष्ठिताधिकरणम् ॥ ६ ॥ )—

जन्म व्रीह्यादिनाम्ना श्रुतमिह तदिदं देवमर्त्यत्ववत्स्या-
न्नैरात्म्यं स्थावराणाञ्च निगमविदस्स्थापयन्तीति चेन्न ।
पुण्य स्यैव प्रवृत्ते फलपरिगणने स्थावरत्वोक्त्ययोगा
द्रेतस्सिग्वर्ष्मणीव ह्युपचरति जनिं स्थावरेऽप्यन्यदेहे ॥ १५ ॥

हिंसायोगादशुद्धं श्रुतिविहितमपि न्याय्यमिष्टादिकन्तत्
पापांशं व्रीहिभावप्रभृतिषु सुकृती भुंक्त इत्यप्ययुक्तम् ।
उक्ता मन्त्रार्थवादैः पशुहितमिति सा तच्चिकित्सावदेषा
ब्रूते यद्वं यथोऽसावचध इति मनुस्तौति निन्दा विहान्यत् ॥

कर्तुर्दोषन्दिशेत्संज्ञपनमिह पशोस्तत्क्रतोश्चोपकुर्यान्
तस्मादस्मिन्निषेधं क्षिपति न विधिरित्यब्रुवन् सांख्यभक्ताः ।
निर्धूते पश्वनर्थे न खलु तदुचितं पिष्टपश्वादिकल्प-
स्तत्तत्कालाधिकारिप्रतिनियत इति क्वापि न स्याद्विरोधः ॥१७॥

किञ्चोत्सर्गापवादक्रमसिह जहतः कीदृशी नित्यहिंसा
शुद्धं न क्वापि सिद्धयेत्तव हि विधिपदं स्पष्टतत्तन्निषेधम् ।
यत्रासत्यादि वैधं तदनु च विहिता विष्कृतिस्तन्निमित्ता
तत्रागत्या तथा स्यादितरवदथवा केवलन्तन्निमित्तम् ॥ १८ ॥

अश्लिष्टं विग्रहाद्यैर्नभ इव मुसलैः क्षेत्रिणं [1]केचिदूचुः
कर्माकर्तारमेवं फलमपि विविधोपाधिभेदैकनिष्ठम् ।
अव्यक्तस्यापवर्गं भवभुजमपि चानादिमुक्तस्वभावं
तेषामित्थं मनीषां बहिरकृत नयैरेष वैराग्यपादः ॥ १९ ॥

पादे त्वर्थाप्यस्मिन्वपुरिह विजहद्भूतसूक्ष्मैस्सहैयात्
भुक्तस्वर्गोऽवरोहेदनुशयसहितो मात्रया भिन्नमार्गः ।
चन्द्रप्राप्त्यादि न स्यान्निरयपथजुषामन्तरादौ सदृक्त्वं
तस्माच्छीघ्रोऽवरोहः परवपुषि परं व्रीहिपूर्वेऽपि योगः ॥२०॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
तृतीयस्याध्यायस्य प्रथमः पादः ॥३॥

---

१. केचिदाहुः. पा ॥

## —( अथ तृतीयस्याध्यायस्य द्वितीयः पादः )—

### उपोद्घातः ॥

—*—

ब्रह्मैव स्वैस्स्वभावैर्बहुमुखमवदत् प्राक्तनाध्याययुग्मे
तस्येहाकृष्य चिन्ता किमिति पुनरसौ साधनाध्यायमध्ये ।
मैवं विद्याः प्रभेत्तुं विशदयति परं तद्धि तद्रूपभेदा-
त्सिद्धोपायादिभावं प्रथयति च विभोः प्राप्यतृष्णाप्रथिम्ने ॥१॥

नैर्गुण्यं ब्रह्मणश्चेद्वितथ इह गुणैर्ब्रह्मविद्याविभागः
सोऽस्त्वेतैः कल्पितैश्चेच्छ्रुतिमतविहतिर्नात्र दृष्टिक्रमोऽपि ।
निर्दोषत्वं च नित्यं यदि वदसि मुधा दोषशान्त्यर्थयत्नः
कल्प्यं चेद्दुष्टता स्यात् प्रकृतिरिति परक्षिप्तये चैष पादः ॥ २ ॥

किंचादौ चिन्त्यभावः प्रमितिविषयता स्वप्रभत्वं सुखत्वं
विश्वाधिष्ठानता च स्वबहुभवनधीर्निर्विशेषे कथं स्यात् ।
सर्वश्रुत्यर्थहानिः स्ववचनविहतिस्सर्वमानैश्च बाधो
मायावैयात्यभाजामिति सगुणदशोपास्तिवादश्च दुस्स्थः ॥ ३ ॥

त्यक्तं दोषैर्गुणाढ्यं यदि पुनरिह तद्ब्रह्म चिन्त्येत पादे
जीवस्वप्नाद्यवस्थामननमथकथं जाघटीतीति चेन्न ।
स्वाप्नार्थस्रष्टृभावप्रभृतिबहुविधब्रह्ममाहात्म्यसिद्ध्यै
जन्तोरस्य स्वमुक्तावतिपरवशताज्ञप्तये चैतदत्र ॥ ४ ॥

पादस्यास्याद्यमर्धं कतिचिदधिजगुः पूर्वपादस्य शेषं
पश्चादर्धन्तु साक्षादनुघटितमुपास्त्यर्थतत्तद्गुणोक्तेः ।
एतज्जातीय ह्यं शबलितकथने चातुरीवैपरीत्या-
द्ब्रह्मोक्तौ जीवदोषप्रह इह तु मुखं तत्प्रतिद्वन्द्वसिद्धेः ॥ ५ ॥

स्वप्नेऽर्थास्सन्तु सृष्टास्तदपि बहुविधा दुस्त्यजा भ्रान्तिरत्र
प्रध्वस्तानामदार्नीतनवदनुभवात्स्थायितादिभ्रमाच्च ।
सत्यं श्रुत्यादिसिद्धे श्रुतपरिहरणायोगतस्सृष्टिमात्रं
स्वीकृत्यांशे तु बाधाक्रममपि हि यथाजागरं न त्यजामः ॥६॥

कश्चिद्योगप्रभावान्निजपरभवनस्वैरसंचारनीत्या
निष्क्रान्तः पूर्वदेहाद्विशति परवपुः पूर्वमाप्नोति भूयः ।
इत्थं स्वप्नेऽप्युदन्तस्थितिरिति कतिचिच्छ्वासवृत्त्यान्यथाऽन्ये
त्रिस्रोयद्वीप्रसूत्येतरतनुभजने सौभरिन्यायसिद्धेः ॥ ७ ॥

—( सन्ध्याधिकरणम् ॥ १ ॥ )—

उक्तं परया प्रजानां भवेति दहरवत् सत्यसङ्कल्पताद्यं
पुत्रादेश्चैव कर्ता प्रकृत इह सृजेत् स्वाप्नमर्थं च नैवम् ।
मुक्तौ ताद्दग्गुणोक्तेरनभिमतसमुत्पादनादेरयोगात्
स्वप्नानां सूचकत्वादपि निखिलजगत्कर्तुरेवापि सृष्टिः ॥ ८ ॥

कामकामं विधातेत्यपि गमुलुचितोऽनूद्यते चेश इत्थं
सोऽयं सुप्तेषु जागर्त्यपि विशदमिदं संपरिष्वङ्गवाक्यात् ।
तत्तत्कालावसानाः कतिकति नियता जागरेऽप्यर्थभेदा-
स्तत्तत्कर्मानुरूपं फलवितरणमित्येतदप्युक्तमाप्तैः ॥ ९ ॥

मायामात्रोक्तिलाभाच्छ्रुतिमुखसुगता विश्वमिथ्यात्वमाहु-
श्शास्त्रारम्भे तदेभिः कथितमिह ततोऽसङ्गतत्वादिदुस्स्थम् ।
मायाशब्दो न मिथ्यावचन उपचरत्यत्र तत् किन्ततस्स्यात्
सत्येऽस्त्रादौ प्रयोगादुचितनियमने सोऽयमाश्चर्यतार्थः ॥ १० ॥

—( अथ तदभावाधिकरणम् ॥ २ ॥ )—

स्थानं जन्तोस्सुषुप्तौ श्रुतिरनियमतो वक्ति नाड्यः पुरीत-
द्वादि ब्रह्मेति तस्मादिह भवतु मिथो नैरपेक्ष्याद्विकल्पः ।
तत्र प्रासादखट्वाशयनवदुपकृत्यन्तरैर्योजितानां

पक्षेपक्षे विकल्पः क्रमघटितचतुर्दोषयुक्तो न युक्तः ॥ ११ ॥

—( अथ कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥ ३ ॥ )—

मुक्तिब्रह्मण्यपीतिर्जहदसुखगणा तादृशीयं सुषुप्ति-
श्शुस्यैव स्थाप्यतेऽतस्तदनु तनुभृदुद्बुध्यमानस्ततोऽन्यः ।
मैवं कर्मानुवृत्तेस्स्मरणनियमतः पूर्व एवेति शब्दा-
न्मोक्षोपायादिशिष्टेस्स्वपदनुवदनात् प्राच्य एव प्रबुद्धः ॥ १२ ॥

जीवानादित्वमूचे दृषदनुकरणं क्षेप्स्यते चापवर्गं
स्वर्गाद्यर्थप्रवृत्तिः श्रुतिनयविदिता सौगताद्याश्च भग्नाः ।
कल्पान्तेऽप्येकतोक्तिर्नियमितविषया नामरूपप्रहाणात्
भूयश्चिन्ता सुषुप्ते प्रलयसमदशासंजिहासादिसिद्ध्यै ॥ १३ ॥

—( अथ मुग्धाधिकरणम् ॥ ४ ॥ )—

जाग्रत्स्वप्नौ न बाह्याग्रगमविरहितौ श्वासपूर्णा सुषुप्ति-
स्तस्मान्मुग्धिर्मृतिस्स्यात् प्रशमितकरणप्राणवर्गेति चेन्न ।
मृत्यादेर्हेतुभेदात् स्थितिमृतिविशयादुत्थितेश्चानियत्या
मर्तुं प्रक्रम्य मध्ये विरमति विधिनेत्यत्र तुर्यार्धभावः ॥ १४ ॥

पेटिकोपोद्घातः ॥

जन्तूनां जागरादिस्थितिषु भवति यद्वैशसं दर्शितं तत्
तत्तत्स्थानादियोगेऽप्यनघशुभगुणं ब्रह्म संशोध्यतेऽद्य ।
संसर्गैश्चर्यादिमूलान् परिहरति ततो दोषवर्गानुभाभ्यां
हीनत्वौदार्यहानी परमपनयते नीतियुग्मेन नेतुः ॥ १५ ॥

नैर्गुण्यं निर्गुणोक्तेर्गुणवचनमिहाऽऽपेक्षधर्मार्थवादो
नैर्दोष्यं वस्तुवृत्त्या तदितरदखिलं स्वाप्नभोगादितुल्यम् ।
इत्थं जीवेशभूमापहरणकुहनावादमोमुह्यमानान्
क्षेप्तुं न स्थानतोऽपीत्यधिकरणमथारभ्यतेऽनेकभङ्गम् ॥ १६ ॥

—( अथोभयलिङ्गाधिकरणम् ॥ ५ ॥ )—

हेयं वस्तु स्वतो यत् स्थितिरिह हि भवेद्दुःखकृत् स्वेच्छयापि
त्याज्यत्वं नान्यथा स्यादिति न निरुपधेर्हेयभावस्य हानेः ।
नित्यस्वातन्त्र्यभाजो भविन इव दशाभेदतो नाप्यवद्यं
श्रुत्यैवैकत्र देहे परतदितरयोश्शुद्ध्यशुद्धी ह्यधीते ॥ १७ ॥

ब्रह्मत्वन्नादिदेहेष्वणुरिव विभुरप्यात्मभावेन तिष्ठ-
स्तत्तच्छब्दाभिलप्यस्तदिह स न कथं तत्तदादेशवश्यः ।
मैवं न ह्याप्यतेऽसावविदितविरहाच्छासितृत्वान्न शास्यः
किंचिज्ज्ञो ह्यन्यतन्त्रो जगति हितविदा बोध्यते प्रेर्यते च ॥१८

उत्सर्गेणापवादं न खलु नयविदः क्षोभणीयं क्षमन्ते
तस्मादृब्राह्मे गुणादौ विधिविषयमतिक्रम्य तिष्ठेन्निषेधः ।
एवं शान्ते विरोधे नहि समविषयापच्छि दान्यायसिद्धि-
र्दृष्टो नित्यं निषेधः पर इह च ततस्स्यादुपक्रान्तिनीतिः ॥१९॥

सत्त्वं कार्यस्य गोपायति कथमसतस्सद्भवेदित्यधीति-
र्द्रव्यान्यत्वं हि कार्ये व्यपनयति परम्मृत्तिकेत्येवशब्दः ।
अन्तर्भावाद्विशिष्टे भगवति जगतां नेह नानेति युक्तं
निर्दिष्टेयत्त्वशङ्कां प्रशमयति परे नेतिनेतीतिचोक्तिः ॥ २० ॥

तत्तद्वस्तुप्रदेशे सकलगुणतया पूर्णदृश्यः परात्मा
वृद्धिह्रासादिभेदोज्झित इति हि जलाधारसूर्योपमोक्तिः ।
अस्पर्शोदाहृतिश्चेन्नहि घटकरकाकाशदृष्टान्तयुक्ति-
स्तस्माद्ब्रह्म द्विलिङ्गं द्विविधविभवमित्येव वेदान्तपक्षः ॥२१॥

—( अथाहिकुण्डलाधिकरणम् ॥ ६ ॥ )—

विश्वस्रष्टुस्स्वदुःखप्रजननमिह न स्वांशतोऽचित्स्वक्लृप्तौ
मृत्तत्कार्यादिकं च स्वरसमिह यदृदाहृतं सप्रतिज्ञम् ।
तस्माद्व्याकृतादिर्विहरणनियता विक्रियैवेति चेन्न

स्वांशे मौढ्यं वितन्वन्विहरति भगवानित्यनर्थानरोहात् ॥२२॥

कश्चिन्नित्याचिदंशो विविधविकृतिमान्ब्रह्मणीत्याहुरेके
फेनादिन्यायतोऽन्ये सति विकृतिवशाज्ज्ञाज्ञसर्वज्ञभागान् ।
चन्द्रज्योत्स्नादिनीत्या कतिचिदिह जगद्ब्रह्मणोरैकजात्यं
सर्वे ते सर्ववेदस्वरसगतिहतेरत्र विश्वासनीयाः ॥ २३ ॥

—( अथ पराधिकरणम् ॥ ७ ॥ )—

सेतुं तीर्त्वेत्यभीतेर्मितमिति वचनात् प्राप्यसंबन्धितोक्ते-
रन्याधिक्यश्रुतेरप्यतिवहननयात् कारणं प्रापकं स्यात् ।
प्राप्यं त्वन्यद्भवेदित्यसदनवधिके कारणे प्राप्यतोक्ते-
स्सेतुत्वाद्युक्तिरस्मिन् बहुभिरविहतां वृत्तिमङ्गीकरोतु ॥२४॥

सेतुत्वं सेतुतुल्याद्विधरणनियमाद्बन्धनाद्वात्र युक्तं
व्याप्तेऽप्यस्मिन्नुपाधेः परिमितिवचनं सार्थकं सूत्रितं प्राक् ।
चातुष्पद्यं च तत्तच्छ्रुतिभिरनुगुणं कल्प्यतेऽनन्तभूम्न-
स्त्वस्येत्येवामृतस्येत्यभिहितमथवा मुक्तिरेवामृतं स्यात् ॥२५॥

अन्यस्याधिक्यवादे परमवधितया कारणं यत्र दृष्टं
तत्र ह्यव्याकृतादिस्तदवधिरितरापेक्षयाऽसौ परश्च ।
यस्मादन्यत्परं नेत्यभिहितविषये तत्परोक्तेरयुक्ते-
रेवंत्यादित्यनूक्तिस्तत इति यदि वा व्याप्यमुक्तं तदस्तु ॥ २६॥

—( अथ फलाधिकरणम् ॥ ८ ॥ )—

आराध्यः कर्मकाण्डस्थितनयनिवहस्थापितानां क्रियाणा-
मध्यक्षो देवतानामनुपधिमहिमा मध्यकाण्डोदितानाम् ।
अत्राप्येतावतोक्तो भवभयचकितप्राप्युपास्त्यैकलक्ष्य-
स्तत्तच्छास्त्रार्थयोग्यं विशति फलमिति स्थाप्यतेऽथात्युदारः ॥

कृष्याद्वेर्मर्दनादेरपि भवति फलं द्वारतो वाऽन्यथावा
धर्माणां साधनत्वं श्रुतिभिरवगतं दोषबाधोज्झिताभिः ।

तस्मादीशप्रसादात् फलमिति तु वचस्तत्प्रशंसेति चेन्न
श्रौताराध्यप्रसादत्यजनकदनतोऽपूर्वक्लृप्तेरयोगात् ॥२८॥

यद्यप्याराध्यमूलं फलमिति फलितं देवताधिक्रियायां
कर्मापेक्षा तथोक्ता फलजननपरप्रेरणादौ तथापि ।
साक्षित्वानादरत्वप्रभृतिपरगुणं प्रेक्ष्य तत्प्रीणनादौ
शङ्कातङ्कैर्निरुद्धांस्त्वरयितुमधुना तादृशोदारतोक्तिः ॥२६॥

सम्राजस्सानुकम्पात् पितुरुचितविदस्साम्यभाजो वदान्यात्
स्थाने विन्दन्ति पुत्रा नियतरुचिभिदायन्त्रितास्तन्तमर्थम् ।
तत्र प्राप्यं स्वतो यद्विकृतिरिह यतस्तत्प्रशान्तिश्च यस्मा-
देयं यद्वा विशेषाद्गमनमपि यथालोकमत्रापि तत् स्यात् ॥३०॥

शुद्धानन्दे तदित्थं शुभगुणजलधौ सत्यनित्यस्वदेहे
देवीभूषायुधाद्यैरतिशयिनि कनद्भोगलीलाविभूतौ ।
शेषित्वाधारभावप्रभृतिबहुविधस्वास्तुसंबन्धदीप्ते
दृष्टिस्स्वर्गापवर्गप्रसवितरि हरौ निर्निमेषा श्रुतिर्नः ॥३१॥

पादे स्वप्नार्थहेतुस्तदयमिह सुषुप्त्याधृतिस्सुप्तगोप्ता
मुग्धोद्बोधादिकर्ता स्वनघशुभगुणोऽचिद्भिरंशी स्वदेहैः ।
पारम्पर्यस्यैकसीमा सकलफलद इत्युच्यते भक्तिमूर्ध्ने
सत्ये त्वेवं गुणाद्यावथ परभजने रूपभेदादि चिन्त्यम् ॥३२॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
तृतीयस्याध्यायस्य द्वितीयः पादः ॥२॥

---

—( अथ तृतीयस्याध्यायस्य तृतीयः पादः ॥ )—

उपोद्घातः ॥

---

तत्त्वज्ञानानुविद्धं हिततममनघं मोचयमाणस्य वक्तुं

तत्त्वे निर्धूय तर्कज्वरजनितमदासन्निपातप्रलापान् ।
निष्पन्ने तत्त्वबोधे न किमपि विदुषा साध्यमित्युद्गृणद्भ्यो
यावज्जीवानुवर्त्यं मुररिपुभजनं मुक्तिलाभाय वक्ति ॥१॥

भीमाभ्यो यातनाभ्यः पितृपथगमनावर्तनादेश्च बिभ्य-
त्तृष्णां कृष्णामृताब्धौ परिणयति परां यावता तावदुक्तम् ।
इत्थं लब्धाधिकारः परमधिकुरुते साधने यत्र साङ्गे
पादद्वन्द्वे परस्मिंस्तदिह बहुभिदावर्यरं निर्ब्रवीति ॥ २ ॥

एकस्मिन्नेव पादे निपुणनयकृता न द्वयोस्तर्कणं स्यात्
भेदाभेदश्च नैको विषय इह भवेदन्यहानप्रसङ्गात् ।
तस्मादस्मिन्प्रकीर्णा नयविततिरिति प्रेक्षितग्रन्थबोधे
वेद्यावच्छिन्नविद्यानियमकृदयमित्यैदमर्थ्यं समर्थ्यम् ॥३॥

आख्यावन्तं गुणानां निजगदुरुपसंहारतः पादमेतं
विद्यैक्यार्थं तदस्मिन्नपवदनतया भेदचिन्ता प्रसक्ता ।
इत्थं शुश्रूषुशङ्कामिह शिथिलयितुं भाषितं भाष्यकारै-
स्तद्भेदाभेदमीमांसनमिति विषयस्तत्र चोक्तोऽनुवृत्तः ॥४॥

निस्सीमानन्दनाडिन्धमनिरुपधिकानन्तसंपद्गुणौघे
विद्याभेदैर्विभज्य प्रणिधिरिह यदि प्राप्तिरप्यंशतस्स्यात् ।
मैवं तैरेव धर्मैस्तदितरसहितैः पूर्णकामस्य पूर्णं
प्राप्यं ब्रह्मैव नान्यत् किमपि फलमतस्तत्क्रतुन्यायसिद्धिः ॥५॥

सर्ववेदान्तप्रत्ययाधिकरम् ॥ १ ॥

भेदश्शब्दान्तराद्यैर्विधिषु नियमितः कर्मकाण्डे द्वितीये
संयोगाद्यैक्यतोऽन्यस्समुदयनियतात् सैव विद्यासु नीतिः ।
आद्यौ तेनैव शाखान्तरनयमुदितं चोदनादेरभेदा-
च्छुत्यैवाक्षिप्य भूयः प्रतिसमधिगतं भेदकान्यार्थतोक्त्या ॥६॥

शाखासु प्रक्रियान्या श्रवणमपि पुनर्द्दृष्टमत्राविशेषं
विद्याभेदस्ततस्स्यादिति न तदुभयं युक्तमध्येतृभेदात् ।
तेषामेवेति वाक्यात् क्वचिदुपजनिता भेदशङ्का त्वयुक्ता
स्वाध्याये ब्रह्मविद्याख्यमिद हि भवेत्तद्व्रतेनान्वयोक्तेः ॥ ७ ॥

रूपैक्यादैक्यसिद्धौ किमितरदुपसंहार्यमन्यो गुणश्चेद्-
भेदो न स्याद्विकल्प्यं तदिह किमफलातेन चिन्तेति चेन्न ।
वेद्याकारैक्यमैक्यं दिशति तदधिकं किंचिदाकृष्यतेऽङ्गं
कर्मण्यप्येवमेव ह्युपहृतिविषयो भेदकांशातिरिक्तः ॥ ८ ॥

—( अन्यथात्वाधिकरणम् ॥ २ ॥ )—

प्राग्वच्छुत्यविभेदेऽप्युपशमितभिदा तादृगुद्गीथविद्या
स्यादेका चोदनाद्यैस्तदनुभयथा रूपभेदोपलब्धेः ।
गाता गेयं च गेये सकलमसकलं चेति वैषम्यसिद्धौ
शेषाभेदोऽप्यभेदं न गमयति भिदा त्वेकभेदेऽपि सिद्धयेत् ॥९॥

छन्दोगोद्गीथशब्दस्तदवयवपरः प्रक्रमादिप्रसिद्धेः
कृत्स्नोद्गीथाभिधायी प्रकरणनियमाभावतो वाजिनां स्यात् ।
उद्गीथोक्तिश्च नैषामुपचरणवती गातरि प्रक्रमस्था
तत्कर्त्रा साधनीये द्विषदुपशमने तत्फलत्वोक्त्यबाधात् ॥१०॥

यद्यप्यत्रब्रह्मविद्या परपरिभवनाद्यैहिकार्थप्रयुक्ता
न ग्राह्या मोक्षशास्त्रे तदपि समतया तत्परीक्षेति केचित् ।
काम्या विद्याप्यनिष्टव्यपनयनमुखैर्ब्रह्मविद्योपयुक्तै-
स्तत्तत्साद्ध्यप्रभेदैर्भवति समुचितालोचनेत्याहुरन्ये ॥ ११ ॥

अज्ञातब्रह्मतत्त्वः कथमिव विमृशेत् कुत्रचिद्ब्रह्मदर्पि
तस्मात्तत्तादृशीनां समुचितमगतेरत्र मीमांसनं स्यात् ।
आददृध्युः कर्मणां च स्वफलवितरणे वीर्यवत्त्वातिरेकं

ब्रह्मध्यानार्थकर्मातिशयजननतः प्रस्तुतापेक्षितं तत् ॥ १२ ॥

—( अथ सर्वाभेदाधिकरणम् ॥ ३ ॥ )—

ज्यैष्ठ्यश्रैष्ठ्यादिसाम्ये कचन समधिकं भाति वासिष्ठ्यपूर्वं
तेनेत्थं रूपभेदाद्बहुनिगमगता भिद्यतां प्राणविद्या ।
मैवं वागादितत्तद्गुणपरवशतावर्णनस्याविशेषा-
द्वागाद्यैस्स्वस्वधर्मोपचरणमकृतं तावता स्यान्न भेदः ॥ १३ ॥

—( अथानन्दाद्यधिकरणम् ॥ ४ ॥ )—

नानाशब्दादिभेदादिति खलु भिदुरां वक्ष्यति ब्रह्मविद्यां
रूपं विद्यान्तरस्य प्रकरणपठितान्नान्यदन्यत्र योज्यम् ।
तस्मात् सत्यत्वपूर्वास्तदितरगुणवत् स्युर्व्यवस्थापनीया
मैवं ब्रह्मस्वरूपावगतिरिह यतस्तद्धि सर्वास्वपेक्ष्यम् ॥ १४ ॥

सत्यत्वं विश्वहेतौ बहुविधचिदचिद्विक्रियाजालहानेः
ज्ञानत्वं ज्ञातृभावात् स्वरवहु तथा स्वप्रकाशत्वतश्च ।
त्रिद्वयेकाभिस्तु सर्वं प्रमितमिह परिच्छित्तिभिर्ब्रह्मणोऽन्य-
त्तस्यानन्त्यं वियोगात्तिसृभिरपि सदा निर्मलानन्दधाम्नः ॥१५॥

उक्तं जन्मादिसूत्रे ननु निखिलजगद्धेतुता ब्रह्मलक्ष्म
स्यात्तेनैव स्वरूपावगतिरिह मुधा सत्यताद्येति चेन्न ।
हेतोरीशस्य हेत्वन्तरगतविविधावद्यवर्गप्रसङ्गे
शङ्कारूढे क्रमेणेतरविभजनतस्तस्य साफल्यसिद्धेः ॥ १६ ॥

नन्वाद्ध्यानं प्रियाद्यैरपि भवति शिरःपक्षपुच्छादिरूपै-
र्वाढं तत्र प्रियाद्यैस्तदवगतिरतस्ते तु सर्वानुवृत्ताः ।
पुच्छाद्यंशो निरंशे न भवति न च तद्दृष्टिरुत्कृष्टतत्त्वे
तस्माच्चित्याग्निरूपक्रमवदिह कृतं रूपणं ब्रह्मणि स्यात् ॥१७॥

आनन्दत्वप्रधानं कतिचिदिह विदुस्सौत्रमानन्दशब्दं

धर्मानन्दाभिधानं तदुभयवचनं चेति पश्यन्ति केचित् ।
ज्ञानोक्तौ चैवमेतत्तदितरसमता यावतास्यान्न शङ्क्या
तावद्धर्मानुवृत्तिर्यदुभयजगदे ब्रह्मणि स्थाप्यतेऽत्र ॥१८॥

—( अथ कार्याख्यानाधिकरणम् ॥ ५ ॥)—

आचामेदित्यपूर्वाचमनमिह विधेः प्राणविद्याङ्गतस्या
न्मैवं स्मृत्यादिसिद्धे परमनुविहिता प्राणवासस्त्वबुद्धिः ।
भुञ्जीतेत्यादिनीत्या विधिरपि घटते प्राप्तधात्वर्थनिष्ठः
प्रागुक्ता प्राणविद्या तदिदमवसरे चिन्तितं त्वङ्गमस्याः ॥१९॥
आद्यावन्ते च वासः परिधिरभिहितो मन्यतिश्चात्र दृष्टं
सा चाराध्यप्रियार्था स्तुतिरिह न भवेद्गत्यभावाभिनन्द्या ।
युक्तश्चापूर्वभावात् परिदधतिगिरा तद्विधानाभिसन्धिः
प्राणश्चाराधनीयः परिहितवसनो युज्यते सद्भिरद्भिः ॥२०॥

—( अथ समानाधिकरणम् ॥ ६ ॥ )—

शाखैक्येऽप्येतुभेदो न भवति न गुणः कश्चिदन्यो विधेय-
स्तस्मादुक्ताविशेषश्रवणमिह पुनः किं न विद्यां विभिन्द्यात् ।
मैवं यद्यप्यनूक्तिर्नतु गुणविधये कल्पते स्यात्तथापि
व्यक्त्यै सौकर्यतश्च व्यसनसमसनन्यायतस्त्वैक्यसिद्धेः ॥२१॥
छन्दोगैर्वाजिभिश्च स्फुटमनुपठिता भाति शाण्डिल्यविद्या
भेदाभेदावमर्शस्त्विह किमिति न सन्दर्शितो भाष्यकारैः ।
तद्ब्रूमो यत्रयत्राधिकपरिपठनं तत्रतत्राधिकाना-
मन्तर्भावादियुक्तावनधिकमधिकं चेति साधारणोक्तेः ॥२२॥
स्थानद्वन्द्वे वशित्वप्रभृतिविरहिताद्वाजिभिस्तद्युताच्चा-
धीता शाण्डिल्यविद्या तदिह भिदुरता कल्पनीयेति चेन्न ।
आरण्योक्तं वशित्वाद्यपि खलु विततिस्सत्यसङ्कल्पनायाः
साधीताग्नेरहस्येऽप्यधिकविरहतो नात्र विद्यैक्यबाधः ॥२३॥

—( अथ सम्यन्धाधिकरम् ॥ ७ ॥ )—

अदयादित्योपलक्ष्ये भगवति भजनं चोदनादेरभेदा-
देकं स्यात्तेन नाम्नोरनियतिरिति न स्थानतो रूपभेदात् ।
स्थानं तत्स्थत्वबुद्ध्यै ह्युपदिशति न चेत् स्याच्चरूपातिदेश-
स्तस्मादर्कात्तियोगादहरहमिति तन्नामनी स्थापनीये ॥२४॥

—( अथ सम्भृत्यधिकरणम् ॥ ८ ॥ )—

सम्भृत्यादिर्गुणौघः प्रकरणपठनाभावतस्सर्वविद्या-
स्वन्वीयेतेति चेन्न क्वचिदगतिकतो लिङ्गतस्स्थापितत्वात्
अल्पस्थानासु विद्यास्वघटितवतुपस्त्वोचितस्थानवृत्ते-
र्युव्याप्तेरेकमन्त्रे सहपठनवशात् तत्समस्थानितोऽन्ये ॥२५॥

—( अथ पुरुषविद्याधिकरणम् ॥ ९ ॥ )—

आख्यातैक्यादभेदः पुरुषविषययोर्विद्ययोरित्ययुक्तं
यज्ञाद्याकारक्लृप्तेरिह विषमतया रूपभेदप्रसिद्धेः ।
तादर्थ्यात्तैत्तिरीये परभजनफलम्मुक्तिरत्राप्यनुक्ता
छान्दोग्ये पूर्णमायुः फलमिति तु तयोर्भाति संयोगभेदः ॥२६॥
स्पष्टे रूपादिभेदे हठममुपनतो नामसाम्यादिमात्रात्
पुंविद्यापूर्वपक्षो मृदुरिति विफलाऽधिक्रियैषेति चेन्न ।
अन्यैव न्यासविद्या प्रकरणपठिता तद्विधानप्रधाने
स्वस्वातन्त्र्यादिद्धिर्गं विभजनमनयोरित्यतीवार्थवत्त्वात् ॥२७॥
यद्येवं यज्ञदृष्टिः परविदि पुरुषे चोद्यते सानुबन्धे
यज्ञस्यानङ्गभूतं कथमिह विविधं कल्प्यते तत्रतत्र ।
तस्मात् प्रक्रान्तविद्यास्तुतिरियमुचितेत्याहुरेकेऽन्यथाऽन्ये
तिष्ठत्वेतद्द्विधापि प्रकृतसुघटिता सम्प्रदायस्तु चिन्त्यः ॥

—( अथ वेधाद्यधिकरणम् ॥ १० ॥ )—

युज्येरन् ब्रह्मविद्यापरिसरपठिताश्शं न इत्यादिमन्त्राः
तादर्थ्यात् सर्वविद्यास्विति न तदुदिताधीतिशेषत्वलिङ्गात् ।
नो चेदन्येऽपितद्वत् सविधपठनतस्सन्तु शुक्रं प्रविध्ये-
त्येवंप्रायास्तदर्था न च घटत इदं लिङ्गतो दुर्बलत्वात् ॥ २६ ॥

—( अथ हान्यधिकरणम् ॥ ११ ॥ )—

शाखे द्वे मुक्तिभाजः क्वचन कथयतः पुण्यपापप्रहाणम्
बूतेऽन्या तत्प्रवेशं प्रियतदितरयोर्दायसंक्रान्तिकाले ।
हानं चोपायनं च क्वचिदिति पृथगाम्नातसंपर्कसिद्धि-
वाक्यं शाखान्तरस्थम्भवति हि विविधाकाङ्क्षया वाक्यशेषः॥३०

इत्थं ब्रह्मज्ञकर्मत्यजनमितरसंक्रान्तिसम्पृक्तमस्तु
स्याच्चिन्तायां व्यवस्था पृथगनुपठनादित्यसत् क्लृप्तिदौस्स्थ्यात्।
सर्वेषाम्मुक्तिभाजां द्वितयमपि यथोपास्ति सादृश्यं समानं
तच्चिन्तासौ तथा तन्मद्दिमिवद इति स्थापनीयोभयत्र ॥३१॥

कर्त्रा तेनैव भोग्यं शुभमितरदिति स्थापितं कर्मकाण्डे
तस्माद्ब्रह्मज्ञ कर्म द्विषति सुहृदि वा नापतेदित्ययुक्तम् ।
विद्यामाहात्म्यतो यद्विगलति विदुषः कर्म तत्साम्यतुल्यं
विद्वत्प्रद्वेषभक्त्योः फलमिति कथने वाक्यतात्पर्यसिद्धेः ॥३२॥

—( अथ साम्परायाधिकरणम् ॥ १२ ॥ )—

कर्मोद्धूतिर्मुमुक्षोः क्वचिदुपनिपति श्रूयते साम्पराये
मार्गेऽन्यस्यां द्विधैवं शकलश इह तच्चिन्तनं चास्तु मा भूत् ।
नह्युक्तं कर्मसादृष्यं पथि फलमथ गत्यर्थदेहानुवृत्ति
मुक्त्यै विद्यैव कुर्यादघहतिवचने पाठतोऽर्थो बली च ॥ ३३ ॥
निश्शेषं कर्म नश्येदिह यदि विदुषस्स्थूलदेहान्तमात्रे
विश्राम्येत्तस्य तावच्चिरमिति हि वचो नोर्थवत्त्वं गतेस्स्यात् ।

गत्वा सम्पद्य चाविर्भवनमिति न सम्भोभवीतीत्ययुक्तं
स्याद्धीसङ्कोचमात्रस्थितिकृदनुगतसूक्ष्मसंस्कारयोगः ॥३४॥

—( अथानियमाधिकरणम् ॥ १३ ॥ )—

पन्थास्स्यादर्चिरादिः फलमिह निखिलब्रह्मविद्यासु मा वा
प्रारभ्याधीतियोगात् प्रकरणनियता तस्य चिन्तेति चेन्न
सर्वासां तत्र इत्थं विदुरिति वचसाऽथात्र येचेति चोक्त्या
मार्गं साधारणेऽस्मिंस्तदनुसरणतस्तद्वदेवास्य चिन्ता ॥३५॥

हेयोपादेयमार्गद्वितयमुपदिशन्मुक्तिदाता मुमुक्षो-
र्योगी यःकश्चनैतत्सरणियुगलविन्मुह्यते नेत्यगायत् ।
तस्मादस्मादृशाधीत्यविशदविशदीकर्तृवाक्यावमर्शात्
ब्रह्मप्राप्त्यर्हकृत्स्नप्रणिहितघटितं मार्गचिन्ताविधानम् ॥३६॥

ज्ञानादेरर्चिरादेरपि किमभिहितं चिन्तनं सूत्रकारै-
र्विद्याङ्गत्वादिसिद्ध्यै यदि भवतु तदाऽनन्तरे पाद एतत् ।
मैवं विद्याङ्गतायामपि भजनमिवेदं च धीत्वाविशेषात्
कर्मादिभ्यो विभक्तं कथयितुमिह तत्सूत्रणं स्थानपाति ॥३७॥

—( अथाक्षरध्यधिकरणम् ॥ १४ ॥ )—

यस्यामस्थूलतादिः प्रपठित उचितं चिन्तनं तस्य तस्यां
नान्यस्याम्मानहानेर्न यदि नियमनं कस्य कुत्रेतिचेन्न ।
हेतुत्वोन्नेयदोषव्यपनयनमिह ब्रह्मविद्यासु सर्वा-
स्वानन्दाधिक्रियोक्तक्रमनियमितमित्यस्य सार्वत्रिकत्वात् ॥३८॥

सत्यत्वाद्यैस्स्वरूपावगतिरभिहिता सर्वविद्यानुवृत्त्या
भूयस्तत्तुल्यधर्मेष्वधिकरणमिदं स्याद्वृथैवेति चेन्न ।
कैश्चिज्ज्ञातस्वरूपे क्वचिदितरगतं किंचिदन्यन्निषेध्यं
व्यावृत्त्या न स्वरूपावगतिरत इति प्रेक्षणस्यात्र रोधात् ॥३९॥

व्याप्यस्यानन्त्यतस्तद्व्युदसनमपि हि स्यादनन्तं ततस्त-
च्चिन्ता किंचिज्ज्ञसाध्या जलधितरणवच्चोपदिश्येत नैवम् ।
तत्तत्सामान्यधर्मानुगमकवलिताशेषभेदोपदेशे
तादृक्चिन्तोपपत्तेरनवममिति वा गृह्यतां संगृहीतिः ॥४०॥

—( अथान्तरत्वाधिकरणम् ॥ १५ ॥ )—

सूत्रस्यारम्भलाभात् प्रथममनुभृतः पूर्वपक्षे निवेशः
सिद्धान्ते ब्रह्मणश्चेत्यधिकरणगतिस्तोकशङ्कापनुत्त्यै ।
साक्षाद्ब्रह्मेति वाक्यद्वयमवमृशतामन्यशंकैव न स्या-
दित्यालोच्याथ भाष्ये परविषयतया पूर्वपक्षोऽप्युपात्तः ॥४१॥

यत् साक्षादित्यमुष्मिन् श्रुतिशिरसि परं ब्रह्म वेद्यं यदेवे-
त्येतस्मिंश्चास्त्वथापि प्रतिवचनभिदा तत्र रूपं भिनत्ति ।
विद्याभित्प्रष्टृभेदोऽप्ययमिति यदि नानूद्य भूयोऽनुयोगात्
पश्चादुक्तश्च दोषात्यय इह न भिदां सौति साधारणत्वात् ॥४२॥

सद्विद्यायां तथा हि प्रतिवचनभिदा प्रश्नभेदानुसारा
द्वित्वैकत्वे विशेष्यं प्रकटयति परान्देवतामेव तत्र ।
तेनोपास्यः कहोलश्रुतमपि स च तत्संश्रुतं संकलय्य
ध्यायेतां ब्रह्म सर्वान्तरमिति फलवत्तत्र सब्रह्मचर्यम् ॥४३॥

—( अथ कामाद्यधिकरणम् ॥ १६ ॥ )—

आकाशं ताण्डिनस्तच्छयितमधिजगुर्वाजिनस्तेन विद्या
भिद्येतात्रेति चेन्न द्विविध इह यतो ब्रह्मनिर्देश एषः ।
सर्वाधारत्वपूर्वैः परतरविषयस्तामगाकाशशब्दो
विश्वेशाधारतोक्त्या सुषिरविषयताऽन्यत्र रूपन्तु नान्यत् ॥४४॥

छन्दोगानामुपास्यं प्रथितमिह गुणैरष्टभिर्ब्रह्म जुष्टं
तच्चान्येषां वशित्वप्रभृतिघटितमित्यस्तु रूपस्य भेदः ।
नैवं यत्तद्वशित्वाद्यपि तदिह भिदा सत्यसङ्कल्पतायाः

इत्यैकार्थ्यं निरूढं परमपि दहरोपासनन्तद्वदूह्यम् ॥४५॥

नन्वाकाशो गुणाद्यैः परइतिदहराधिक्रियायां पुरोक्तं
तस्मान्नान्यार्थशंकेत्यधिकरणमिदं नोज्जिहीतेति चेन्न ।
व्योमातीतं निमित्तं दहरमिदमुपादानमित्युद्गृणन्तः
पूर्वं क्षिप्ताः प्रसङ्गात् पुनरपि गमिताच्छिन्नमूलत्वमत्र ॥४६॥

—( अथ तन्निर्धारणानियमाधिकरणम् ॥ १७ ॥ )—

उद्गीथादौ क्रियाङ्गे भजनमपि भवेत् पर्णताद्युक्तनीत्या
कर्माङ्गन्तत्फलोक्तिस्त्विह नुतिरिति गोदोहनन्यायभङ्गम् ।
स्वर्गादीनांफलत्वं क्रतुषु तदधिको ह्यत्र वीर्यातिरेकः
पर्णत्वादौ न वाक्यं वदति करणतां कर्म चाहानुपास्तौ ॥४७॥

उद्गीथे प्राणदृष्टौ क्रतुघटितफलादन्यदुक्तं फलन्तत्
स्वीकृत्य प्राग्विचारः स्थितिि इति विहतः पूर्वपक्षोऽत्र मैवम् ।
अन्नत्येऽनङ्गभावे स्थिरनिहितधियस्तत्र धियैक्यशङ्का
त्यक्त्वाङ्गानङ्गभावौ पृथगपृथगिति स्याच्च पूर्वत्र चिन्ता ॥४८॥

—( अथ प्रदानाधिकरणम् ॥ १८ ॥ )—

कामानेतांश्च सत्यानिति वचनबलाद्धर्म्युपास्तेर्विभक्ता
धर्मोपास्तिस्तदर्थं गुणिपरिगणनं तन्त्रतोऽस्त्वित्ययुक्तम् ।
तत्तद्वैशिष्ट्यभेदात् प्रतिविधिगुणिनश्चिन्तनावृत्तिरर्थ्या
राजत्वाद्यैः पृथक्त्वाद्भवति हि हविषो दानमावृत्तमिन्द्रे ॥४९॥

तत्तद्भोगप्रतीतेर्गुणघटितपरोपासना भोगहेतु-
र्मुक्तिश्च स्यात् क्रमादित्यसदगुणवचस्यान्यपर्याभिधानात् ।
शास्त्रेऽस्मिन्नासमाप्तेः क्व फलमभिहितं निर्गुणोपास्तिसादृश्यं
नोच्छास्त्रं च प्रकल्प्यं गुणनियमनतः ख्यातिमांश्चैव पादः॥५०॥

प्रत्येकम्मेलनाद्वा दहरपगुणगणेऽप्यत्र संचिन्त्यमाने
गुण्यावृत्त्यर्थलब्धेः कथमिह तदनावृत्तिशंकेति चेन्न ।

बुद्धयारोहे गुणानां यदवधि गुणिनो रूपमथ्यं ततोऽन्यत्
विश्वैकान्तन्तश्चावृत्त्यनुघटिततदावृत्तिचिन्ताप्रवृत्तेः ॥ ५१ ॥

—( अथ लिङ्गभूयस्त्वाधिकरणम् ॥ १९ ॥ )—

प्रक्रान्ता दह्रविद्या प्रकटमुपरि च ज्ञायते तैत्तिरीये
तस्मादूर्ध्वानुवाकः प्रकृतविषयनिर्द्धारणार्थोऽस्तु मैवम् ।
तत्तद्विद्योदितैस्तैः परमिह पुरुषं प्रत्यभिज्ञाप्यशब्दैः
स्तस्मिन्नारायणत्वं वददधिकबलं प्रक्रियातो हि वाक्यम् ॥५२॥

वाक्यैस्तच्चार्थतायां दहरभजनमप्यत्र भागीति सार्थ-
स्तल्लिङ्गोपेतभागो न च बहुभिरलं योद्धुमेकं कृतार्थम् ।
नैकस्यास्योपकुर्यात् प्रकरणमलसं किंच सर्वोपजीव्ये
तत्त्वे तात्पर्यमत्र स्फुटमिति वितथा तत्परित्यागक्लृप्तिः ॥५३॥

आत्मैक्यं देवतैक्यं त्रिकसमधिकता तुल्यतैक्यं त्रयाणा-
मन्यत्रैश्वर्यमित्याद्यनिपुणफणितीराद्रियन्ते न सन्तः ।
त्रय्यन्तैरेककण्ठैस्तदनुगुणमनुव्यासमुख्योक्तिभिश्च
श्रीमान्नारायणो नः पतिरखिलतनुर्मुक्तिदो मुक्तभोग्यः ॥५४॥

—( अथ पूर्वविकल्पाधिकरणम् ॥ २० ॥ )—

अङ्गं पूर्वप्रसक्तेष्टकचितसमुपस्थापितस्य क्रतोस्स्यात्
बुद्धयात्माऽग्निर्मनश्चित्प्रभृतिरपि यथामानसं द्वादशाहे ।
तत्कार्यस्यातिदेशादिति न सदुदितो ह्यत्र विद्यात्मकोऽङ्गी
श्रुत्याद्यैरेव तस्मिन्नुपकृतिसमताबोधनार्थोऽतिदेशः ॥५५॥

कल्प्या ह्यत्र क्रियात्मा क्रतुरपि तदपि प्रागुपात्ताङ्गशक्त्या
वाक्यस्थैश्चानुबन्धैरिह समुपनतो भाति विद्यामयस्तु ।
दूरस्थाकृष्टयोगात् स्ववचनपठिताकृष्टयोगो१बलीया-

१. बलीयान्. पा ॥

नप्राप्तेऽर्थे विधित्वं ह्यनुवदनसमेऽप्याश्रितं तद्वदत्र ॥५६॥

—( अथ शरीरेभावाधिकरणम् ॥ २१ ॥ )—

तत्कालाकारिणस्स्यादहमिति भजने कञ्चुकस्यात्मनोऽर्था-
रासक्तेर्मामुपास्स्वेत्युदितवदिति चेन्नान्यथा संनिकर्षात् ।
शुद्धो ह्यात्माऽत्र साध्यः फलमतिरविनाभाविनी योद्भूक्त्यै
युद्ध्यासन्नेऽन्तरङ्गे सति विधिनियता तत्क्रतुन्यायसिद्धिः ॥५७॥

कर्तुर्भोक्तृत्वमात्रं गणयितुमुचितं ह्यभोगार्थयत्ने
स्वर्गाद्यर्थेऽन्यदेहानुगतिरपि परं स्वाधिकारानुविद्धा ।
मुक्त्यर्थे प्राप्यवस्थाप्रणिधिकथनतस्तत्क्रतुन्यायवाचा
चिन्त्यस्य प्राप्यतार्थो गमित इति कुतोऽतिप्रसङ्गादिशङ्का ॥५८॥

विद्याभेदेषु वेद्याकृतिविषमतया यावदुक्ते विचिन्त्ये
प्राप्यं सर्वोपपन्नं तत इह कथमप्राप्यचिन्तानिषेधः ।
तस्माद्ब्रह्मस्य चिन्तास्त्विति न कलुषितो ब्रह्मशब्दमुख्यः
प्राजापत्यात्तु वाक्यादकलुषदशया भावनीयत्वसिद्धिः ॥५९॥

—( अथाङ्गावबद्धाधिकरणम् ॥ २२ ॥ )—

उद्गीथादेर्विशेषे भजनविधिरसौ स्यात् स्वसांनिध्यगीते-
र्नैवं सर्वाङ्गिभूतक्रतुमुखन इहाशेषसांनिध्यसिद्धेः ।
सामान्यं व्यक्त्यपेक्षक्रियमपि नियमादर्शने व्रीहितावच्-
च्छन्दश्चोद्गीथमाद्यं वदति न तु भिदां छागनीतिस्तु नात्र ॥६०॥

—( अथ भूमज्यायस्त्वाधिकरणम् ॥ २३ ॥ )—

व्यस्तो वैश्वानरात्मा प्रतिनियतफलोदाहृतेश्चिन्तनीयः
स्तोपास्तौ फलोक्तिस्स्तुतिरिह यदि वा कृत्स्नरूपोऽप्युपास्यः ।
मैवं व्यस्तेषु दोषः पृथगनुकथितस्तत्फलोक्तिस्स्तुतिस्स्या-
दृष्टं ह्यष्टाकपालप्रभृतिषु च तथा तेन चिन्त्यस्समस्तः ॥६१॥

सामस्त्यस्यैव योगे द्रढिमघति महावाक्यतात्पर्यवृत्त्या

व्यस्तेमेष्वंशाननूद्य स्तुतिनियतनयाद्वाग्यपर्यं फलोक्तेः ।
नामादीनामुपास्तौ फलमवधियताऽपेक्षितं भूमवाक्ये
नाप्येवं प्रत्यवायश्श्रुत इति विषमोदाहृतिर्नार्थसिद्ध्यै ॥ ६२ ॥

—( अथ शब्दादिभेदाधिकरणम् ॥ २४ ॥ )—

सर्वासु ब्रह्म वेद्यं फलमपि खलु तद्ब्रह्मविद्येति चाख्या
ध्यानाद्युक्त्यैकलक्ष्ये विधिरपि भजने सर्वविद्यैक्यमित्थम् ।
तन्नाख्यारूपभेदात्तदुपहितविधौ तेन वैशिष्ट्यसिद्धे-
र्मिथ्यमध्वादिविद्याफलमिह च पृथक्काम्यविद्यासु चैवम् ॥६३॥

नानाशब्दादिभेदादिति कथमवदत् सूत्रकृच्छन्दसाम्ये
नह्येते यागदानादय इव भिदुरा भक्तिविश्रान्तिसिद्धेः ।
सत्यं शब्दस्य भेदस्त्वयमुपचरितो रूपभेदप्रढिम्ना
ज्ञानं यच्चाविधेयं करणमिह जगुस्तन्निरासेऽभिसन्धिः ॥६४॥

यद्वा शब्दादिभेदादिति तु कथयता सूत्रकारेण सम्यङ्-
न्यासोपासे विभक्ते यजनहवनवच्छब्दभेदादभाक्तात् ।
आख्यारूपादिभेदश्श्रुत इतरसमः किञ्च भिन्नोऽधिकार-
श्शीघ्रप्राप्त्यादिभिस्स्यात् जगुरिति च मधूपासनादौ व्यवस्थाम्॥

—( अथ विकल्पाधिकरणम् ॥ २५ ॥ )—

ज्योतिष्टोमाग्निहोत्रप्रभृतिवदधिकानन्दसिद्ध्यै समुच्चि-
त्यैतास्स्युर्ब्रह्मविद्या न च भजनविधिः कश्चिदेकं प्रति स्यात् ।
क्रतुन्ताः कालभेदे क्षममिति न मिथोवासनास्थैर्यबाधात्
सम्पूर्णब्रह्मलब्ध्यै पृथगिह च विधिः प्रायणान्ते समाधौ ॥६६॥

रूपादीनां विशेषैर्ननु परभजनन्नैकरूपं विभक्तं
सामग्रीभेदतस्तत्फलमपि विषमं सम्मतन्यायतस्स्यात् ।
न स्यात् सर्वासु विद्यास्वपि हि फलतया वदयते भोगसाम्यं

प्राप्त्यैक्यं च प्रसिद्धं शत्रुसरणिजुषां लोकतो वेदतश्च ॥ ६७ ॥

—( अथ यथाश्रयभावाधिकरणम् ॥ २६ ॥ )—

तत्तद्विद्यासु तादृक्फलतरतमतां वारयित्वा प्रसङ्गात
प्रागुक्तोद्गीथविद्याफलमथ पुनराक्षिप्य गाढीकरोति ।
माभूदुक्तं स्ववाक्ये कथमिह तु न सा पर्णमय्यादिनीतिः
स्पष्टा खल्वत्र विद्याफलकरणतया वर्तमानोक्तितोऽपि ॥ ६८ ॥

तादर्थ्यं नात्र कर्मश्रुतिरवगमयेदाश्रयालम्बमात्रा-
द्विद्याहानौ च युक्तं प्रतिविधिवचनं तत्फलार्थप्रसङ्गे ।
तारे सोपासनेऽस्तु स्तवनमनुगवात्तावता सातु नाङ्गं
प्राग्वक्तव्यस्य हित्वा वच इदमुपरि स्थापनीयप्रसक्त्यै ॥ ६९ ॥

विद्यैक्योद्गीथविद्याद्वितय विभजनप्राणविद्यैकभावा-
स्सर्वास्वानन्दातदेर्गुणिवदनुगतिः प्राणवासस्त्वदृष्टिः ।
शाण्डिल्यैक्यं विभज्य स्थितिरहरहमोस्सम्भृतेस्स्थानसीमा
पुंविद्याया विभेदोऽध्यननियतता शत्रुइत्यादिकानाम् ॥ ७० ॥

हानावन्योन्ययोगस्तदुचितसमयो देवयानादिसाम्यं
सर्वत्रास्थूलतादिव्यतिहरणमथानेकशिष्यश्रुतानाम् ।
दृष्टोपास्त्येकभावो गुणफलविधिरुद्गीथमाश्रित्य दृष्टौ
गुण्यावृत्तिर्गुणार्थां निखिलपरतरोपास्तिवेद्यावसायः ॥ ७१ ॥

विद्यारूपा मनश्चित्प्रभृतय उचितज्ञानरूपक्रतुस्थाः
देत्री शुद्धोऽनुचिन्त्यः क्रतुगुणसकलोद्गीथपूर्वेषु दृष्टिः ।
सामस्त्येनैव वैश्वानरभजनमथानेकविद्योपपत्ति
मोक्षार्थानां विकल्पः पुनरनियतिरुद्गीथदृष्टेरिहोचे ॥ ७२ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीवेङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
तृतीयस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

—( अथ तृतीयस्याध्याय चतुर्थः पादः ॥)—

## उपोद्घातः ॥

कर्म प्राक्चिन्तयित्वा ननु परममथ ब्रह्म जिज्ञास्यमुक्तं
पादे विद्याङ्गतोक्तिः पुनरिह वितथाऽनेकधा त्याज्यतोक्तेः ।
मैवं कर्मैव तत्तद्गुणयुतविनियुक्त्यन्यभावेन भिन्नं
विद्यानिष्पत्तिहेतुः किमपि च सुकृतं स्यान्निवृत्तैकसंज्ञम् ॥१॥

त्यागः काम्यक्रियाणां क्वचन परविदः क्वाप्यनर्हक्रियाणां
स्वैकाधीनत्वबुद्धेः क्वचिदनुपधिकस्वार्थबुद्धेश्च गीतः ।
अत्राहिंसादिकानामघविहतिकृतां सर्वसाधारणानां
ब्रूते वर्णाश्रमादिप्रतिनियतिमतामप्युपास्त्यङ्गभावम् ॥२॥

—( अथ पुरुषार्थाधिकरणम् ॥ १ ॥ )—

कर्तात्मा कर्मणांयस्तदधिकमिह न ब्रह्म तस्मान्मखादौ
तद्बुद्ध्यै योपयुक्तास्स्युरुपनिषद इत्यर्धमीमांसकोक्तौ ।
जीवान्यब्रह्मचिन्तात्मकभजनविधौ कर्मणामङ्गभावं
प्राह त्रिप्तान्यलिङ्गैः कलुषशमनतस्सत्त्वसंवर्धकानाम् ॥ ३ ॥

पादैरत्रैवमेकादशभिरपि परं ब्रह्म वेद्यं निरूढं
भूयः किं क्षुद्रलिङ्गैर्गगनलिपिनिभैः क्षोभ्यते ब्रह्मविद्या ।
सत्यं तत्राहगल्पश्रुतमतिकलहत्रासितच्छात्रडिम्भ-
स्तोमक्षेमाय जैमिन्यहृदयकथितं पक्षमुत्क्षिप्य हन्ति ॥ ४ ॥

कुर्वन्नेवेति वाक्यं परविदि नियताचारतोक्तिस्सहत्वेऽ-
न्वारम्भो धीक्रियाभ्यामपि न नियमयेदङ्गतामङ्गितां वा ।
विद्यापूर्वं क्रियाणां करणमनुवदद्वाक्यमन्यार्थमुक्तं
नह्येतद्ब्रह्मविद्यामनुवदति नचोद्गीथविद्याक्रियाङ्गम् ॥ ५ ॥

स्वाध्यायप्राप्तये ह्यध्ययनमुदितमाधानवच्चोत्तराङ्ग

विद्याङ्गं चार्थबोधो भवतु यदधिका सा स्वरूपैः फलैश्च ।
नित्यात्मज्ञानमात्रं क्रतुषु नियमतोऽपेक्षितं नान्यविद्या
काम्यत्यागस्तविद्ये कथमिह भविता साहि यद्यङ्गमेषाम् ॥६॥
नाङ्गं विद्या मखादेर्नहि तदधिकृतेष्वेव तामामनाम-
स्यात्तत्तत्कर्मणां सेत्यपि न बहुविधाद्वैपरीत्योपदेशात् ।
जाबालैरूर्ध्वरेतोविधिरपि पठितोऽनूद्यतेऽन्यैश्च तस्मात्
प्राप्तिर्ग्राह्याऽन्यथापि स्वयमिह तु विधिस्तन्निषेधस्सरागे ॥७॥

—( अथ स्तुतिमात्राधिकरणम् ॥ २ ॥ )—

जुह्वादिस्तोत्रनीत्या भजतु रसतमाद्युक्तिरङ्गस्तुतित्वं
मैवं तत्तद्विधानप्रकरणरहितापूर्वनिर्देशयुक्तेः ।
तत्तद्दृष्टेर्विधानं विविधमिह समालक्षितैतत्समीपे
तेनानन्यार्थशिष्टे फलयति च विधिर्युज्यते कल्प्यमानः ॥८॥
किञ्च प्राप्तेरभावान्न तदनुवदनं नाधिरोप्य स्तुतिर्वा
युक्ता विध्येकवाक्यं गतिरियमगतेस्सात्र नासक्तिहानेः ।
उत्कर्षे कल्प्यते चेदगतिकविषये तत् प्रसह्य प्रसह्यं
मध्ये विद्याविधीनां वचनमिदमिति स्यात्तु विध्यर्थमेतत् ॥९॥
विध्यर्थत्वेऽपि युक्ता स्तुतिरियमसतः कीर्तनादित्ययुक्तं
दृष्ट्यु देशेऽतिचारादथ च विशयनं स्यादिति स्वर्भकोक्तिः ।
नित्येऽस्मिन्नप्रमाणं प्रसजति निगमो युक्तिवार्यत्वपक्षे
त्वित्थंभावे युयुत्स्ये वच इह फलवद्दृष्टिविध्यर्थमेव ॥१०॥

—( अथ पारिप्लवाधिकरणम् ॥ ३ ॥ )—

विद्याख्यानभेदा विधिमहिमभृतास्सन्तु पारिप्लवार्था
न स्युर्विद्याविधानैः प्रकरणपठितैरेकवाक्यत्वदृष्टेः ।
मन्त्राद्याख्यानमात्रं भवति च कथितं तत्र पारिप्लवार्थं
तेनाकांक्षानिवृत्तौ न तदधिकपराख्यानतादर्थ्यक्लृप्तिः ११॥

—( अथाग्नीन्धानधिकरणम् ॥ ४ ॥ )—

यज्ञादेरङ्गभावान्न तदनधिकृतेष्वग्निनोऽधिक्रिया स्या-
द्विगैवंनोर्ध्वरेतस्स्विति न बहुविधस्याश्रमाङ्गार्हतोक्तेः ।
विद्यायोगश्चतुर्णां विधिरपि च समश्श्रूयते स्मर्यते च
प्रायेणौचित्यभूम्ना मुनिभिरभिहितं क्वापि मोक्षाश्रमत्वम् ॥१२॥

—( अथ सर्वपेक्षाधिकरणम् ॥ ५ ॥ )—

त्यक्ते यज्ञादिधर्मे परभजनविधेरूर्ध्वरेतस्तु दृष्टा
विद्या तेनानपेक्षा गृहपति च भवेदित्यनालोचितोक्तिः ।
यज्ञेनेत्यादिकाभिश्श्रुतिभिरवगता ह्यस्य सातत्यसाध्या
जिज्ञासार्थत्ववादो जिगमिषति पदेत्यादिनीत्या निवर्त्यः ॥१३॥

नान्विच्छार्थत्वहानिर्जिगमिषति पदेत्यादिके गत्यभावा-
च्छ्रुत्युक्तेऽस्मिंस्तथा नेत्यसदिह च यतो गत्यभावस्समानः ।
इच्छा स्याद्धीविशेषात्तदनुपजनने कर्मभिस्सा न साध्या
जिज्ञासां प्राप्तुमिच्छोर्न च न भवति तज्ज्ञानमि[illegible] पुरैव ॥१४॥

नन्वत्रेच्छानुवृत्तिं प्रति विहितमिदं कर्म योऽयं ततः किं
नेच्छार्थं धीविशेषप्रजननमुदितन्तावता वारितं स्यात् ।
ज्ञानार्थं कर्मविध्यन्तरमपि विविधं नापलापक्षमं ते
निद्ध्यानन्यायतोऽनस्त्यनुवदति विदेरिष्टतां सम्प्रयोगः ॥१५॥

—( अथ शमदमाद्यधिकरणम् ॥ ६ ॥ )—

यज्ञादिव्याप्तत्वादनिभृतकरणे सर्वकालं गृहस्थे
शान्त्यादीनामयोगात्तदितरनियतास्ते गुणा इत्ययुक्तम् ।
प्रव्रज्यादिस्थितानामपि तदुपधिकानेकधर्मप्रवृत्ते-
स्तत्त्वद्वयं सहने चेत् सह तदपि फलाद्युज्झनं चात्र तुल्यं ॥१६॥

प्रज्ञातस्वापराधाः प्रभुमनुतपने लोकसिद्धैरुपायै-
रात्मार्हैरर्चयन्तः क्रमशमितरुषस्तस्य सेवां लभन्ते ।

इत्थं नः शास्त्रसिद्धैरिदमनिदमिति स्वाधिकारे विभक्ते
निष्प्रत्यूहः प्रसादो निरुपधिसुहृदः श्रीधरस्याधिगम्यः ॥१७॥

—( अथ सर्वान्नानुमत्यधिकरणम् ॥ ७ ॥ )—

आहारस्य व्यवस्था न भवति वचनात् प्राणविद्याधिकर्तुः
सामान्यस्थो निषेधो यदलचति हि विधौ संकुचेदित्ययुक्तम् ।
अङ्गत्वेनाविधेस्स्यादनुमतिवचनं प्राणभङ्गप्रसङ्गे
पश्यैतत्प्राणनिष्ठादधिकमहिमनि ब्रह्मनिष्ठेऽप्युपत्तौ ॥ १८ ॥

—( अथ विहितत्वाधिकरणम् ॥ ८ ॥ )—

यज्ञादेः कर्मणोहि श्रुतिभिरभिदधे ब्रह्मविद्याङ्गभाव-
स्तस्माद्ब्रह्मनिष्ठे तदननुसरणात् स्वैरितैवास्तु मैवम् ।
नित्यत्वस्यापि सिद्धेस्तदुचितविनियुक्त्यन्यभावानुसारा-
त्तन्त्रं काम्याग्निहोत्राद्विवदिह परविभित्यवर्गेऽपि योज्यम् ॥१९

—( अथ विधुराधिकरणम् ॥ ९ ॥ )—

दारालाभे विरक्तेर्न्न दिमनि च भवेदन्तरेणाश्रमान्य
स्तस्मिन्विशेषधर्मत्यजि भवतु कथं ब्रह्मविद्येति चेन्न ।
सामान्यैर्वर्णधर्मैर्गुणनियतियुतैस्तस्माद्धि तत्रापि साङ्गा
भीष्मादौ दृष्टमेतच्च्युति तु वृषले गत्यभावादभावः ॥२०॥

—( अथ तद्भूताधिकरणम् ॥ १० ॥ )—

आरूढो नैष्ठिकादित्रयमथ पतितस्तत्परावर्तनाद्य-
स्तत्रापि ब्रह्मविद्या भवतु सदृक्ता १ तत्तदर्हैस्स्वधर्मैः ।
मैवं यद्यप्यभीच्छन्त्युपपतनमिदं शोधनं चास्त्यनेकं
सर्वार्हं कीर्तनाद्यं तदपि तदुचितो नैव तादृङ्गिनषेधात् ॥२१॥
प्रायश्चित्तं वदन्ति ह्युपपतनमहापातयोर्ब्रह्मयोगं
प्राप्ते पाते प्रमादाद्विदधति मुनयो योगिनां योगमेव ।

१. तद्दशार्हैः. चि. पा ॥

तस्मादारूढपातेऽप्यधिकृतिरिति नाचोदनीयं हि शास्त्रं
यावज्जीवन्तु तन्निष्कृतिरिति नियमस्सूत्रकाराद्यभीष्टः ॥ २२ ॥

यो बालं हन्ति यः स्त्रीं शरणमुपगतं यश्च यो वा कृतघ्नः
प्रायश्चित्तैर्विशुद्धानपि जगदुरिमान् साधुसंस्पृष्ट्यनर्हान्
स्मृत्याचारानुसारादिह च गतिरियं दर्शिता सूत्रकारैः
शास्त्रं नश्शासनीयं यदि भवति सदा संप्लुतो धर्मसेतुः ॥२३॥

ब्रह्मांशत्वे समाने गुणविषमतया शुद्ध्यशुद्धिस्वभावै-
र्देहैर्योगादनुज्ञापरिहरणमपि प्रेक्षणस्पर्शनादेः ।
इत्येवं सूत्रितं प्राक् पुनरिह विविधालेपकक्षोभशान्त्यै
सम्यग्ज्ञातात्मनोऽपि स्वतनुसमुचिताचारतः प्रत्यबोधि ॥२४॥

—( अथ स्वाम्यधिकरणम् ॥ ११ ॥ )—

उद्गीथाद्यावुपास्तिर्भवति हि फलिनो यज्वनैवात्र शक्या
तस्मात्तत्कर्तृकालाविति यदि न परिक्रीतकर्माश्रयत्वात् ।
ऋत्विक्साध्या यथान्ये गुणफलविधयोऽनूद्यते चैवमेषा
शक्यत्वं नाप्युपाधिर्विविधिवलनियतेः स्वामिभृत्यक्रमोत्र ॥२५॥

—( अथ सहकार्यन्तरविध्यधिकरणम् ॥ १२ ॥ )—

मन्तव्यत्वे श्रुते सत्यथ मुनिरिति वागस्तु तस्यानुवादः
कश्चिन्नह्यत्र दृष्टो विधिरिति न पुरा पण्डितत्वस्य लब्धेः ।
ऊहापोहार्हता हि श्रवणमननतोऽनन्तरं पण्डितत्वं
मौनख्यातिः प्रकृष्टे मनन इति विभौ धारणायुक्तिरेषा ॥ २६ ॥

—( अथानविष्काराधिकरणम् ॥ १३ ॥ )—

शिष्टं बाल्येन तिष्ठासनमपि विदुषो बालकृत्यन्तदस्तु
प्राप्तुं बालस्य भावो न तु सुशक इति स्वैरितास्येति चेन्न ।
दुश्चारित्रादमुं नाविरत इति वचस्संनिरुन्धे ह्यतोऽस्मि-
न्माहात्म्यं स्वंनिगूहेदिति मुनिविहिते बाल्यविध्याशयस्स्यात् ॥२७

—( अथ ऐहिकाधिष्ठिताधिकरणम् ॥ १४ ॥ )—

भोगार्थोपासनानां स्वजनकसुकृतैस्तत्क्षणादुद्भवस्स्यात्
स्वर्गादिस्तत्र देहे न घटत इह तु स्वान्तशुद्ध्योपपत्तिः ।
स्नानप्रायत्यनीतिस्तत इति न पुरा विघ्नसम्भावनोक्तेः
कारीर्यादौ तदर्हस्सगुणविरचितेऽप्यस्ति विघ्नः कदाचित् ॥२८॥

—( अथ मुक्तिफलाधिकरणम् ॥ १५ ॥ )—

अस्त्वन्यश्चान्तरायः प्रबलतममिदं सात्त्विकत्यागयुक्तं
कर्म प्रोक्तं निवृत्त्याह्वयमिति सपदि ब्रह्मविद्यां विदध्यात् ।
मैवं तस्माद्बलीयान्यदि भवति परब्रह्मभक्तापराध-
स्तच्छान्तौ तत्प्रसूतिस्स यदि न झटिति स्यात् परोपास्तिलाभः॥

विद्यार्थत्वं क्रियाणां व्यभिचरणवशान्नेति शङ्कापनुत्त्यै
प्रत्यूहानां च तूर्णं प्रशमनमुचितं सर्वदेति प्रसिद्ध्यै ।
निष्प्रत्यूहस्य सद्यः फलमिति च सतां तोषहेतोरमुष्मि-
न्पादान्ते न्यासिधातामनितमविषयौ शास्त्रकर्त्राधिकारौ ॥३०॥

प्रत्यूहस्य प्रसङ्गः क्षम इति परयित्कर्मणां तन्निवृत्त्यै
भोगार्थोपास्तिहेतुप्वयमनुकथितः किं मुधात्रेति चेच्च ।
काम्ये निर्विघ्नबुद्ध्या पतथि मतिरतस्तत्र वैराग्यभूम्ने
तत्प्रत्यूहप्रसक्तिर्भवति फलवती स्याच्च विद्यार्थकाम्यम् ॥३१॥

विद्या कर्माङ्गिका स्यात्प्रततममुखधीश्चोदिता प्राप्त्यभावा
दाख्यानानां च विद्याविधिसविधजुषां तद्विधानार्थतैव ।
विद्या साङ्गोर्ध्वरेतस्स्वपि गृहवति सा यज्ञदानाद्यपेक्षा
शान्त्याद्यर्हो गृहस्थोऽप्यविपदि विदुषोऽप्यन्नशुद्ध्यैव सिद्धिः॥३२

एकं विद्याश्रिमार्थं १विधुरमवियुतं विग्रहाद्दुश्च्युतं न
त्वस्थंगे पुष्टिश्चरित्रकृतिरथ मुनिना चोदिता ध्यानसिद्ध्यै ।

१. विधुरमवियुतं. पा ॥

कर्मप्राधान्यमन्ये निजगदुरपरे मुक्तिमिच्छन्त्यसाध्यां
सर्वे तेऽप्यत्र कर्माङ्गकभजनविधिस्थापनोक्त्या निरस्ताः ॥३४॥
यद्दुःखं वर्तते तत्क्षणभिदुरतया न स्वयत्नोपरोध्यं
नातीतार्थं च यत्नो न च सुपरिहरं भाविदेतौ समग्रे।
दुःखात्यन्तोपरोधे करणविधिरतो व्यर्थ इत्यर्थरम्यं
प्रायश्चित्त्या कृतानां परमकरणतो दुःखसामग्र्यपोहात् ॥३५॥
राजद्विष्टादि सर्पाद्यपि परिहरसि च्छत्रपूर्वं बिभर्षि
प्रायश्चित्तप्रवृत्तौ फलति दुरितमित्येवमीहासहंच्छ।
उत्प्रेक्षारूढभाव्यापजयशममतः स्वोक्तिसाफल्यमिच्छन्
पश्यंश्चाबालतिर्यग्भयचकितगतिं जोषमित्थं जुषस्व ॥३६॥
साध्यं वा साधनं वा स्वविहतविपथैर्दुर्निरूपं वदन्त-
स्तद्वाद किं प्रवृत्ताः किमिति च विदधत्यन्वहं भोजनादीन्।
मुक्तेर्नित्यत्वसिद्ध्या भजनमफलमित्यप्यसत् प्रागसिद्धेः
साध्यास्त्वत्रानुयाज्यास्सकरणदशया नित्यमुक्तिं गृणन्तः ॥३७॥
मोक्षाभावे मुधा स्यात् सपरिकरमिदं साधनं चिन्त्यमानं
मुक्तिश्चेद्भ्रान्तिसिद्धा भ्रम इह भविता यावदात्मस्वरूपम्।
दोषश्चेन्नित्यमुक्तं कथयितुरफलः साधनाध्याय इत्थं
प्रध्वंसात्मा हि मुक्तिर्नयविदभिमता सा तु भावात्मिकान्नः ॥३८॥
सन्तत्यात्मा कपालप्रभृतिबहुविधावस्थयान्यत्र नाशो
धीसङ्कोचप्रणाशो विकसनमतथाभूतमात्रागमात्स्यात्।
मन्यन्तेऽन्ये तु धारावहनमतिनयात् सन्ततिर्मुक्तिबुद्धे-
स्सामग्री चेश्वरेच्छा प्रभृतिसमुदयस्स्यान्नावृत्तिरेवम् ॥३९॥
इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीवङ्कटनाथस्य
वेदान्ताचार्यस्य कृतिषु अधिकरणसारावल्यां
तृतीयस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥
॥ समाप्तश्चाध्यायः ॥ ३ ॥
श्रीमते निगमान्तगुरवे नमः

—( अथ चतुर्थस्याध्यायस्य प्रथमः पादः ॥ )—

## उपोद्घातः ॥

इत्युत्पत्तिक्रमेण प्रथममभिहतो मुक्त्युपायस्सहाङ्गै-
स्तत्साध्यं सूत्रकारः फलमथ विदुषः पर्वभेदैर्व्यनक्ति ।
स्थूले देहेऽस्य सिद्ध्येद्यदिह वदति तत् पादयुग्मेन पूर्वं
निष्क्रान्तस्याथ यत्स्यात् परिगणयति तत् पादयुग्मान्तरेण ॥१॥

उक्ता प्रागेव विद्या किमिति पुनरिमां वक्ति यद्यस्ति शेषं
भूतामेतच्च पूर्वं नहि तदिह फले संघटेतेतिचेन्न ।
मुक्त्यैश्वर्यैरसिद्धिं प्रकृततदविनाभावमासन्नसिद्धिं
मुक्तावस्थासमं च स्थिरभजनरसं व्यङ्क्तुमत्रानुबन्धः ॥ २ ॥

### आवृत्त्यधिकरणम् ॥ १ ॥

शुद्धैरुत्कृष्टधर्मैस्सदनपचरणे ब्रह्मविद्या भवित्री-
त्युक्तं पूर्वाधिकारे विमृशति तु परं तत्स्वरूपं यथावत् ।
प्रत्यक्षं वा स्मृतिर्वा सकृदिदमसकृद्वेति नोक्तं पुरस्ता-
द्यावज्जीवानुवृत्तिप्रभृति च तदिहापौनरुक्त्यं सुबोधम् ॥३॥

ध्यानं मुक्तेरुपायः श्रुतिभिरभिहितं तस्य संख्या त्वनुक्ता
सौकर्यं स्यात् सकृत्त्वे स्यत इह च भवेच्चार्थिताथ्यं विधीनाम् ।
सम्यक्त्वेत्तद्ध्रुवत्वं न पुनरनुगमान् प्रोक्तमित्यप्यसारं
सामान्योक्तेर्विशेषे सति पशुनयनस्तत्र विश्रान्तिसिद्धेः ॥४॥

किंचाग्नेय्यादिनेत्या विदिरिह वदति ध्यानशब्दार्थमेव
ध्याने चोपासनोक्तिः परभजनतया वक्ति सैवात्मकत्वम् ।
ऐकार्थ्यं विद्युपास्योर्व्यभिचरिततया श्रूयते च प्रयोगः
कार्ये हेतौ च भक्तेः क्वचिदुपचरितो भक्तिभेदत्वयादः ॥५॥

